(941) **" ध्वन शब्दे "** (X-चुरादिः-1890. अक. सेट्. उभ. अदन्तः।)

' ध्वनयेदित्यदन्तस्य ध्वनेः शब्दे ध्वनेत् शपि ॥' (श्लो. 126) इति **देवः** ।

ध्वनकः-निका, दिध्वनयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि **चौरादिककृपयतिवत्** (251) ज्ञेयानि ।

(942) **" ध्वन्सु अवस्रंसने गतौ च "**

(I-भ्वादिः 755. सक. सेट्. आत्म.)

ध्वंसकः-सिका, ध्वंसकः-सिका, दिध्वंसिषकः-षिका, [1]दनीध्वसकः-सिका ;
ध्वंसिता-त्री, ध्वंसयिता-त्री, दिध्वंसिषिता-त्री, दनीध्वसिता-त्री ;
— ध्वंसयन्-न्ती, ध्वंसयिष्यन्-न्ती-ती ; —
ध्वंसमानः, ध्वंसयमानः, दिध्वंसिषमाणः, दनीध्वस्यमानः ;
ध्वंसिष्यमाणः, ध्वंसयिष्यमाणः, दिध्वंसिषिष्यमाणः, दनीध्वसिष्यमाणः ;
[2]पर्णध्वत्-पापध्वत्-पापध्वसौ-पापध्वसः ; — — —
[3]ध्वस्तम्-[A]ध्वस्तः ध्वस्तवान्, [B]ध्वंसितः, दिध्वंसिषितः, दनीध्वसितः ;
ध्वंसः, ध्वंसः, दिध्वंसिषुः, दनीध्वंसः ;
ध्वंसितव्यम्, ध्वंसयितव्यम्, दिध्वंसिषितव्यम्, दनीध्वसितव्यम् ;
ध्वंसनीयम्, ध्वंसनीयम्, दिध्वंसिषणीयम्, दनीध्वसनीयम् ;
ध्वंस्यम्, ध्वंस्यम्, दिध्वंसिष्यम्, दनीध्वस्यम् ;
ईषद्ध्वंसः-दुर्ध्वंसः-सुध्वंसः ; — —
ध्वस्यमानः, ध्वंस्यमानः, दिध्वंसिष्यमाणः, दनीध्वस्यमानः ;
ध्वंसः, ध्वंसः, दिध्वंसिषः, दनीध्वसः ;
ध्वंसितुम्, ध्वंसयितुम्, दिध्वंसिषितुम्, दनीध्वसितुम् ;

1. यङन्ते सर्वत्र, 'नीग्वञ्चुस्रंसुध्वंसु—' (7-4-84) इत्यादिना अभ्यासस्य नीगागमः । उपधानकारस्य यङ्निमित्तको लोपः ।
2. क्विपि पदान्तनिमित्तकः, 'वसुस्रंसुध्वंस्वनडुहां दः' (8-2-72) इति सकारस्य दकारः । चर्त्वम् ।
3. क्त्वायामिड्विकल्पनात्, निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्निषेधः । उपधानकारलोपः ।

A. '**ध्वस्ता**न्धकारेऽपि पुरे पूर्णेन्दोः सन्निधिः सदा ॥' भ. का. 5. 27.
B. 'स्निग्धाञ्जनश्यामरुचिः सुवृत्तो वध्वा इवा**ध्वंसित**वर्णकान्तेः ।' शि. पा. 3. 63.



[1]ध्वस्तिः, ध्वंसना, दिध्वंसिषा, दनीध्वसा ;
ध्वंसनम्, ध्वंसनम्, दिध्वंसिषणम्, दनीध्वसनम् ;
[2]ध्वंसित्वा-ध्वस्त्वा, ध्वंसयित्वा, दिध्वंसिषित्वा, दनीध्वसित्वा ;
प्रध्वस्य, प्रध्वंस्य, प्रदिध्वंसिष्य, प्रदनीध्वस्य ;
ध्वंसम् २, ध्वंसित्वा २, ध्वस्त्वा २, } ध्वंसम् २, ध्वंसयित्वा २, } दिध्वंसिषम् २, दिध्वंसिषित्वा २, } दनीध्वसम् २ ; दनीध्वसित्वा २. }

(943) **" ध्वाक्षि घोरवाशिते च "** (I-भ्वादिः-672. अक. सेट्. पर.)

चकारात् '**काङ्क्षायाम्**' इति पूर्वधातुगतोऽर्थनिर्देशोऽत्रापि सम्बध्यते ।

ध्वाङ्क्षकः-क्षिका, ध्वाङ्क्षकः-क्षिका, दिध्वाङ्क्षिषकः-षिका, दाध्वांक्षकः-क्षिका ; इत्यादीनि सर्वाण्यपि रूपाणि **काङ्क्षतिवत्** (183) ज्ञेयानि । अचि [A]ध्वाङ्क्षः इति ।

(944) **" ध्वृ हूर्च्छने "** (I-भ्वादिः-939. सक. अनि. पर.)

" **हूर्च्छनम्**=कौटिल्यम् । 'भ्रातृव्यमेव **तदपध्वरति** ।' इत्यादौ हिंसायामपि दृश्यते ।" इति **मा. धा. वृत्तिः** ।

ध्वारकः-रिका, ध्वारकः-रिका, [3]दुध्वूर्षकः-र्षिका, [4]दाध्वरकः-रिका ;
ध्वर्ता-ध्वर्त्री, ध्वारयिता-त्री, दुध्वूर्षिता-त्री, दाध्वरिता-त्री ;
ध्वरन्-न्ती, ध्वारयन्-न्ती, दुध्वूर्षन्-न्ती ; —
[5]ध्वरिष्यन्-न्ती-ती, ध्वारयिष्यन्-न्ती-ती, दुध्वूर्षिष्यन्-न्ती-ती ; —

1. 'गुरोश्च हलः' (3-3-103) इत्यकारप्रत्ययं बाधित्वा, 'क्तिन् आबादिभ्यो निष्ठायामनिड्भ्यः' (वा. 3-3-94) इति क्तिन् ।
2. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः । इट्पक्षे 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधात् उपधानकारलोपो न ।
3. सनि, 'अज्झनगमां सनि' (6-4-16) इति दीर्घे, 'उदोष्ठ्यपूर्वस्य' (7-1-102) इत्युत्वे, रपरत्वे, 'हलि च' (8-2-77) इति दीर्घः ।
4. संयोगादित्वात्, 'यङि च' (7-4-30) इति गुणः । अभ्यासकार्यम् । 'दीर्घोऽकितः' (7-4-83) इत्यभ्यासस्य दीर्घः ।
5. स्यप्रत्यये, 'ऋद्धनोः स्ये' (7-2-70) इतीडागमः ।

A. 'द्राक्षां जनो वाञ्छति नो फलानि ध्राङ्क्षद्बहु**ध्वाङ्क्ष**विचूषितानि ॥' धा. का. 1. 85.

— ध्वारयमाणः, ध्वारयिष्यमाणः, — दाध्वर्यमाणः, दाध्वरिष्यमाणः ;

| | | | |
|---|---|---|---|
| [1]प्रध्वृत्-प्रध्वृद्-प्रध्वृतौ-प्रध्वृतः ; | | — | — |
| ध्वृतम्-[A]विध्वृतः, | ध्वारितः, | दुध्वूर्षितः, | दाध्वरितः-तवान् ; |
| [2]ध्वरः, [3]दध्वरिवान्, | ध्वारः, | दुध्वूर्षुः, | दाध्वरः ; |
| ध्वर्तव्यम्, | ध्वारयितव्यम्, | दुध्वूर्षितव्यम्, | दाध्वरितव्यम् ; |
| ध्वरणीयम्, | ध्वारणीयम्, | दुध्वूर्षणीयम्, | दाध्वरणीयम् ; |
| ध्वार्यम्, [4]ध्वर्यः, | ध्वार्यम्, | दुध्वूर्ष्यम्, | दाध्वर्यम् ; |
| ईषद्ध्वरः-दुर्ध्वरः-सुध्वरः ; | | — | — |
| [5]ध्वर्यमाणः, | ध्वार्यमाणः, | दुध्वूर्ष्यमाणः, | दाध्वर्यमाणः ; |
| ध्वारः, | ध्वारः, | दुध्वूर्षः, | दाध्वरः ; |
| ध्वर्तुम्, | ध्वारयितुम्, | दुध्वूर्षितुम्, | दाध्वरितुम् ; |
| ध्वृतिः, | ध्वारणा, | दुध्वूर्षा, | दाध्वरा ; |
| ध्वरणम्, | ध्वारणम्, | दुध्वूर्षणम्, | दाध्वरणम् ; |
| ध्वृत्वा, | ध्वारयित्वा, | दुध्वूर्षित्वा, | दाध्वरित्वा ; |
| प्रध्वृत्य, | प्रध्वार्य, | प्रदुध्वूर्ष्य, | प्रदाध्वर्य ; |
| ध्वारम् २, ध्वृत्वा २, | ध्वारम् २, ध्वारयित्वा २, | दुध्वूर्षम् २, दुध्वूर्षित्वा २, | दाध्वरम् २ ; दाध्वरित्वा २. |

(945) **"नक्क नाशने"** (X-चुरादिः-1593. सक. सेट्. उभ.)

'णक्क—' इति णोपदेशममुं धातुं **क्षीरस्वामी** पपाठ। णोपदेशधातुषु अस्य पर्युदासात् णोपदेशकार्यं नेति ज्ञेयम्।

नक्ककः-क्किका, निनक्कयिषकः-षिका, [6]प्रनक्कयिता-त्री, इत्यादीनि सर्वाण्यपि

1. क्विपि, तुगागमः। एवं ल्यप्यपि ज्ञेयम्।
2. पचाद्यचि रूपमेवम्। न **ध्वरः** = हिंसा कौटिल्यं वा यत्रेति **अध्वरः** = यज्ञः।
3. क्वसुप्रत्यये, 'वस्वेकाजाद्घसाम्' (7-2-67) इतीडागमे च रूपमेवम्।
4. 'छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्या**ध्वर्य**—' (3-1-123) इति निपातनात् यत्प्रत्यये रूपम्। छन्दस्येवायम्।
5. 'गुणोऽर्ति**संयोगाद्योः**' (7-4-29) इति यकि गुणः।
6. नकारादित्वात्, णोपदेशाभावादस्य धातोः 'उपसर्गादसमासेऽपि णोपदेशस्य' (8-4-14) इति विहितं णत्वं न।

A. 'घृणाऽस्तु ते **विध्वृत**शूरदैत्यसुतास्रसिक्तायुधविश्वसोत: ॥' धा. का. 2. 34.



रूपाणि चौरादिककुट्टयतिवत् (207) ज्ञेयानि। दोपधोऽयं धातुः। दकारस्य सन्धिवशात् ककारः। दोपधफलं तु नद्-नत्-नक्कौ-नक्कः, इति क्विपि द्रष्टव्यम्।

(946) **"नट अवस्पन्दने"** (X-चुरादिः-1545. अक. सेट्. उभ.)

अयं धातुः पूर्वम् (658 संख्याकधातौ) प्रसङ्गाल्लिखितः। तत्रैव द्रष्टव्यश्च।

(947) **"नट भाषार्थः"** (X-चुरादिः-1792. अक. सेट्. उभ.)

**आस्वदीयः**। '**नल**—' इति, '**नड**—' इति च **केचित्**।

'नृतौ नटत्यवस्पन्दे चुरादेर्णिचि **नाटयेत्**।' (श्लो. 76) इति **देवः**।

नाटकः-टिका, निनाटयिषकः-षिका ; इत्यादीनि रूपाणि चौरादिकनाटयतिवत् (659) ज्ञेयानि।

(948) **"टु नदि समृद्धौ"** (I-भ्वादिः-67. अक. सेट्. पर.)

नन्दकः-न्दिका, नन्दकः-न्दिका, निनन्दिषकः-षिका, नानन्दकः-न्दिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककन्दतिवत् (163) ज्ञेयानि। [1]नन्दः,[A] [2]नन्दनः, [3]नन्दकः,[B] [4]रघुनन्दनः,[C] [5]हरिनन्दी, परिनन्दनम्, [6]नन्दथुः,[D] [7]नन्दयित्नुः,

1. पचाद्यचि (3-1-134) रूपमेवम्। नन्दतीति **नन्दः**। नन्द एव **नान्दः** प्रज्ञादित्वात् (5-4-38) स्वार्थेऽण्। अणन्तात् ङीपि **नान्दी** = मङ्गलध्वनिः।
2. ण्यन्तात् नन्दयतीति **नन्दनः**। '**नन्दि**ग्रहि—' (3-1-134) इति कर्तरि ल्युप्रत्ययः। कर्मण्यणोऽपवादः।
3. नन्दतात् इति **नन्दकः**। 'आशिषि च' (3-1-150) इति वुन्। 'आशिषि च' (वा. 7-3-45) इति निषेधात् स्त्रियाम् इत्वं न, तेन **नन्दका** इत्येव।
4. रघूणां नन्दयिता **रघुनन्दनः**। क्षुभ्नादित्वात् (8-4-39) णत्वं न।
5. हरिं नन्दतीति **हरिनन्दी**, 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः। अत्र, **परिनन्दनम्** इत्यत्र च क्षुभ्नादित्वादेव (8-4-39) णत्वं न।
6. 'ट्वितोऽथुच्' (3-3-89) इति भावादावथुच्प्रत्ययः।
7. औणादिकः [द. उ. 1-140] इत्नुच्प्रत्ययो ण्यन्तात् भवति। नन्दयतीति **नन्दयित्नुः** आनन्दः, प्रमुदितश्च। 'अयामन्ताल्वाय्येत्न्विष्णुषु' (6-4-55) इति णेरयादेशः।

A. 'मनोज्ञगण्डं तमनिन्दिताननं **नन्दात्मजं** शारदचन्द्रशीतलम्।' धा. का. 1. 10.

B 'अत्यर्थमुद्वेजयिता परेषां नाम्नाऽपि तस्यैव स **नन्दको**ऽभूत् ॥' शि. पा. 3. 19

C. 'तृणाय मत्वा **रघुनन्दनो**ऽथ बाणेन रक्षः प्रधनान्निरास्थत् ॥' भ. का. 2. 36,

D. 'सारोऽसाविन्द्रियार्थानां यस्यासौ तस्य **नन्दथुः**।' भ. का. 5: 20.

[1]ननान्दा, [2]नन्दयन्तः इत्यादीन्यस्य धातोरधिकतया विशेषरूपाणि सम्भवन्तीति ज्ञेयम् ।

(949) " **नर्द शब्दे** " (I-भ्वादिः-56. अक. सेट्. पर.)

नर्दकः-र्दिका, नर्दकः-र्दिका, निनर्दिषकः-षिका, नानर्दकः-र्दिका ;

इत्यादीनि रूपाणि भौवादिककर्जतिवत् (169) ज्ञेयानि । [3]गेहेनर्दी, [4]सिंहनर्दी,[A] विनर्दन्[B] ।

(950) " **नाथृ याच्ञोपतापैश्वर्याशीःषु** "

(I-भ्वादिः-6. सक. सेट्. आत्म.)

**उपतापः**=ज्वरप्रयुक्ता पीडा । **ऐश्वर्यम्**=सम्पत्तिः । **आशीः**= आशासनम् । आशीरर्थ एव आत्मनेपदम् । अन्येष्वर्थेषु परस्मैपदमेव । द्विकर्मकोऽयं याच्ञार्थे ।

[C]नाथकः-थिका, नाथकः-थिका, निनाथिषकः-षिका, नानाथकः-थिका ;
नाथिता-त्री, नाथयिता-त्री, निनाथिषिता-त्री, नानाथिता-त्री ;
[5]नाथन्-न्ती, नाथयन्-न्ती, निनाथिषन्-न्ती ; —
नाथिष्यन्-न्ती-ती, नाथयिष्यन्-न्ती-ती, निनाथिषिष्यन्-न्ती-ती ; —
[6][सर्पिषो]नाथमानः, नाथयमानः, निनाथिषमाणः, नानाथ्यमानः ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकगाधतिवत् (391) ज्ञेयानि ।

---

1. '**नञि च नन्देः**' [द. उ. 2. 6.] इति ऋन्प्रत्ययः वृद्धिश्च । न नन्दतीति **ननान्दा**=पत्युर्भगिनी ।
2. 'तृभूवहि—' [द. उ. 6. 19] इत्यादिना आशिषि झच्प्रत्ययः षिच्च । नन्द्यात् इत्याशीरर्थे **नन्दयन्तः** इति रूपम् आनन्द इत्यर्थः ।
3. 'सुप्यजातौ णिनिस्ताच्छील्ये' (3-2-78) इति ताच्छील्ये णिनिः । 'पात्रेसमितादयश्च' (2-1-48) इत्यत्र निपातनात् क्षेपार्थे तत्पुरुषसमासः सप्तम्या अलुक् च ।
4. 'कर्तर्युपमाने' (3-2-79) इति उपमानवाचकोपपदात् णिनिप्रत्ययः ।
5. याच्ञाभिन्नार्थे 'शेषात् कर्तरि परस्मैपदम्' (1-3-78) इति परस्मैपदं, शता ।
6. 'आशिषि **नाथः**' (वा. 1-3-21) इत्यात्मनेपदम्, 'आशिषि **नाथः**' (2-3-55) इति कर्मणि षष्ठी ।

A. 'शूरम्मन्यो रणाच्चाहं निरस्तः **सिंहनर्दिना** ॥' भ. का. 5. 34.
B. 'कष्टं **विनर्दतः** क्रूरान् शस्त्रघुष्टकरान् कपिः ॥' भ. का. 9. 18.
C. 'द्रक्ष्यन् हरिं नाधितलोक**नाथकं** देधे मुदास्कुन्दितमन्तरिन्द्रियम् ॥' धा. का. 1.2.



(951) " **नाधृ याच्ञोपतापैश्वर्याशीःषु** "

(I-भ्वादिः-7-अक. सेट्. आत्म.)

नाधकः-धिका, नाधकः-धिका, निनाधिषकः-षिका, नानाधकः-धिका ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकगाधतिवत् (394) ज्ञेयानि । [A]नाधितः ।

(952) " **निवास आच्छादने** "

(X-चुरादिः-1886. सक. सेट्. उभ.) **अदन्तः** । [अ]

निवासकः-सिका, निनिवासयिषकः-षिका ; निवासयिता-त्री,
निनिवासयिषिता-त्री ; निवासयन्-न्ती, निनिवासयिषन्-न्ती ;
निवासयिष्यन्-न्ती-ती, निनिवासयिषिष्यन्-न्ती-ती ; निवासयमानः,
निनिवासयिषमाणः ; निवासयिष्यमाणः, निनिवासयिषिष्यमाणः ;
[1]सुनिवास्-सुनिवासौ-सुनिवासः ; — —
[B]निवासितम्-तः, निनिवासयिषितः-तवान् ; निवासः, निनिवासयिषुः ;
निवासयितव्यम्, निनिवासयिषितव्यम् ; निवासनीयम्, निनिवासयिषणीयम् ; निवास्यम्, निनिवासयिष्यम् ; निवासयमानः, निनिवासयिषमाणः ;
ईषन्निवासः-दुर्निवासः-सुनिवासः ; — —
निवासः, निनिवासयिषः ; निवासयितुम्, निनिवासयिषितुम् ;
निवासना, निनिवासयिषा ; निवासनम्, निनिवासयिषणम् ;
निवासयित्वा, निनिवासयिषित्वा ; प्रणिवास्य, प्रणिनिवासयिष्य ;

---

1. क्विपि, अदन्तत्वादस्य धातोरल्लोपस्य स्थानिवद्भावात् सकारस्य रुत्वविसर्गौ न भवतः ।

A. 'द्रक्ष्यन् हरिं **नाधित**लोकनाथकं देधे मुदास्कुन्दितमन्तरिन्द्रियम् ॥' धा. का. 1.2.
B. 'छिद्रं गवेषयितुमेव तु वासयन्ते ये ते **निवासित**धियो ह्यसुभिर्विभाज्याः ॥' धा. का. 3. 56.

[अ] अत्र धातौ '**नि**' इत्युपसर्गविशिष्टस्यैव धातुत्वम्, इति **क्षीरस्वामि**मतम् । 'पूर्वं धातुरुपसर्गेण युज्यते' इति **भाष्य**मतेनैवमुक्तम् । तन्मते **निवासयित्वा** इत्यत्र क्त्वाप्रत्ययस्योपपत्तिश्चिन्त्या । वस्तुतस्तु '**सङ्ग्राम, व्यय, वीर**' इत्यादिषु '**सम्, वि**' इत्युपसर्गयोरिव अत्रापि '**नि**' इत्युपसर्गविशिष्टस्यैव धातुत्वम् । अत्र प्रकृतिप्रत्ययोपसर्गादिविभागरहितः '**निवास**' इत्यानुपूर्वीक एव धातुरिति तत्त्वम् । अन्यथा, 'पूर्वं धातुः साधनेन युज्यते' इति 'सुट् कात् पूर्वः' (6-1-135) इति सूत्र**भाष्ये** सिद्धान्तितस्य विरोधस्स्यात् । अत एवाडागमयोग्येषु लकारेष्वपि **अनिवासयिष्यत्** इत्याद्येव रूपम् ।

निवासम् २, निवासयित्वा २, } निनिवासयिषम् २ ; निनिवासयिषित्वा २. }

**(953) " निष्क परिमाणे "** (X-चुरादिः-1687. सक. सेट्. आत्म.)

आकुस्मीयः ।

निष्ककः-ष्किका, निनिष्कयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिकचित्रयतिवत् (525) ज्ञेयानि । [A]निष्कितम् ।

**(954) " नृती गात्रविक्षेपे "** (IV-दिवादिः-1116. अक. सेट्. पर.)

नर्तकः-र्तिका, नर्तकः-र्तिका, निनृत्सकः-निनर्तिषकः-षिका, [1]नरीनृतकः-तिका ; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिककृन्ततिवत् (248) ज्ञेयानि ।

[2]नृत्यन्-न्ती, [B]नर्त्स्यन्-न्ती-ती, [3]नर्तकः-[C]नर्तकी, [4]नर्तयमानः,[D] [5]नर्तनः, [6]नृतूः ।

**(955) " नॄ नये "** (IX-क्र्यादिः-1495. अक. सेट्. पर.)

**प्वादिः. ल्वादिः, घटादिश्च ।**

नारकः-रिका, नरकः-रिका, निनरिषकः-निनरीषकः-निनीर्षकः-षिका,

---

1. क्षुभ्नादिषु (8-4-39) '**नृत्यतेर्यङि**' (ग. सू.) इति पाठात् णत्वनिषेधः ।
2. शतरि, '**दिवादिभ्यः**' (3-1-69) इति श्यन्प्रत्यये रूपम् ।
3. 'शिल्पिनि ष्वुन्' (3-1-145) इत्यत्र '**नृति**खनिरञ्जिभ्य एव' (वा. 3-1-145) इति परिगणनादस्मात् ष्वुन्प्रत्यये रूपम् । षित्त्वात् स्त्रियां ङीप् ।
4. अस्य धातोः चलनार्थत्वात्, अणावकर्मकत्वाच्च, ण्यन्तात् क्रमेण 'निगरणचलनार्थेभ्यः —' (1-3-87) इति, 'अणावकर्मकाच्चित्तवत्कर्तृकात्' (1-3-88) इति च यत् परस्मैपदं कर्त्रभिप्राये क्रियाफले प्राप्तम्, तत् 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः' (1-3-89) इति निषिध्यते । तेन शता न भवति । परगामिनि क्रियाफले तु 'णिचश्च' (1-3-74) इति, 'शेषात् कर्तरि—' (1-3-78) इति च उभयपदं भवत्येव । तेन **नर्तयन्** इत्यपि साधुः ।
5. 'चलनशब्दार्थादकर्मकात्—' (3-2-148) इति तच्छीलादिषु कर्तृषु युच् भवति ।
6. '**नृति**शृध्योः कूः' [द. उ. 1-174] इति कूप्रत्यये रूपम् । **नृतूः**=दीर्घाकृतिः, नर्तकः, क्रिमिविशेषो वा ।

A. 'क्षिष्ण्येत निष्कृपम**निष्कित**कान्तिरेष
बालोऽमुना नृपतिलालनयाऽद्य कष्टम् ॥' धा. का. 3. 34.

B. 'वनं चचार कर्तिष्यन् **नर्त्स्यन्** इव निरङ्कुशः ॥' भ. का. 9. 42.

C. '**नर्तकी**रभिनयातिलङ्घिनीः पार्श्ववर्तिषु गुरुष्वलज्जयत् ॥' रघु. 19. 14.

D. 'अवाद् वायुः शनैर्यस्यां लतां **नर्तयमान**वत् ।' भ. का. 8. 61.



नेनिरकः-रिका ; इत्यादीनि सर्वाण्यपि रूपाणि क्र्यादिकदृणातिवत् (868) ज्ञेयानि । पचाद्यचि—नरः-[1]नारी । [2]विश्वानरः ।

**(956) " पक्ष परिग्रहे "** (X-चुरादिः-1550. सक. सेट्. उभ.)

पक्षकः-क्षिका, पिपक्षयिषकः-षिका ; पक्षयिता-त्री ; पिपक्षयिषिता-त्री ; पक्षयन्-न्ती, पिपक्षयिषन्-न्ती ; पक्षयिष्यन्-न्ती-ती, पिपक्षयिषिष्यन्-न्ती-ती ; पक्षयमाणः, पिपक्षयिषिष्यमाणः ; पक्षयिष्यमाणः, पिपक्षयिषिष्यमाणः, [3]सुपक्-सुपक्षौ-सुपक्षः ; पक्षितम्-तः, पिपक्षयिषितः-तवान् ; पक्षः, पिपक्षयिषुः ; पक्षयितव्यम्, पिपक्षयिषितव्यम् ; पक्षणीयम्, पिपक्षयिषणीयम् ; पक्ष्यम्, पिपक्षयिष्यम् ; ईषत्पक्षः-दुष्पक्षः-सुपक्षः ; पक्ष्यमाणः, पिपक्षयिष्यमाणः ; पक्षः, पिपक्षयिषः ; पक्षयितुम् ; पिपक्षयिषितुम् ; पक्षणा, पिपक्षयिषा ; पक्षणम्, पिपक्षयिषणम् ; पक्षयित्वा, पिपक्षयिषित्वा ; [A]संपक्ष्य, प्रपिपक्षयिष्य ; पक्षम् २-पक्षयित्वा २ ; पिपक्षयिषम् २-पिपक्षयिषित्वा २.

**(957) " डु पचष् पाके "** (I-भ्वादिः-996. सक. अनि. उभ.)

पाचकः-चिका, पाचकः-चिका, [4]पिपक्षकः-क्षिका, [5]पापचकः-चिका ; [6]पक्ता-त्री, पाचयिता-त्री, पिपक्षिता-त्री, पापचिता-त्री ; पचन्-न्ती, पाचयन्-न्ती, पिपक्षन्-न्ती ; — [7]प्रणिपक्ष्यन्-प्रनिपक्ष्यन्-[व्रजति]-न्ती-ती, पाचयिष्यन्-न्ती-ती, पिपक्षिष्यन्-न्ती-ती ;

---

1. स्त्रियाम्, '**नृनरयो**र्वृद्धिश्च' (ग. सू. 4-1-73) इति ङीन् वृद्धिश्च ।
2. '**नरे** संज्ञायाम्' (6-3-129) इति पूर्वपदभूतस्य विश्वशब्दस्य दीर्घः ।
3. ण्यन्तेऽत्र क्विपि संयोगान्तलोप एव । न तु संयोगादिलोपः । तेन रूपमेवम् ।
4. सन्नन्ताण्ण्वुलि, 'चोः कुः' (8-2-30) इति कुत्वे, षत्वे च रूपम् । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
5. यङन्ते सर्वत्र, 'दीर्घोऽकितः' (7-4-83) इत्यभ्यासदीर्घः ।
6. तृजादिषु सर्वत्र 'चोः कुः' (8-2-30) इति कुत्वं ज्ञेयम् ।
7. 'लृट् शेषे च' (3-3-13) इति लृडत्र भविष्यति काले; 'पक्ष्यामीति व्रजति' इत्यर्थः । 'शेषे विभाषा—' (8-4-18) इति नेर्णत्वविकल्पः ।

A. '**संपक्ष्य** तन्निजदशैवमवर्णि लोकैरेषोऽजनिष्ट किल दुष्टविचूर्णनार्थम् ।'
धा. का. 3. 15.

पचमानः, पाचयमानः, पिपक्षमाणः, पापच्यमानः ;
पक्ष्यमाणः, पाचयिष्यमाणः, पिपक्षिष्यमाणः, पापचिष्यमाणः ;
[1]ओदनपक्-पचौ-पचः ; — —
[2]पक्वम्-पक्वः-पक्ववान् , [3]प्रपक्वानि [फलानि], पाचितः, पिपक्षितः,
पापचितः-तवान् ;
[4]पचः, [5]श्वपचः, [6]दूरेपाकः-अक्षेपाकः, फलेपाकः-क्षणेपाकः-का, [7]दूरेपाकुः-फलेपाकुः, [8]पचनः, [9]श्वपाकः-मांसपाकः ओदनपाचः, कपोतपाकः, पिण्डपाकः, मूलपाकः-उलूकपाकः, [10]प्रस्थंपचः-[A]खारिम्पचः-द्रोणंपचः, [11]मितम्पचः[B]-[C]नखम्पचः, [12]अल्पम्पचः,[D]

---

1. ओदनं पचतीति **ओदनपक्** । ‘ क्विप् च ’ (3-2-76) इति कर्मण्युपपदे क्विप् । ‘ अनुनासिकस्य क्विझलोः —’ (6-4-16) इत्यत्र **काशिकायामु**दाहृतमेवम् ।
2. ‘ **पचो** वः ’ (8-2-52) इति निष्ठातकारस्य वकारः । वकारस्यासिद्धत्वात् झल्परत्वम् । तेन, ‘ चोः कुः ’ (8-2-30) इति कुत्वं भवतीति ज्ञेयम् ।
3. ‘ **प्रपक्वानि** ’ इत्यत्र ‘कुमति च ’ (8-4-13) इति प्राप्तं णत्वम्, ‘युवादीनां प्रतिषेधः ’ (वा. 8-4-11) इत्यनेन न भवति ।
4. ‘नन्दिग्रहि**पचादिभ्यः**—’ (3-1-134) इति, अच्प्रत्ययः ।
5. **पचादिषु** (3-1-134) पाठादत्र कर्मण्यणं बाधित्वा कर्तरि, अच्प्रत्ययः ।
6. अत्र सर्वत्र, **पचादिषु** पाठादचि, वृद्धौ, तथा न्यङ्क्वादिषु (7-3-53) पाठात् कुत्वे च रूपम् ।
7. न्यङ्क्वादिषु (7-3-53 पाठात् कुत्वम् , **पचादि**ष्वेव पाठादुप्रत्ययश्च ।
8. नन्द्यादिषु (3-1-134) पाठात् कर्तरि ल्युप्रत्ययः इति **केचित्** ।
9. ‘ अणपीष्यते ’ इति **क्षीरतरङ्गिण्या**मुक्तम् । तदानीमत्र कुत्वं न्यङ्क्वादित्वात ज्ञेयम् । वस्तुतस्तु ‘ कर्मण्यण् ’ (3-2-1) इत्यत्र **भाष्ये ‘ ओदनपाचः ’** इति प्रयुक्तत्वात् अण्विषये कुत्वं नेति ज्ञायते ।
10. ‘ परिमाणे **पचः** ’ (3-2-33) इति खश्प्रत्यये मुमि च रूपमेवम् । एवं परिमाणवाचकेषु सर्वेष्वपि उपपदेषु खश् ज्ञेयः ।
11. ‘ मितनखे च ’ (3-2-34) इति खशि मुमागमः ।
12. ‘ मितनखे च ’ ‘(3-2-34) इत्यत्र मितशब्देन मितपर्यायाणामपि ग्रहणमिति मते ‘ **अल्पम्पचः** ’ इत्यत्र खशि मुमागमो ज्ञेयः ।

A. ‘ **खारिम्पचा**मत्र **विपक्व**मन्नं विष्वण्य सुष्वाप स रक्षिवर्गः ॥’ वा. वि. 3. 4.
B. ‘ **अमितम्पच**मीशानं सर्वभोगीणमुत्तमम् ।’ भ. का. 6. 97
C. ‘ **नखम्पचो**ष्णं नलिनेक्षणानामुरोजमेवातितरामुपास्ते ॥ ’ च. भारते. 4. 56.
D. ‘ ऐव विद्वन् पितुः कामात् पान्ता**वल्पंपचान्** मुनीन् ॥ ’ भ. का. 6. 97.



[1]उत्पचिष्णुः, [2]पचेलिमाः[A] [शालयः],
[3]किम्पचानः, [4]पेचिवान् , पाचः, पिपक्षुः, पापचः ;
पक्तव्यम् , पाचयितव्यम् , पिपक्षितव्यम् , पापचितव्यम् ;
पचनीयम् , पाचनीयम् , पिपक्षणीयम् , पापचनीयम् ;
[5]पाक्यम्[B], [6]कृष्टपच्यम् ,[C] कृष्टपाक्यम् , [7]अवश्यपाक्यम् ,
पाच्यम् , पिपक्ष्यम् , पापच्यम् ;
ईषत्पचः-दुष्पचः-सुपचः ; — —
पच्यमानः, पाच्यमानः, पिपक्ष्यमाणः, पापच्यमानः ;
[8]पाकः, [9]मांसपाकः-मांस्पाकः, [10]पक्त्रिमम्,[D] पाचः, पिपक्षः, पापचः ;

---

1. ‘ अलङ्कृञ्निराकृञ्प्रज**नोत्पच**—’ (3-2-136) इत्यादिना तच्छीलादिषु कर्तृषु इष्णुच्प्रत्ययः ।
2. ‘ केलिमर उपसंख्यानम् ’ (वा. 3-1-96) इति केलिमर्प्रत्यये रूपम् । कर्मकर्तर्येवायं प्रत्यय इति **वृत्तिकारादयः** । अविशेषात् भावकर्मणोरेवेति **दीक्षितादयः** ।
3. किम्शब्दे उपपदे, ‘ ताच्छील्यवयोवचनशक्तिषु चानश् ’ (3-2-129) इति चानशि, बाहुलकात् मुमागमाभाव इति **अमरव्याख्यायां भानुजीदीक्षितः** ।
4. कर्तरि लिटः क्वसौ, ‘ वस्वेकाजाद्घसाम् ’ (7-2-67) इतीडागमे , ‘ अत एकहल्मध्येऽनादेशादेर्लिटि ’ (6-4-120) इत्येत्वाभ्यासलोपयो रूपम् ।
5. निष्ठायामस्य धातोरनिट्त्वेन ण्यति, ‘ चजोः कु घिण्ण्यतोः ’ (7-3-52) इत्यनेन कुत्वम् ।
6. ‘ राजसूयसूर्यमृषोद्यरुच्य**कृष्टपच्या**व्यथ्याः ’ (3-1-114) इत्यनेन यत्प्रत्यये कर्मकर्तरि **कृष्टपच्यः** इति निपात्यते । कृष्टे ये स्वयमेव पच्यन्ते केचन व्रीहिविशेषाः ते **कृष्टपच्याः** । अन्यत्र **कृष्टपाक्यः** इत्येव ।
7. ‘ ण्य आवश्यके ’ (7-3-65) इति निषेधाद् आवश्यकार्थे तु ण्यत्प्रत्यये कुत्वं न भवति ।
8. घञि, ‘ चजोः कु—’ (7-3-52) इति कुत्वम् ।
9. मांसस्य पाकः **मांसपाकः मांस्पाको** वा । ‘ मांसस्य **पचि** ल्युड्घञोः’ (वा. 6-3-109) इति वचनात् पचतेर्घञि मांसशब्दस्योपपदस्यान्त्यलोपो वा भवति ।
10. ‘ **ड्वितः** क्त्रिः ’ (3-3-88) इति क्त्रिप्रत्यये, ‘ तेन ’ इत्यधिकारे, निर्वृत्तार्थे ‘ क्त्रेर्मम्नित्यम् ’ (4-4-20) इति नित्यं मप्प्रत्यये रूपम् ।

A. ‘ स वारनारीकुचसञ्चितोपमं ददर्श मालूरफलं **पचेलिमम्** ॥’ नैषधे 1. 94.
B. ‘ पितृणां कुरुषे कार्य**मपाक्यैः** स्वादुभिः फलैः ॥’ भ. का. 6. 64.
C. ‘ **अकृष्टपच्याः** पश्यन्तौ ततो दाशरथी लताः । ’ भ. का. 6. 59.
D. ‘ **विपक्त्रिम**ज्ञानगतिर्मनस्वी मान्यो मुनिः स्वां पुरमृष्यश्रृङ्गः ॥’ भ. का. 1. 10.

पक्तुम्, पाचयितुम्, पिपक्षितुम्, पापचितुम् ;
[1]पचा, [2]पक्तिः, [3]पाचिका, पाचना, पिपक्षा, पापचा ;
पचनम्, [4]मांसपचनम्-मांस्पचनम्, पाचनम्, पिपक्षणम्, पापचनम् ;
पक्त्वा, पाचयित्वा, पिपक्षित्वा, पापचित्वा ;
विपच्य, प्रपाच्य, प्रपिपक्ष्य, प्रपापच्य ;
पाचम् २, } पाचम् २, } पिपक्षम् २, } पापचम् २ ; }
पक्त्वा २, } पाचयित्वा २, } पिपक्षित्वा २, } पापचित्वा २. }

(958) **"पचि व्यक्तीकरणे"** (I-भ्वादिः-174. सक. सेट्. आत्म.)[अ]

'णौ पञ्चयति विस्तारे व्यक्तौ तु शपि पञ्चते ।' (श्लो. 18) इति **देवः** ।

पञ्चकः-ञ्चिका, पञ्चकः-ञ्चिका, पिपञ्चिषकः-षिका, पापञ्चकः-ञ्चिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कञ्चति**वत् (145) ज्ञेयानि । [5]पङ्कः, [6]पङ्क्तिः, [7]पञ्चालाः ; इति अस्य धातो रूपाणीति विशेषः । [A]पञ्चितः ।

(959) **"पचि विस्तारवचने"** (X-चुरादिः-1652. सक. सेट्. उभ.)

'विस्तारमात्रे च' इति **द्रुमे** । 'वचने' इत्यविवक्षितमित्यर्थः ।

---

1. षित्वाद् '**षिद्**भिदादिभ्यः—' (3-3-104) इत्यङ् भवति ।
2. 'स्थागापा**पचो** भावे' (3-3-95) इति वचनात् पक्षे क्तिन्नपि भावे भवति ।
3. 'पर्यायार्हर्णोत्पत्तिषु ण्वुच्' (3-3-111) इति ऋणे ण्वुच् ।
   'शायिकाऽद्य तव प्रापदर्हसि क्षीरपायिकाम् ।
   **पाचिका** मे त्वया देया प्रोतपन्ना मेऽन्नभोजिका ॥' इति **प्र. सर्वस्वे** ।
4. 'मांसस्य **पचि** युड्घञोः' (काशिका 6-1-144) इति मांसशब्दस्याकारस्य लोपः ल्युट्प्रत्यये परतः । तेन **मांस्पचनम्** इत्यपि साधु । '**मांस्पचन्या** उखायाः' इति प्रयोगोऽत्रानुसन्धेयः (भाष्य०, काशिका० ६-१-६३) ।
5. घञि, न्यङ्क्वादिपाठात् कुत्वम् ।
6. बाहुलकात् 'क्तिन्नपि इष्यते' (वा. 3-3-94) इति क्तिन्, कुत्वं च ।
7. 'तमिविडि—' (द. उ. 8-115) इति कालच्प्रत्यये रूपम् । पञ्चते पञ्चयति वा **पञ्चालाः**=विषयः, पर्वतेश्वरयक्षश्च ।

A. 'अमुञ्चनैर्मञ्चितचित्त**पञ्चित**त्रयीमतप्रस्तुचितैः शुभार्जकैः ।' धा. का. 1.24.

[अ] '**पच** व्यक्तीकरणे' इति **दुर्गः** । 'तिङो गोत्रादीनि—' (8-1-27) इत्यत्र **काशिकायां न्यासे** च '**पचति**[=व्यक्तीकरोति] गोत्रम्' इत्युक्तत्वात् तन्मतेऽपि '**पच**' इत्येव पाठ इति गम्यते । **पच** इत्यदन्तपाठेऽपि धातोरस्यानिट्त्वम्, अनिट्कारिकासु पाठात्—इति ज्ञेयम् ।



'णौ पञ्चयति विस्तारे, व्यक्तौ तु शपि पञ्चते ।' (श्लो. 18) इति **देवः** ।

पञ्चकः-पञ्चिका, पिपञ्चयिषकः-षिका, पञ्चकः-ञ्चिका, पिपञ्चिषकः-षिका, पापञ्चकः-ञ्चिका ; इत्यादीनि सर्वाणि रूपाणि चौरादिक**चम्पयति**वत् (499) ऊह्यानि । घञि-[A]प्रपञ्चः ।

(960) **"पट गतौ"** (I-भ्वादिः-296. सक. सेट्. पर.)

'भाषार्थे पाटयेद् ग्रन्थे पटयेद् गमने पटेत् ॥' (श्लो. 76) इति **देवः** ।

पाटकः-टिका, पाटकः-टिका, पिपटिषकः-षिका, पापटकः-टिका ; इत्यादीनि सर्वाण्यपि रूपाणि **कटति**वत् (148) बोध्यानि । [1]पाटूपटः, [2]परिपाटी, [3]पटुः, गोष्ठेपटुः, [4]पटिमा, [5]पटाका, [6]पटलम्, [7]पटोलः, पटलिका, पाटलम्, पाटली, [8]पटीरः, [9]पटनः, [10]पटितिः, [11]कपाटम् ;

---

1. '**पाटे**र्णिलुक् ऊक् चाभ्यासस्य' (वा. 6-1-12) इत्यनेन ण्यन्तात् पचाद्यचि णिलुक्, अभ्यासे हलादिशेषं बाधित्वा ऊक् च भवति ।
   "**माधवो**ऽभ्यासदीर्घोक्त्या '**पाटूपट**' इतीच्छति ।
   '**पाटे**र्णिलुक् दीर्घ ऊक् चे' त्यूचिवान् **भोजराड**पि ॥"
   'तमः **पटपटूपटम्**', 'आटोप**पाटूपटम्** ।' इति च प्रयोगः ।' इति **प्र. सर्वस्वे** ।
2. परिपटतीति **परिपाटी** । ताच्छील्ये णिनिः ।
3. 'फलि**पाटि**—' (द. उ. 1-103) इत्युप्रत्ययो णिलुक् च । पाटयतीति **पटुः**=चतुरः । '**गोष्ठेपटुः**' इत्यत्र पात्रेसमितादित्वात् (2-1-48) सप्तम्या अलुक् ।
4. अतिशयेन पटुः **पटिमा** । पृथ्वादित्वात् (5-1-122) इमनिच् तद्धितः ।
5. 'शलि**पटि**—' (द. उ. 3-33) इत्यादिना आकप्रत्ययः । **पटाका**=पक्षिजातिः ।
6. 'वृषादिभ्यश्चित्' (द. उ. 8-109) इत्यादिना कलप्रत्ययः । **पटलम्**=घनसंघातः, अक्षिरोगश्च ।
7. 'कपिगडि**पटि**भ्य ओलः' (द. उ. 8-105) इत्योलप्रत्ययः । **पटोलः**=द्रव्यजातिः ।
8. औणादिके (द. उ. 8-72) ईरन्प्रत्यये रूपम् । **पटीरम्**=कार्मुकम् ।
9. '**चलन**शब्दार्थादकर्मकाद्—' (3-2-148) इत्यनेन तच्छीलादिषु कर्तृषु युच्प्रत्ययः ।
10. 'तितुत्रेष्वग्रहादीनामिति वक्तव्यम्' (वा. 7-2-9) इत्यनेन इड् भवति ।
11. कं=शिरं पाटयतीति **कपाटम्**=द्वारपिधानम् । ण्यन्तात 'कर्मण्यण्' (3-2-1) इत्यण् । '**कवाटम्**' इत्येव दाक्षिणात्यानां पाठ इति **केचित्** । तदानीं वटधातोरेतद्रूपमिति ज्ञेयम् ।

A. 'कृष्णः **प्रपञ्च**रहितां धृततेजितास्त्रैः वीरैः स्तुतां गिरमकीर्तदरातिवर्धी ॥'
धा. का. 3.28.

इतीमानि रूपाणि अधिकान्यत्रेति विशेषः । [A]पटन् ।

(961) "**पट भाषार्थः**" (X-चुरादिः-1753. सक. सेट्. उभ.)

**आस्वदीयः ।**

'भाषार्थे **पाटयेद्** ग्रन्थे पटयेद् गमने पटेत् ॥' (श्लो. 76) इति **देवः** ।
पाटकः-टिका, पिपाटयिषकः-षिका ; पाटयिता-त्री, पिपाटयिषिता-त्री ; इत्यादीनि सर्वाणि रूपाणि चौरादिक**कालयति**वत् (175) ज्ञेयानि ।

(962) "**पट ग्रन्थे**" (X-चुरादिः-1857. सक. सेट्. उभ.) **अदन्तः**

'भाषार्थे पाटयेद् ग्रन्थे **पटयेद्** गमने पटेत ॥' (श्लो. 76) इति **देवः** ।
[1]पटकः-टिका, पिपटयिषकः-षिका, पटयिता-त्री, पिपटयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कलयति**वत् (176) ज्ञेयानि । [B]प्रपटय्य ।

(963) "**पठ व्यक्तायां वाचि**" (I-भ्वादिः-330. सक. सेट्. पर.)

पाठकः-ठिका, पाठकः-ठिका, पिपठिषकः-षिका, पापठकः-ठिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कठति**वत् (148) ज्ञेयानि । निपठः[2] निपाठः, निपठितिः[3], इमानि रूपाणि अधिकान्यत्रेति विशेषः ।

(964) "**पडि गतौ**" (I-भ्वादिः-281. सक. सेट्. आत्म.)

पण्डकः-ण्डिका, पण्डकः-ण्डिका, पिपण्डिषकः-षिका, पापण्डकः-ण्डिका ; इत्यादीनि सर्वाणि रूपाणि भौवादिक**कण्ठति**वत् (149) ज्ञेयानि । [4]पण्डा, [5]गोष्ठेपण्डः, अस्य धातोः इमे रूपे अधिके इति ज्ञेयम् ।

---

1. अत्र अल्लोपस्य स्थानिवत्त्वात् सर्वत्र उपधावृद्धिर्न ।
2. 'नौ गदनद**पठ**स्वनः' (3-3-64) इति करणे वा अप् प्रत्ययः ।
3. क्तिनि, 'तितुत्र—' (7-2-9) इति इण्निषेधे प्राप्ते 'अग्रहादीनामिति वक्तव्यम्' (वा. 7-2-9) इति इट् भवति ।
4. स्त्रियां भावादौ 'गुरोश्च हलः' (3-3-103) इत्यप्रत्ययः । **पण्डा** =मतिः ज्ञानं च, गत्यर्थानां ज्ञानार्थत्वात् । 'तदस्य संजातं तारकादिभ्यः—' (5-2-36) इतीतच्प्रत्यये **पण्डितः** इति रूपम् ।
5. पण्डतीति **पण्डः** । पचाद्यच् । क्षेपे गम्ये **गोष्ठेपण्ड** इति 'पात्रेसमितादयश्च' (2-1-48) इत्यत्र निपातनात् सप्तम्या अलुक् ।

A. 'अम्लेटकैश्चाकटुचाटुभाषितैरटैः **पट**त्संरटिताञ्जनोत्करैः ॥' धा. का. 1.39.

B. 'क्रुद्धेनाकथि चाप्यवर्यगणने शठ्येन भोः श्वठ्यतां
मन्त्री तौ **प्रपटय्य** पाशवटनैः पापौ विरद्यौ पुरात् ।' धा. का. 3-53.



(965) "**पडि नाशने**" (X-चुरादिः-1615. सक. सेट्. उभ.)

इदित्करणात् णिचो वैकल्पिकत्वम् ।

पण्डकः-ण्डिका, पिपण्डयिषकः-षिका, पण्डकः-ण्डिका, पिपण्डिषकः-षिका, पापण्डकः-ण्डिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कण्ठयति**वत् (150) ज्ञेयानि । पापप्रपण्डी[A] ।

(966) "**पण व्यवहारे स्तुतौ च**"

(I-भ्वादिः-439-सक. सेट्. आत्म.) [अ]

[1]पणायकः-यिका, पाणकः-णिका, [2]पणायकः-यिका, पाणकः-णिका, पिपणिषकः-षिका, [3]पिपणायिषकः-षिका, [4]पम्पणकः-पंपणकः-णिका ;
पणायिता-त्री, पणिता-त्री, पणाययिता-त्री, पाणयिता-त्री, पिपणिषिता-त्री, पिपणायिषिता-त्री, पम्पणिता-त्री ;
—पणाययन्-पाणयन्-न्ती;
—पणाययिष्यन्-पाणयिष्यन्-न्ती-ती;

---

1. ण्वुलि, 'गुपूधूपविच्छि**पणि**पनिभ्य आयः' (3-1-28) इति आयप्रत्ययः । 'आयादय आर्धधातुके वा' (3-1-31) इति आर्धधातुकेषु विकल्पेन भवति । तेन तृजादिष्वपि आयप्रत्ययपक्षे, आयप्रत्ययाभावपक्षे च रूपाणि सर्वाण्यपि **गुपू**-धातुवत् (411) ज्ञेयानि ।
2. णिजन्तेऽपि पूर्ववदायप्रत्ययविकल्पः । तेन रूपद्वयं ज्ञेयम् सर्वत्र ।
3. सनोऽप्यार्धधातुकत्वात् आयप्रत्ययविकल्पः । तेन सर्वत्र रूपद्वयं **गुपि**वत् (411) ज्ञेयम् ।
4. यङन्ते आयप्रत्ययो न भवति । आयप्रत्ययवेलायां धातोरनेकाच्त्वाद् यङ एवाप्रसक्तेः । तेन यङन्ताण्ण्वुलि, 'नुगतोऽनुनासिकान्तस्य' (7-4-85) इति अभ्यासस्य नुकि, 'स च पदान्तवद् वाच्यः' (वा. 7-4-85) इति वचनात् 'वा पदान्तस्य' (8-4-59) इति परसवर्णविकल्पः ।

[अ] व्यवहारार्थे आयप्रत्ययाभावो वैयाकरणसम्प्रदायागत इति धातुपाठव्याख्यासु सर्वत्र साग्रहं साध्यते । 'न चोपलेभे **वणिजां पणायान्** ॥' (भट्टिकाव्ये 3-27), 'गोपायितसाररत्नभाण्डं **विपणायन्ति वणिग्जनाश्च** यत्र ॥' (रावणार्जुनीये 8-30) इत्यादिप्रयोगानुसारात् व्यवहारार्थेऽपि आयप्रत्ययप्रयोगः नासाधुत्वज्ञापक इति प्रतिभाति । विद्वांसः प्रमाणमत्र ।

A. 'इत्यादिवादिषु जनेषु विमोटितारिः
**पापप्रपण्डि**पदपांसुरवाज्यधामा ।' धा. का. 3. 23.

[1]पणमानः, पणाययमानः-पणयमानः, पिपणायिषमाणः-पिपणिषमाणः, पम्पण्यमानः ;

पणायिष्यमाणः-पणिष्यमाणः-पणाययिष्यमाणः, पाणयिष्यमाणः, पिपणायिषिष्यमाणः-पिपणिषिष्यमाणः, पम्पणिष्यमाणः

[2]सुपाण्-सुपाणौ-सुपाणः, पणाः-पणौ-पणाः ;

पणायितम्-पणितम्-तः, पणायितः-पाणितः, पिपणायिषितः-पिपणिषितः, पम्पणितः-तवान् ;

पणायः-पणः, पणायः-पाणः, पिपणायिषुः-पिपणिषुः, पम्पणः ;

पणायितव्यम्-पणितव्यम्, पणाययितव्यम्-पाणयितव्यम्, पिपणायिषितव्यम्-पिपणिषितव्यम्, पम्पणितव्यम् ;

पणायनीयम्-पणनीयम्, पणायनीयम्-पाणनीयम्, पिपणायिषणीयम्-पिपणिषणीयम्, पम्पणनीयम् ;

पणाय्यम्-[3]पण्यम्-[A]पाण्यम्, [B]पणाय्यम्-पाण्यम्, पिपणायिष्यम्-पिपणिष्यम्, पम्पण्यम् ;

ईषत्पणः-दुष्पणः-सुपणः ; — —

पणाय्यमानः-पण्यमानः, पणाय्यमानः - पाण्यमानः, पिपणायिष्यमाणः-पिपणिष्यमाणः, पम्पण्यमानः ;

पणायः-[4]पणः-पाणः, मूलकपणः, शाकपणः-क्षीणपणः,[C] [5]आपणः,

1. अवयवे कृतस्यानुदात्तेत्त्वस्य आयप्रत्ययाभावे शुद्धे धातौ आत्मनेपदसम्पादनेन सार्थक्यम् । तत्र **पनिना** धातुना साहचर्यात् स्तुतावेवायप्रत्ययः । व्यवहारे तु न । तेन व्यवहारार्थादित शुद्धात् शानच् ।

2. क्विपि, 'अनुनासिकस्य क्विझलोः—' (6-4-15) इति दीर्घः । आयप्रत्ययपक्षे तु वलि लोपे रूपम् ।

3. व्यवहारार्थे ण्यतं बाधित्वा 'अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु' (3-1-101) इति क्यप् । अन्यत्र **पाण्यम्** इत्येव ।

4. 'नित्यं **पणः** परिमाणे' (3-3-66) इति भावादावप् प्रत्ययः । स्तुतौ तु **पाणः** इत्येव ।

5. एत्य अत्र आपणते **इत्यापणः** । 'गोचरसञ्चरवहव्रजापणनिगमाश्च' (3-3-119) इति घप्रत्ययान्तः संज्ञायां निपात्यते । **आपणः**=क्रयविक्रयव्यवहारार्हा पण्यवीथिका ।

A. 'ऋष्यमूकेऽनवद्योऽस्ति **पण्य**भ्रातृवधः कपिः ।' भ. का. 6-51.

B. '**पणाय्य**रूपाः पनिताकृतीन् ययुर्भामिन्य एवाक्षमया स्वकामुकान् ॥' धा.का. 1.57.

C. 'अथ क्रमादनिकाणाः नराः **क्षीणपणा** इव ।' भ. का. 7.58.



पणायः-पाणः, पिपणायिषः-पिपणिषः, पम्पणः ; ——

पणायितुम्-पणितुम्, पणाययितुम्-पाणयितुम्, पिपणायिषितुम्-पिपणिषितुम्, पम्पणितुम् ;

पणाया-[1]पणितिः, पणायना-पाणना, पिपणायिषा-पिपणिषा, पम्पणा;

पणायनम्-पणनम्, पणायनम्-पाणनम्, पिपणायिषणम्-पिपणिषणम्, पम्पणनम् ;

पणायित्वा-पणित्वा, पणाययित्वा-पाणयित्वा, पिपणायिषित्वा-पिपणिषित्वा, पम्पणित्वा;

प्रपणाय्य-प्रपण्य, प्रपणाय्य-प्रपाण्य, प्रपिपणायिष्य-प्रपिपणिष्य, प्रपम्पण्य ;

पणायम् २-पाणम् २, पणायित्वा २-पणित्वा २, } पणायम् २-पाणम् २, पणाययित्वा २- पाणयित्वा २, }

पिपणायिषम् २-पिपणिषम् २, पिपणायिषित्वा २-पिपणिषित्वा २, } पम्पणम् २ ; पम्पणित्वा २ ; }

[2]पाणिः, [3]वणिक्, [4]विपणिः.

(967) **"पत गतौ वा"** (X-चुरादिः-1862. सक. सेट्. उभ.) **अदन्तः ।**

'—गत्यर्थे पतयेत् पतेत् ॥' (श्लो. 95) इति **देवः ।**

[5]पतकः-तिका, पिपातयिषकः-षिका, पिपतयिषकः-षिका, पतकः-तिका, [6]पिपतिषकः-षिका, पापतकः-तिका; इत्यादीनि सर्वाण्यपि रूपाणि

1. 'तितुत्रेष्वग्रहादीनाम्—' (वा. 7-2-9) इति पर्युदासात् इडत्र भवति । आयप्रत्ययपक्षे तु प्रत्ययान्तत्वादकारप्रत्ययः ।

2. 'अशिपणाय्यो रुड्लुकौ च' [द. उ. 1-61] इत्यनेन इण्प्रत्ययः, आयप्रत्ययस्य लुक् च भवति । **पाणिः**=हस्तः ।

3. '**पणे**रिज्यादेश्च वः' (द. उ. 4-8) इत्यनेन इजिप्रत्यये धात्वादेश्च वकारादेशे रूपम् । **वणिक्**=आपणिकः ।

4. 'इन्' [द. उ. 1-46] इतीन्प्रत्यये रूपम् । **विपणिः**=पण्यवीथिका ।

5. '**पत गतौ वा**' इत्यत्र विकल्पद्योतकः **वाकारः** अदन्तपाठविकल्पार्थः इति मते अदन्तत्वाभावे णिचि उपधावृद्धौ एवं रूपम् ।

6. '**पत गतौ वा**' इति **वाकारः** णिज्विकल्पार्थ इति मते णिजभावपक्षे शुद्धात् सनि एवं रूपम्, एवं यङन्तस्याप्युपपत्तिः द्रष्टव्या ।

**छादयति**वत् (562) ज्ञेयानि । [1]पतयालुः[A].

(968) "**पत्लृ गतौ**" (I-भ्वादिः-845. सक. सेट्. पर.) **ज्वलादिः** ।

'—गत्यर्थे पतयेत् पतेत् ॥' (श्लो 95) इति **देवः** ।

पातकः-तिका, पातकः-तिका, [2]पिपतिषकः-षिका-पित्सकः-सिका, [3]पनीपतकः-तिका ;

पतिता-त्री, पातयिता-त्री, पिपतिषिता-पित्सिता-त्री, पनीपतिता-त्री ;

[4]प्रणिपतन्-न्ती, पातयन्-न्ती, [5]पिपतिषन्-पित्सन्-न्ती ; —

उत्पतिष्यन्-न्ती-ती, पातयिष्यन्, पिपतिषिष्यन्-पित्सिष्यन्-न्ती-ती ; —

[6]पतमानः, पातयमानः, [7]पिपतिषमाणः-प्रपित्समानः, पनीपत्यमानः ;

पतिष्यमाणः, पातयिष्यमाणः, पिपतिषिष्यमाणः-पित्सिष्यमाणः, पनीपतिष्यमाणः ;

प्रतिपत्-सुपत्-सुपतौ-सुपतः ; — — —

---

1. '**स्पृहिगृहिपति**—' (3-2-158) इत्यादिना तच्छीलादिषु कर्तृषु ण्यन्ताद् आलुच् प्रत्ययः । 'अयामन्ताल्वाय्य—' (6-4-55) इत्यादिना णेरयादेशः ।
2. 'तनि**पति**दरिद्रातिभ्यः सनो वा इड् वाच्यः' (वा. 7-2-49) इति इड्विकल्पः । इट्पक्षे रूपमेवम् । इडभावपक्षे तु 'सनि मीमाघुरभलभशक**पत**पदामच इस्, (7-4-54) इतीसि, 'अत्र लोपोऽभ्यासस्य' (7-4-58) इत्यभ्यासलोपे, 'इको झल्' (1-2-9) इति सनः कित्त्वे, 'स्कोः—' (8-2-29) इति सकारस्य लोपे च रूपम् । एवं सन्नन्ते सर्वत्र रूपद्वयं बोध्यम् ।
3. यङन्ते, 'नीग् वञ्चुस्रंसुध्वंसुभ्रंसुकस**पत**पदस्कन्दाम्' (7-4-84) इत्यभ्यासस्य नीगागमः । अयमभ्यासदीर्घापवादः । एवं यङन्ते सर्वत्र ज्ञेयम् ।
4. 'नेर्गदनद**पत**—' (8-4-17) इत्यादिना नेर्णत्वम् ।
5. 'आशङ्कायामुपसंख्यानम्' (वा. 3-1-7) इति सनि रूपमेवम् । इच्छासन्नन्तादपि, एवमेव ।
6. '**ताच्छील्य**वयोवचनशक्तिषु चानश्' (3-2-129) इति ताच्छील्ये, शक्तौ वा चानश् प्रत्ययः, न तु शानच् ।
7. 'पूर्ववत् सनः' (1-3-62) इति ताच्छील्यार्थे चानश् ।

A. 'वीरेण तेन विशिखेन विलूनमूर्नं
चक्रभ्रमेण **पतयालु** तदा शरव्यम् ।' भारतचम्पूः 2.80.



[1]पत्तम्-पत्तः-पत्तवान्-पतितम्-तः-तवान्, पातितः, पिपतिषितः-पित्सितः, पनीपतितः-तवान् ;

[2]पतः-[3]पातः-[4] पतापतः, [5]आपात्यः,[A] [6]उत्पतिष्णुः,[B] [7]पतयालुः, [8]प्रपातुकः,[C] [9]पतनः,[D] [10]निपेतिवान्,[E]

---

1. सनि धातोरस्य विकल्पितेट्कत्वात् निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इति इण्निषेधे प्राप्ते, 'द्वितीया श्रितातीत**पतित**गतात्यस्तप्राप्तापन्नैः' (2-1-24) इत्यत्र **पतित** इति निपातनात् इड् भवतीति सिद्धान्तः । 'बाधकान्येव निपातनानि' (परिभाषा 120) इति न्यायाश्रयणेन **पतित** इत्येव निष्ठायां साधुः । 'अबाधकान्यपि निपातनानि' (परिभाषा 121) इति न्यायाश्रयणे तु **पत्तम्-पत्तः** इत्यादीन्यपि रूपाण्यत्र साधून्येवेति प्रतिभाति । तत्र विद्वांसः प्रमाणम् । **वस्तुतस्तु** सूत्रकाररीत्या धातोरस्य कुत्रापि इड्विकल्पाभावात् निष्ठायामत्र 'यस्य विभाषा' (7-2-15) इति सूत्रं न प्रवर्तते । ततश्च **पतितः** इत्यस्य साधुत्वे न निर्देशादिरूपप्रमाणान्तराणि मृग्यानि ।
2. णप्रत्ययाभावपक्षे पचाद्यचि रूपमेवम् ।
3. '**ज्वलिति**कसन्तेभ्यो णः (3-1-140) इति कर्तरि वा णप्रत्ययः ।
4. 'चरिचलि**पति**वदीनाम् द्वित्वम् अचि ; आक् चाभ्यासस्य' (वा. 6-1-12) इति द्वित्वम् । अभ्यासे हलादिशेषाभावः । यङन्तत्वाभावात् आगागमविधानाच्च नीगभावश्च ।
5. 'भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्या**पात्या** वा' (3-4-68) इति कर्तरि ण्यत्प्रत्ययान्तो निपातितः ।
6. 'अलंकृञ्निराकृञ्प्रजनोत्पचोत्**पतो**न्मद—' (3-2-136) इति तच्छीलादिषु कर्तृषु इष्णुच्प्रत्ययः ।
7. 'स्पृहिगृहि**पति**दयि—' (3-2-158) इति ण्यन्तात् आलुच् प्रत्ययः । ताच्छीलिकोऽयं प्रत्ययः । णिचि उपधाह्रस्वो निपातनात् । 'अयामन्ताल्वाय्येत्न्विष्णुषु' (6-4-55) इति णेरयादेशः ।
8. ताच्छीलिकः 'लष**पत**पद—' (3-2-154) इत्यादिना उकञ् प्रत्ययः ।
9. 'जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलष**पत**पदः' (3-2-150) इत्यनेन ताच्छीलिके युच्प्रत्यये, अनादेशे च रूपम् ।
10. कर्तरि लिटः क्वसौ द्वित्वे, 'अत एकहल्मध्ये—' (6-4-120) इति एत्वाभ्यासलोपयोः, 'वस्वेकाजाद्घसाम्' (7-2-67) इतीडागमे च रूपम् ।

A. 'अग्रे गतेन वसतिं परिगृह्य रम्याम्
**आपात्य**सैनिकनिराकरणाकुलेन ।' शि. पा. 5. 15.

B. '**उत्पतिष्णू** सहिष्णू च चेरतुः खरदूषणौ ॥' भ. का. 5. 1.

C. 'भेजेऽभितः **पातुक**सिद्धसिन्धोरभूतपूर्वां रुचमम्बुराशेः ॥' शि. पा. 3. 3.

D. 'निरुद्धे सलिले राज्ञा **पतनं** कूलमाश्रितान् ॥' रावणार्जुनीये 11-31.

E. 'बाणभिन्नहृदया **निपेतुषी** सा स्वकाननभुवं न केवलाम् ।' रघु. 11-19.

[1]दूरपाती[A]-पक्षपाती, [2]पापतिः, पातः-पिपतिषुः-[B]प्रपित्सुः, पनीपतः ;
पतितव्यम् , पातयितव्यम् , पिपतिषितव्यम्-पित्सितव्यम् , पनीपतितव्यम् ;
पतनीयम् , पातनीयम् , पिपतिषणीयम्-पित्सनीयम् , पनीपतनीयम् ;
पात्यम् , [3]अपत्यम् , पात्यम् , पिपतिष्यम्-पित्स्यम् , पनीपत्यम् ;
ईषत्पतः-दुष्पतः-सुपतः ; — — —
पत्यमानः, पात्यमानः, पिपतिष्यमाणः-पित्स्यमानः, पनीपत्यमानः ;
[4]पातः-सन्निपातः-उत्पातः, प्रणिपातः, [5]प्रपातः, [6]पत्त्रम् , पातः,
पिपतिषः-पित्सः-पनीपतः ;
पतितुम् , पातयितुम् , पिपतिषितुम्-पित्सितुम् , पनीपतितुम् ;
पत्तिः, [7]प्रतिपत् , [8]निपत्या, [9]पत्तिः, पातना, पिपतिषा-पित्सा,
पनीपता ;

---

1. 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिप्रत्ययः ।
2. 'सासहिवावहिचाचलि**पापतीना**मुपसंख्यानम्' (वा. 3-2-171) इत्यनेन कर्तरि किः किन् वा प्रत्ययः । यङन्तात् निपातनमिदम् । निपातनादेव नीगागमोऽभ्यासस्य नेति **भाष्यमतम्** । **वार्तिकमते** तु स्वतन्त्रमिदं निपातनम् , न तु यङन्तस्येति भाति । यथोत्तरं मुनीनां प्रामाण्यात् **भाष्यमतेनैव** निष्पत्तिर्ज्ञेया ।
3. न पतन्त्यनेनेति **अपत्यम्** । हलन्तात् करणे यत् । 'कृत्यल्युटो बहुलम्' (3-3-113) इत्यनेनात्र यतः साधुत्वं ज्ञेयम् । **शब्दकौस्तुभे** तु 'अथ वा बहुलं कृत्याः संज्ञायामिति तत् स्मृतम् । यथाऽ**पत्यं** यथा जन्यं यथा भित्तिस्तथैव सा ॥' (श्लोकवार्तिकम् 3-1-112) इत्यत्र **अपत्यम्** इत्युपादानात् साधुत्वमुक्तम् । मुद्रित**भाष्य**कोशेषु तु 'यथा **यत्यं**—' इत्येव पाठो दृश्यते । तेन बाहुलकादेवेति समाधानं युक्तम् ।
4. 'हलश्च' (3-3-121) इति संज्ञायां घञ् । **पातः**=राहुः ।
5. प्रपततीति **प्रपातः**=जलस्याधोदेशगमनम् ।
6. 'दाम्नीशसयुयुजस्तुतुदसिसिचमिह**पत**दशनहः करणे' (3-2-182) इति करणे ष्ट्रन्प्रत्ययः । **पत्त्रम्**=वाहनम् ।
7. स्त्रियां भावादौ, 'सम्पदादिभ्यः—' (वा. 3-3-94) इति क्विप् । **प्रतिपत्**=ज्ञानम् । 'क्तिन्नपीष्यते'(वा. 3-3-94) इति वचनात् **प्रतिपत्तिः**=इत्यपि साधुः ।
8. 'संज्ञायां समजनिषद**निपत**—' (3-3-99) इत्यादिना क्यप् संज्ञायाम् । **निपत्या**=पिच्छिला भूमिः ।
9. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां क्तिच् । **पत्तिः**=पदातिः । पुंलिङ्गशब्दोऽयम् ।

A. 'अप्रग्राहैरिवादित्यो वाजिभि**र्दूरपातिभिः** ॥' भ. का. 7. 52.
B. 'पयसि **प्रपित्सु**रपराम्बुनिधेरधिरोढुमस्तगिरि**मभ्यपतत्** ॥' शि. व. 9. 1.



पतनम् , प्रपातनम् , पिपतिषणम्-पित्सनम् , पनीपतनम् ;
पतित्वा, पातयित्वा, पिपतिषित्वा-पित्सित्वा, पनीपतित्वा ;
प्रणिपत्य, प्रपात्य, प्रपिपतिष्य-प्रपित्स्य, प्रपनीपत्य ;
[1]लतानुपातम्[A], गेहानुपातम् गेहानुप्रपातमास्ते । गेहं गेहं अनुप्रपातम् ,
गेहानुप्रपातम्-गेहानुप्रपातमास्ते ।
पातम् २, पतित्वा २, } पातम् २, पातयित्वा २, } पिपतिषम् २-पित्सम् २, पिपतिषित्वा २-पित्सित्वा २, }
पनीपतम् २ ; पनीपतित्वा २. }
[2]पताका, [3]पतङ्गः, [4]पत्तनम् , [5]पतत्रम् , [6]पातालम् ।

(969) "**पथ प्रक्षेपे**" (X-चुरादिः-1554. सक. सेट्. उभ.)

"**पृथ**" इत्यस्य पाठान्तरमिदम् ।

पाथकः-थिका, पिपाथयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक-**कालयति**वत् (175) ज्ञेयानि ।

(970) "**पथि गतौ**" (X-चुरादिः-1575. सक. सेट्. उभ.)

इदित्करणाण्णिचो वैकल्पिकत्वम् ।

'—ऽथ पथेर्गतौ पथति णौ पन्थेर्गतौ **पन्थयेत्** ॥' (श्लो. 101) इति **देवः** ।
पन्थकः-पन्थिका, पिपन्थयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि

---

1. 'विशि**पति**पदिस्कन्दां व्याप्यमानासेव्यमानयोः' (3-4-56) इति द्वितीयान्ते णमुल् । पदार्थानां सम्बन्धो **व्याप्तिः** । **आसेवा**=तात्पर्यम् । एतयोरेवात्र णमुल् । उपपदसमासस्य विकल्पत्वात् रूपाण्येवं भवन्ति ।
2. बलाकादित्वात् [द. उ. 3-32] आकप्रत्ययो भवति । **पताका**=ध्वजपटः ।
3. '**पते**रङ्गच् पक्षिणि' [द. उ. 3-59] इत्यङ्गच् प्रत्ययः पक्षिण्यभिधेये । पतत्यत्यर्थमिति **पतङ्गः**=पक्षी, आदित्यश्च ।
4. 'वी**पति**भ्यां तनन्' [द. उ. 6-56] इति तनन्प्रत्ययः । पतन्त्यस्मिन् इति **पत्तनम्** ।
5. 'अमिनक्षियजिवधि**पतिभ्यो**ऽत्रन्' [द. उ. 8-56] इत्यत्रन्प्रत्ययः । **पतत्रम्**=वाहनम् ।
6. '**पति**चण्डिभ्यामालन्' [द. उ. 8-116] इत्यालन् प्रत्ययः ।

A. '**लतानुपातं** कुसुमान्यगृह्णात् स नद्यवस्कन्दमुपास्पृशच्च ।' भ. का. 2. 11.

चौरादिककण्ठयतिवत् (150) ज्ञेयानि । णिजभावपक्षे शुद्धाच्छता-पन्थन्[A] इति ।

(971) "**पथे गतौ**" (I-भ्वादि:-847. सक. सेट्. पर.) **ज्वलादि:** ।

'—ऽथ पथेर्गतौ **पथति** णौ पन्थेर्गतौ पन्थयेत् ॥' (श्लो. 101) इति **देव:** ।

पाथक:-थिका, पाथक:-थिका, पिपथिषक:-षिका, पापथक:-थिका ;
पथिता-त्री, पाथयिता-त्री, पिपथिषिता-त्री, पापथिता-त्री,
पथन्-न्ती, पाथयन्-न्ती, पिपथिषन्-न्ती ; —
पथिष्यन्-न्ती-ती, पाथयिष्यन्-न्ती-ती, — पिपथिषिष्यन्-न्ती-ती ; —
— पाथयमान:, पाथयिष्यमाण:, पापथ्यमान:, पापथिष्यमाण: ; —
पथ्-पत्-पथौ-पथ: ; — —
पथितम्-त:, पाथित:, पिपथिषित:, पापथित:-तवान् ;
पथ:-पाथ:, [B]तटपाथी, पाथ:, पिपथिषु:, पापथ: ;
पथितव्यम्, पाथयितव्यम्, पिपथिषितव्यम्, पापथितव्यम् ;
पथनीयम्, पाथनीयम्, पिपथिषणीयम्, पापथनीयम् ;
पाथ्यम्, पाथ्यम्, पिपथिष्यम्, पापथ्यम् ;
ईषत्पथ:-दुष्पथ:-सुपथ: ; — —
पथ्यमान:, पाथ्यमान:, पिपथिष्यमाण:, पापथ्यमान: ;
पाथ:, पाथ:, पिपथिष:, पापथ: ;
पथितुम्, पाथयितुम्, पिपथिषितुम्, पापथितुम् ;
पत्ति:, पाथना, पिपथिषा, पापथा ;
पथनम्, पाथनम्, पिपथिषणम्, पापथनम् ;
पथित्वा, पाथयित्वा, पिपथिषित्वा, पापथित्वा ;
प्रपथ्य, प्रपाथ्य, प्रपिपथिष्य, प्रापापथ्य ;
पाथम् २, पथित्वा २, } पाथम् २, पाथयित्वा २, } पिपथिषम् २, पिपथिषित्वा २, } पापथम् २ ; पापथित्वा २. }

---

A. 'क: स्मापयेत विभुमेनमशिश्लिषद् य:
**पन्थन्** व्रजेऽत्र भवपिच्छनभाभिरेव ।' धा. का. 3. 18.

B. 'अह्नोलसत्त्वा रविरश्मिजालेऽप्यविकथन्ती **तटपाथि**पाता ।' धा. का. 2.23.



(972) "**पद गतौ**" (IV-दिवादि:-1169.सक. अनि. आत्म.)

'**पद्लृ**—' इति **पुरुषकार**सम्मत: पाठ: ।

'—श्यनि गत्यर्थे पद्यते पदयेत णौ ॥' (श्लो. 109) इति **देव:** ।

पादक:-दिका, पादक:-दिका, [1]पित्सक:-त्सिका, [2]पनीपदक:-दिका ;
पत्ता-पत्त्री, पादयिता-त्री, पित्सिता-त्री, पनीपदिता-त्री ;
— पादयन्-न्ती, पादयिष्यन्-न्ती-ती ; — —
[3]प्रणिपद्यमान:, पादयमान:, पित्समान:, पनीपद्यमान: ;
पत्स्यमान:, पादयिष्यमाण:, पित्सिष्यमाण:, पनीपदिष्यमाण: ;
[4]पत्-पद्-पदौ-पद: ; — — —
[5]प्रपन्न:-पन्नवान्, पादित:, पित्सित:, पनीपदित:-तवान् ;
पद:, [6]उत्पदिष्णु:, [7]पदन:, [8]पादुक:-[A]पादुका, [9]पाद:, [10]सम्पद्य:,

---

1. 'सनि मीमाघुरभलभशकपतपदामच इस्' (7-4-54) इति सन्नन्ते सर्वत्र इस् । 'अत्र लोपोऽभ्यासस्य' (7-4-58) इत्यभ्यासलोप: । 'स्को: संयोगाद्योरन्ते च' (8-2-29) इति सकारलोप: । 'इको झल्' (1-2-9) इति सन: कित्त्वम् । 'खरि च' (8-4-55) इति दकारस्य चर्त्वं भवति ।
2. यङन्ताण्ण्वुलि, 'नीग् वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्' (7-4-84) इत्यभ्यासस्य नीगागम: । अभ्यासदीर्घापवाद: । एवं यङन्ते सर्वत्र ज्ञेयम् ।
3. '**नेर्गदनदपतपद**—' (8-4-17) इत्यादिना नेर्णत्वम् ।
4. पद्यतेऽनेनेति **पत्** = पाद: । क्विबन्ते चर्त्वविकल्प: ।
5. 'रदाभ्यां निष्ठातो न: पूर्वस्य च द:' (8-2-42) इति निष्ठातकारधातुदकारयोर्नत्वे रूपम् ।
6. 'अलङ्कृञ्निराकृञ्प्रजनोत्पचोत**पद**—' (3-2-136) इत्यादिना इष्णुच् प्रत्यय: तच्छीलादिषु कर्तृषु भवति—इति **माधव:** । एतच्च प्रकृतसूत्रे (3-2-136), **उत्पद** इति पाठाश्रयणेन साध्यते । परं तु—**पत्लृ**धातौ (968) स्वयमेव **माधवेन उत्पत** इत्येतस्मादेव इष्णुच् साधित: । **पद**धातौ तु "**केचित्तु** '**उत्पत**' इति **पततिं** पठन्ति" इति वदत: को वाऽत्र स्वाभिमत: पाठ इति न ज्ञायते ।
7. 'जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपत**पद:**' (3-2-150) इत्यादिना ताच्छीलिको युच्प्रत्यय: ।
8. 'लषपत**पद**—' (3-2-154) इत्यादिना तच्छीलादिषु कर्तृषु उकञ् प्रत्यय: । अदन्तत्वात् स्त्रियां टाप् ।
9. '**पद**रुजविशस्पृशो घञ्' (3-3-16) इति कर्तरि घञ् ।
10. सम्पूर्वकादस्मात् कर्तरि शप्रत्यये, दिवादित्वात् श्यनि, पररूपे, रूपमेवम् । शप्रत्ययसद्भावे निदानं तु 'कृभ्वस्तियोगे **सम्पद्य**कर्तरि—' (5-4-50) इति सूत्रे **सम्पद्य** इति निर्देश एव ।

A. 'प्रकृतिं **प्रतिपादुकै**श्च **पादै**श्चक्लृपे भानुमत: पुन: प्रसर्तुम् ।' शि. व. 20-39.

सम्पादी, [1]प्रणिपेदिवान्,[A] पादः, पित्सुः, पनीपदः ;
पत्तव्यम्, पादयितव्यम्, पित्सितव्यम्, पनीपदितव्यम् ;
पदनीयम्, पादनीयम्, पित्सनीयम्, पनीपदनीयम् ;
पाद्यम्, पाद्यम्, पित्स्यम्, पनीपद्यम् ;
ईषत्पदः-दुष्पदः-सुपदः ; — — —
पद्यमानः, पाद्यमानः, पित्स्यमानः, पनीपद्यमानः ;
पादः, [2]पदम्, [3]आस्पदम्,[B] [4]गोष्पदम्, पादः, पित्सः, पनीपदः ;
पत्तुम्, पादयितुम्, पित्सितुम्, पनीपदितुम् ;
[5]सम्पत्-सम्पत्तिः, विपत्-प्रतिपत्-आपत्, [6]पद्या, पादना, पित्सा, पनीपदा ;
पदनम्, आपादनम्, पित्सनम्, पनीपदनम् ;
पत्त्वा, पादयित्वा, पित्सित्वा, पनीपदित्वा ;
प्रणिपद्य, सम्पाद्य, प्रपित्स्य, प्रपनीपद्य ;

---

1. 'पपुष आगतं पपिवद्रूप्यम्' इति **भाष्य** (4-3-24) प्रयोगात्, छान्दसोऽपि क्वसुः क्वचिद् भाषायां भवति इति ज्ञायते। तेन क्वसौ, एत्वाभ्यासलोपयोः, 'वस्वेकाजाद्घसाम्' (7-2-67) इति इडागमे च रूपमेवम्।
2. 'खनो घ च' (3-3-125) इत्यत्र चकारात् संज्ञायामन्यत्रापि घप्रत्ययो भवति इति ज्ञायते-इत्याश्रयणेन घप्रत्यये रूपम्।
3. आङ्पूर्वकादस्मात् संज्ञायां घप्रत्यये, '**आस्पदं** प्रतिष्ठायाम्' (6-1-146) इत्यत्र निपातनात् सुडागमः।
4. '**गोष्पदं** सेवितासेवितप्रमाणेषु' (6-1-145) इत्यनेन सेविते असेविते प्रमाणे च विषये सुट् निपात्यते। षत्वं च भवति।
5. '**सम्पदादिभ्यः**—' (वा. 3-3-94) इत्यनेन स्त्रियां भावादौ क्विप्। 'क्तिन्नपीष्यते' (भाष्येष्टिः 3-3-94) इति वचनात् क्तिनि **सम्पत्तिः** इत्यादिकमपि साध्वेव। **प्रतिपत्**=ज्ञानम्, प्रथमा तिथिश्च।
6. 'संज्ञायां समजनिषद**निपत**—' (3-3-99) इत्यत्र '**निपद**' इति **क्षीरस्वामि**पाठमाश्रित्यात्र क्यप् बोध्यः। **पद्या**=काव्यविशेषः। 'एकप्रघट्टकं **पद्या** मुक्तकानां निबन्धनम्।' इति तल्लक्षणम्। अत्र पक्षे 'उपेयिवान्—' (3-2-109) इत्यत्र '**उप**' इत्यस्येव अत्र '**नि**' इत्यस्याविवक्षितत्वं ज्ञेयम्।

A. 'प्रायेण **प्रणिपेदुषां** निजमसौ योगं स्वयं शिक्षयन्।' कामासिकाष्टके 5.
B. 'कृता**स्पदा** भूमिभृतां सहस्रैरुदन्वदम्भःपरिवीतमूर्तिः।' शि॰ व॰ 3-34.



[1]गेहानुप्रपादम्, गेहंगेहमनुप्रपादम्, गेहमनुप्रपादमनुप्रपादमास्ते ;
पादम् २, पत्त्वा २, } पादम् २, पादयित्वा २, } पित्सम् २, पित्सित्वा २, } पनीपदम् २ ; पनीपदित्वा २ ; }
[2]पादूः, [3]पद्मम्-पद्मिनी।

## (973) "पद गतौ" (X-चुरादिः-1898. सक. सेट्. आत्म.) अदन्तः।

### आगर्वीयः।

'—श्यनि गत्यर्थे पद्यते **पदयेत** णौ॥' (श्लो. 109) इति **देवः**।
पदकः-दिका, पिपदयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कथयति**वत् (162) ज्ञेयानि।

## (974) "पन स्तुतौ" (I-भ्वादिः-440. सक. सेट्. आत्म.) [अ]

पनायकः-पानकः-निका, पनायकः-पानकः, पिपनायिषकः-पिपनिषकः-षिका, पंपनकः-पम्पनकः-निका ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**पणायति**वत् (964) ज्ञेयानि।
[4]पनसः। [A]पनितम्।

---

1. 'विशिपति**पदि**स्कन्दां व्याप्यमानासेव्यमानयोः' (3-4-56) इति सोपपदात् णमुल्। 'तृतीयाप्रभृतीनि—' (2-2-21) इति समासविकल्पः। समासे, 'नित्यवीप्सयोः' (8-1-4) इति द्विर्वचनं न भवति। समासेनैव नित्यवीप्सार्थयोरुक्तत्वात्।
2. 'णिच्च कसि**पद्य**र्त्तेः' [द. उ. 1-168] इत्यूप्रत्ययः, प्रत्ययस्य णित्त्वं च। पद्यते इति **पादूः**=पादुका। '**पादुका**' इत्यत्र संज्ञायां कनि, 'केऽणः' (7-4-13) इति ह्रस्वो ज्ञेयः।
3. औणादिके [द. उ. 7-26] मन्प्रत्यये रूपम्। पद्यते मधुकरैरिति **पद्मम्**=कमलम्। अर्शआद्यजन्ते मत्वर्थीये **पद्मा**=लक्ष्मीः। मत्वर्थीय एव इनिप्रत्यये **पद्मिनी** इति च।
4. औणादिके [द. उ. 9.44] असच्प्रत्यये रूपम्। **पनसः**=फलवृक्षविशेषः।

[अ] **क्षीरतरङ्गिण्यां** '**पनायते** हरिम्।' इत्यात्मनेपदमायप्रत्ययान्तात् निरुच्य, तस्य साधकत्वेन, "अत्र, 'अवयवेऽपि कृतं लिङ्गं समुदायस्य विशेषकं भवति।' (भाष्यम्-3-1-5) इत्यायव्यवधानेऽपि आत्मनेपदम्।' इत्युक्तम्। परं तु—**पनायते**रार्धधातुके आयप्रत्ययाभावपक्षेऽनुदात्तेत्त्वस्य चरितार्थत्वात् आत्मनेपदं चिन्त्यम्।

A. 'पणाय्यरूपा **पनिता**कृतीन् ययुर्भामिन्य एवाक्षमया स्वकामुकान्।' धा. का. 1.57.

(975) **" पय गतौ "** (I-भ्वादिः-476. सक. सेट्. आत्म.)

पायकः-यिका, पायकः-यिका, पिपयिषकः-षिका, पापयकः-यिका-; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**चयति**वत् (502) ज्ञेयानि ।

(976) **"पर्ण हरितभावे"** (X-चुरादिः-1939. अक. सेट्. उभ.) **अदन्तः।**

पर्णकः-र्णिका, पिपर्णयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक-**कर्णयति**वत् (170) ज्ञेयानि । [A]प्रपर्णितम् ।

(977) **" पर्द कुत्सिते शब्दे "** (I-भ्वादिः-29. अक. सेट्. आत्म.)

" **कुत्सितशब्दः**=गुदरवः । तदाह **केशवस्वामी**—" कौक्षे कर्दति, **पर्दते** गुदरवे—' इति ।" इति **माधवधातुवृत्तिः । क्षीरस्वामी** तु—" पायुध्वनौ वर्ततेऽयम् । **अन्ये** निश्शब्दमधोवातं मन्वानाः ' अशब्दे ' इत्याहुः ।" इत्याह ।

पर्दकः-र्दिका, पर्दकः-र्दिका, पिपर्दिषकः-षिका, पापर्दकः-र्दिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कर्जति**वत् (169) ज्ञेयानि । [1]पर्दनः, [2]पृदाकुः[B] पर्दमानः, पर्दिष्यमाणः ।

(978) **" पर्प गतौ "** (I-भ्वादिः-412. सक. सेट्. पर.)

पर्पकः-र्पिका, पर्पकः-र्पिका, पिपर्पिषकः-षिका, पापर्पकः-र्पिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कर्बति**वत् (173) ज्ञेयानि । [4]पर्पः ।

(979) **" पर्ब गतौ "** (I-भ्वादिः-416. सक. सेट्. पर.)

पर्बकः-र्बिका, पर्बकः-र्बिका, पिपर्बिषकः-षिका, पापर्बकः-र्बिका ; इत्येवमादीनि समस्तान्यपि रूपाणि भौवादिक**कर्बति**वत् (173) ज्ञेयानि । शतरि [C]पर्बन् ।

1. ' चलनश**ब्दार्थादकर्मकाद्** युच् ' (3-2-148) इति ताच्छीलिको युच्प्रत्ययः ।
2. ' **पर्दे**र्णित् संप्रसारणमलोपश्च ' [द. उ. 1-152] इत्यनेन काकुप्रत्ययः, संप्रसारणं, णित्त्वम् अलोपश्च । **पृदाकुः**=पर्दकः, सर्पश्च ।
4. पर्प्यतेऽनेनेति **पर्पः**=येन पीठेन पङ्गवश्चरन्ति स दारुविशेषः । 'हलश्च' (3-3-121) इति संज्ञायां करणे घञ् ।

A. ' **प्रपर्णित**दिशं रुचा क्षपितभूभृतोऽस्यानुजाः
सदोनिवसितं हरिं ययुरतूत्थिताङ्गाः क्रुधा ।' धा. का. 3.64.

B. ' **पृदाकु**जिद् वेगमयत्नतो ययौ वियोयुतत्काननजोतिनाध्वना ॥' धा. का. 1-5.

C. ' हयैः सुरम्फैर्द्रुतमर्बतो रवेः **पर्बद्भि**रालर्ब्यत रक्तिमा करैः । धा. का. 1. 54.



(980) **" पर्व पूरणे "** (I-भ्वादिः-577. सक. सेट्. पर.)

पर्वकः-र्विका, पर्वकः-र्विका, पिपर्विषकः-षिका, पापर्वकः-र्विका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कर्वति**वत् (173-A) ज्ञेयानि । [1]पर्वतः[A] ।

(981) **" पल गतौ "** (I-भ्वादिः-839. सक. सेट्. पर.) **ज्वलादिः ।**

पालकः-लिका, पालकः-लिका, पिपलिषकः-षिका, पापलकः-लिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कलति**वत् (174) ज्ञेयानि । शतरि [B]पलन्-न्ती इति, पलः-[2]पालः, [3]पलम्, [4]पललम्, [5]पलालम् इति रूपाणि चास्य धातोः सम्भवन्तीति विशेषः ।

(982) **"पल्पूल लवनपवनयोः"** (X-चुरादिः-1882. सक. सेट्. उभ.)

**अदन्तः ।**

' पल्यूल—' इति **क्षीरस्वाम्यादि**सम्मतः पाठः । '—शोधनयोः ' इत्यपि **क्वचित्** पाठः । ' पल्बूल—' इति, ' पल्वूल—' इति च **क्वचिद्** दृष्टः पाठः । ' **लवनपतनयोः** ' इति **दुर्गः ।**

पल्पूलकः-लिका, पिपल्पूलयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कलयति**वत् (176) ज्ञेयानि ।

(983) **" पश गतिनाशनयोः "** (I-भ्वादिः-सक. अक. सेट्. पर.)

धातुपाठेऽपठितोऽप्ययं धातुः ' जपजभदहदशभञ्ज**पशां** च ' (7-4-86) इत्यत्रोपादानात् सौत्रोऽयमस्तीति प्रतीयते । अर्थनिर्देशस्य कुत्रापि स्पष्टतया

1. ' भृहशीङ्यजि**पर्वि**—' [द. उ. 6. 14] इत्यादिना अतच्प्रत्यये रूपम् ।
2. '**ज्वलितिकसन्तेभ्यो** णः ' (3-1-140) इति कर्तरि विभाषा णप्रत्ययः । पक्षे पचाद्यचि—**पलः** इति रूपम् ।
3. संज्ञायां भावे घप्रत्ययः । बाहुलकात् क्लीबत्वम् । **पलम्**=मांसम्, उन्मान-विशेषश्च । परिमाणवाचकत्वेऽपि बाहुलकादेव घञ् न ।
4. औणादिके [द. उ. 8-114] कलप्रत्यये रूपम् । **पललम्**=तिलकल्कः ।
5. औणादिके [द. उ. 8-115] कालच्प्रत्यये रूपम् । **पलालम्**=निस्सारतृणादिकम् ।

A. ' दुदूर्विधून् धूर्वितुमेव गूर्णं मूर्वन्तमापूर्वित**पर्वता**ध्वरम् ॥' धा. का. 1. 73.

B. ' स्थलीर्हली सन्नलिनीश्च तीर्त्वा **पलन्** हरिश्चात्मबलप्रपोलः ।' धा. का. 2-22.

अप्रतीतावपि, **दशपाद्युणादिवृत्तौ** (1-112) '**पशिः** सौत्रो धातुर्नाशने' इति दर्शनात् नाशनार्थकत्वमस्येति ज्ञायते। "पसधातुर्दन्त्यान्तः सौत्रो गत्यर्थ इति माधवः, तालव्यान्त इति काशिका" इति बालमनोरमायाम्, तथा, **अष्टाध्यायीप्रकाशिकायाम्** (देवप्रकाशपातञ्जलकृतायाम्) 'जपजभ—' (7-4-86) इत्यत्र '**पम्पश्यते, पम्पशीति** गत्यर्थकोऽयं धातुः।' इत्युदाहृतत्वाच्च गतावप्ययं प्रयुज्यते इति ज्ञेयम्।

शब्विकरणस्यौत्सर्गिकत्वात, **क्षीरतरङ्गिण्याम्** '**पशोऽनुपसर्गात्**' (ग. सू. चुरादौ) इत्यत्र "गतावित्येव, अर्थानिर्देशात्। 'अनार्षोऽयम्' इति **चन्द्रः**। 'भ्वादेश्चुरादेश्चानुपसर्गस्य **पशेः** णिच्यदन्तत्वविधिः—' **इत्येके**। पशयति। उपसर्गान्नास्ति **प्रपशति**।" इत्युक्तत्वाच्च धातोरस्य भ्वादौ पाठः, गत्यर्थकत्वं चेति ज्ञायते। प्रकृतसूत्रे (7-4-86) '**पस**' इति दन्त्यान्तत्वेन **केचित्** पठन्ति।

गतौ सकर्मकः, नाशने त्वकर्मकः।

अनिट्कारिकासु धातोरस्योपादानाभावेन सेट्त्वं, 'शेषात् कर्तरि परस्मैपदम्' (1-3-78) इति परस्मैपदत्वं चेति यथायथमूह्यम्।

पाशकः-शिका, पाशकः-शिका, पिपशिषकः-षिका, [1]पम्पशकः-पंपशकः-शिका;
पशिता-त्री, पाशयिता-त्री, पिपशिषिता-त्री, पम्पशिता-त्री;
पशन्-न्ती, पाशयन्-न्ती, पिपशिषन्-न्ती; —
पशिष्यन्-न्ती-ती, पाशयिष्यन्-न्ती-ती, पिपशिषिष्यन्-न्ती-ती; —
— पाशयमानः, पाशयिष्यमाणः, — पम्पश्यमानः, पम्पशिष्यमाणः;

| | | | |
|---|---|---|---|
| [2]पट्-पड्-पशौ-पशः; | — | — | — |
| पशितम्-तः-तवान्, | पाशितः, | पिपशिषितः, | पम्पशितः-तवान्; |
| पशः, | पाशः, | पिपशिषुः, | पम्पशः; |
| पशितव्यम्, | पाशयितव्यम्, | पिपशिषितव्यम्, | पम्पशितव्यम्; |
| पशनीयम्, | पाशनीयम्, | पिपशिषणीयम्, | पम्पशनीयम्; |
| पाश्यम्, | पाश्यम्, | पिपशिष्यम्, | पम्पश्यम्; |
| ईषत्पशः-दुष्पशः-सुपशः; | | — | — |

1. यङन्तात्ण्वुलि, 'जपजभदहदशभञ्ज**पशां** च' (7-4-86) इति अभ्यासस्य नुगागमः। 'स च पदान्तवद् वाच्यः' (वा. 7-4-85) इति पदान्तवद्भावे सति, 'वा पदान्तस्य' (8-4-59) इति परसवर्णविकल्पः। एवं यङन्ते सर्वत्र ज्ञेयम्।
2. क्विपि, 'व्रश्चभ्रस्ज—' (8-2-36) इत्यादिना षत्वे जश्त्वे च रूपम्।



| | | | |
|---|---|---|---|
| पश्यमानः, | पाश्यमानः, | पिपशिष्यमाणः, | पम्पश्यमानः; |
| [1]पाशः, | पाशः, | पिपशिषः, | पम्पशः; |
| पशितुम्, | पाशयितुम्, | पिपशिषितुम्, | पम्पशितुम्; |
| [2]पष्टिः, | पाशना, | पिपशिषा, | पम्पशा; |
| पशनम्, | पाशनम्, | पिपशिषणम्, | पम्पशनम्; |
| पशित्वा, | पाशयित्वा, | पिपशिषित्वा, | पम्पशित्वा; |
| प्रपश्य, | प्रपाश्य, | प्रपिपशिष्य, | प्रपम्पश्य; |
| पाशम् २, पशित्वा २, | पाशम् २, पाशयित्वा २, | पिपशिषम् २, पिपशिषित्वा २, | पम्पशम् २; पम्पशित्वा २; |

[3]पशुः, [4]पांशुः।

**(984) "पश बन्धने"** (X-चुरादिः-1720. सक. सेट्. उभ.) [अ]

पाशकः-शिका, पिपाशयिषकः-षिका; इत्यादीनि सर्वाण्यपि रूपाणि **चौरादिकजासयतिवत्** (596) ज्ञेयानि। अस्य धातोर्णिज्विकल्पो नास्तीति विशेषः। [A]पाशितवान्।

**(985) "पष गतौ"** (X-चुरादिः-1863. सक. सेट्. उभ. **अदन्तः**।)

'पषोऽनुपसर्गात्' (ग. सू. चुरादौ) इत्यस्य स्वरूपमर्थादिकं च पूर्वस्मिन्नेव धातावुद्दिष्टमिति तत एव ज्ञेयम्। '**पशोऽनुपसर्गात्**' इति **क्षीरस्वामि**-

1. पश्यतेऽनेनेति करणे, संज्ञायाम् 'हलश्च' (3-3-121) इति घञ्। **पाशः**= आयुधविशेषः।
2. क्तिनि, षत्वे, 'ष्टुना ष्टुः' (8-4-41) इति ष्टुत्वे च रूपम्।
3. 'उणादयो बहुलम्' (3-3-1) इति उप्रत्यये रूपम्। **पशुः**=चतुष्पाज्जातिः।
4. औणादिके [द. उ. 1-112] कुप्रत्यये रूपम्। पश्यतेऽसौ-अल्पेनापि वायुना इति **पांशुः**=रेणुः। अत्र **दशपाद्युणादिवृत्तौ** '**पशि**' इतीदित् धातुः सौत्रत्वेनोपात्तः। परं तु प्रकृत (7-4-86) सूत्रे अनिदितमेव धातुं प्रतीमः। अत्र [द. उ. 1-112] पाठो निरीक्ष्यः।

A. 'मल्लो जिजम्भिषुरसूदितवीर्यमीशं
मुष्ट्या जजास बहु **पाशितवांश्च** दोष्णा॥' धा. का. 3.38.

[अ] '**पष** बन्धने' इति **पुरुषकार**संमतः पाठः। यदाह—"पाषण्डादिस्तु '**पष** अनुपसर्गात्' इत्यस्य कथादेर्भविष्यति। '**पष** बन्धने' इत्यस्यैव वा युजादेः।' (श्लो. 167 **दैव**व्याख्याने)," इति।

संमतः पाठः । पषकः-षिका, पिपषयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिककलयतिवत् (176) ज्ञेयानि ।

### (986) "**पसि नाशने**" (X-चुरादिः-1616. सक. सेट्. उभ.)

इदित्करणात् णिचो वैकल्पिकत्वं ज्ञेयम् ।

पंसकः-सिका, पिपंसयिषकः-षिका, पंसकः-सिका, पिपंसिषंकः-षिका, पापंसकः-सिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कुंशयति**वत् (232) ज्ञेयानि । [1]पांसुः[A] ।

### (987) "**पा पाने**" (I-भ्वादिः-925. सक. अनि. पर.)

'पाने **पिबति**, रक्षायां पाति, पायति शोषणे ॥' (श्लो. 5) इति **देवः** ।

[2]पायकः-यिका, [3]पायकः-यिका, पिपासकः-सिका, [4]पेपीयकः-यिका ;
पाता-त्री, पाययिता-त्री, पिपासिता-त्री, पेपीयिता-त्री ;
[5]पिबन्-न्ती, पाययन्-न्ती, पिपासन्-न्ती ; —
पास्यन्-न्ती-ती, पाययिष्यन्-न्ती-ती, पिपासिष्यन्-न्ती-ती ; —
[6]व्यतिपिबमानः, [7]पाययमानः, व्यतिपिपासमानः, पेपीयमानः ;

---

1. औणादिके [द. उ. 1-112] कुप्रत्यये दीर्घे च रूपमेवम् ।
2. '**आतो** युक् चिण्कृतोः' (7-3-33) इति युगागमः । एवं णमुलादिष्वपि यथासम्भवं युक् ज्ञेयः ।
3. ण्यन्तात् सर्वत्र 'शाच्छासाह्वाव्यावे**पां** युक्' (7-3-37) इति युगागमो ज्ञेयः । आदन्तलक्षणपुगागमस्य बाधकोऽयम् ।
4. यङन्ते सर्वत्र, 'घुमास्थागा**पा**जहातिसां हलि' (6-4-66) इति ईत्वम् । अभ्यासे गुणः ।
5. शतरि, '**पा**घ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां **पिब**जिघ्र—' (7-3-78) इत्यादिना **पिबादे**शोऽङ्गस्य भवति । आदेशस्यादन्तत्वाद् गुणाभावः इति **वृत्तिः** । '**पिबते**र्गुणप्रतिषेधः' (वा. 7-3-78) इति वचनमत्र प्रमाणम् । 'लोपः **पिबतेः**—' (7-4-4) इत्यत्र '**पिबतेः**' इति निर्देशात् गुणो न' इति **वर्धमानः** ।
6. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच् । सन्नन्ते तु 'पूर्ववत् सनः' (1-3-62) इति शानजिति ज्ञेयम् ।
7. धातोरस्य निगरणार्थत्वेऽपि, 'न पादमि—' (1-3-89) इति परस्मैपदनिषेधात् ण्यन्तात् 'णिचश्च' (1-3-74) इति शानज्भवत्येव ।

A. 'इत्यादिवादिषु जनेषु बिमोटितारिः पापप्रपण्डिपद**पांसु**रवाज्यधामा ।' धा.का. 3. 23.



व्यतिपास्यमानः, पाययिष्यमाणः, व्यतिपिपासिष्यमाणः, पेपीयिष्यमाणः ;
[1]दधिपीः-दधिप्यौ-दधिप्यः ; — — —
[2]पीतम्-पीतः-पीतवान्, पायितः, पिपासितः, पेपीयितः-तवान् ;
[3]उत्पिबः-विपिबः-पिबः, [4]रुधिरपायी[A], [5]मधुपायी[B], [6]क्षीरपायी,
[7]सुरापः-शीधुपः-सुरापी-शीधुपी, [C]मधुपः, पादपः, क्षीरपा[ब्राह्मणी],
[8]द्विपः-[D]-कच्छपः, [9]कुण्डपाय्यः[E] [क्रतुः], [10]क्षीरपीवा-क्षीरपीवरी,

---

1. क्विपि, 'घुमास्थागा**पा**—' (6-4-66) इत्यादिना ईत्वे रूपमेवम् ।
2. निष्ठायाम्, ईत्वे रूपमेवम् । एवं क्तिन्क्त्वाप्रत्ययादिष्वपि ईत्वं ज्ञेयम् । **पीतः** इत्यत्र, प्रत्यवसानार्थत्वादस्य धातोः (**प्रत्यवसानम्**=गलबिलाधःसंयोगानुकूलव्यापारः) अधिकरणे क्तप्रत्ययो ज्ञेयः । अर्शआद्यजन्तत्वेन '**पीता** गावः' इत्यादिषु स्थलेषु प्रयोग उपपन्नः ।
3. '**पा**घ्राध्माधेट्दृशः शः' (3-1-137) इति कर्तरि शप्रत्ययः । तस्य शित्त्वात् '**पा**घ्रा—' (7-3-78) इत्यादिना पिबादेशे, पररूपे च रूपम् । निरुपसृष्टादेवायं शप्रत्यय इति **केचित्** । सोपसृष्टादेवेति **परे** साधयन्ति ।
4. 'सुप्यजातौ णिनिस्ताच्छील्ये' (3-2-78) इत्यनेन णिनिप्रत्ययः । **रुधिरपायी**= राक्षसादिः ।
5 'बहुलमाभीक्ष्ण्ये' (3-2-81) इति णिनिप्रत्ययः । **आभीक्ष्ण्यम्**=पौनःपुन्यम् ।
6. 'व्रते' (3-2-80) इति णिनिप्रत्ययः । क्षीरपानं व्रतं यस्य स एवमुच्यते ।
7. 'गापोष्टक्' (3-2-8) इति कर्मण्युपपदे टक्प्रत्ययः । तत्र '**पिबतेः** सुराशीध्वोरिति वक्तव्यम्' (वा. 3-2-8) इति वचनात् उपपदनियमः । स्त्रियां टित्त्वात् ङीप् भवति **सुरापी-शीधुपी** इति । अन्योपपदेषु तु '**आतो**ऽनुपसर्गे कः' (3-2-3) इति कप्रत्यये टापि **क्षीरपा** इत्यादिकं भवतीति विशेषः ।
8. 'सुपि स्थः' (3-2-4) इत्यत्र, 'सुपि' इति योगविभागात् कप्रत्ययः । द्वाभ्यां पिबतीति **द्विपः**=गजः ।
9. 'क्रतौ **कुण्डपाय्य**सञ्चाय्यौ' (3-1-130) इत्यनेन ण्यति, आयादेशश्च निपातितः । कुण्डेन पीयतेऽस्मिन् सोम इति क्रतुविशेषेऽभिधेये **कुण्डपाय्य**शब्दः साधुः ।
10. '**आतो** मनिन्क्वनिब्वनिपश्च' (3-2-74) इत्यनेन क्वनिपि ईत्वे **क्षीरपीवा** इति रूपम् । स्त्रियाम्, 'वनो र च' (4-1-7) इति ङीप् रेफश्च भवति ।

A. 'राक्षसाः **कपि**मादाय पतिं **रुधिरपायिणाम्** ॥' भ. का. 9-95.
B. 'उपेयु**र्मधुपायिन्यः** क्रोशन्त्यस्तं **कपि**स्त्रियः ॥' भ. का. 6.127.
C. 'व्रीडजाड्यमभजन् **मधुपा** सा स्वां मदात् प्रकृतिमेति हि सर्वः ॥' शि. व. 10-18.
D. 'शर्मदं मारुतिं दूतं विषमस्थः **कपिद्विपम्** ।' भ. का. 6-89.
E. '**कुण्डपाय्य**वतां कच्चिदग्निच्चित्यावतां तथा ।' भ. का. 6-68.

[1]घृतपावा, [2]कीलालपाः, पीवा, [3]गजपायी, [4]पपिः, [5]पपिवान्,
[6]पामा, [7]दधिपायः, पायः, [A]पिपासुः, पेप्यः; -
पातव्यम्, पाययितव्यम्, पिपासितव्यम्, पेपीयितव्यम्;
[8]प्रपानीयम्-प्रपाणीयम्, पायनीयम्, पिपासनीयम्, पेपीयनीयम्;
पेयम्, पाय्यम्, पिपास्यम्, पेपीय्यम्;
[9]ईषत्पानः[B]-[C]दुष्पानः-सुपानः; — —
पीयमानः, पाय्यमानः, पिपास्यमानः, पेपीय्यमानः;
[10]प्रपा, पायः, पिपासः, पेपीयः;

---

1. 'आतो मनिन्—' (3-2-74) इत्यनेन वनिपि रूपमेवम् ।
2. 'अन्येभ्योऽपि दृश्यन्ते' (3-2-75) इति विच्प्रत्यये रूपम् ।
3. 'कर्तर्युपमाने' (3-2-79) इति णिनिप्रत्ययः । गज इव पिबतीति **गजपायी** ।
4. '**आदृ**गमहन—' (3-2-171) इति तच्छीलादिषु किः किन् वा प्रत्ययः, तस्य लिड्वद्भावातिदेशात् द्विर्वचनम् । '**आतो** लोप इटि च' (6-4-64) इति आकारलोपः । अभ्यासे ह्रस्वः ।
5. 'विभाषा पूर्वाह्णापराह्णाभ्याम्' (4-3-24) इत्यत्र **भाष्ये** '**पपुष** आगतम्-**पपिवद्**रूप्यम्—' इति प्रयुक्तत्वात् छान्दसोऽपि क्वसुः क्वचिद् भाषायामपि भवतीति ज्ञायते । क्वसौ, द्विर्वचने, 'वस्वेका**जाद्**घसाम्' (7-2-67) इतीडागमे च रूपमेवम् ।
6. '**आतो** मनिन्—' (3-2-74) इति मनिन्प्रत्यये रूपम् ।
7. 'अण् कर्मणि च' (3-3-12) इति क्रियार्थक्रियायामण् । कप्रत्ययापवादः ।
8. 'शेषे विभाषाऽकखादावषान्त उपदेशे' (8-4-18) इति णत्वविकल्पः ।
9. '**आतो** युच्' (3-3-128) इति ईषदाद्युपपदेषु खलपवादो युच्प्रत्ययः । '**दुष्पानः**' इत्यत्र 'षात् पदान्तात्' (8-4-35) इति निषेधाण्णत्वं न ।
10. 'घञर्थे कविधानम् स्थास्ना**पा**व्यधिहनियुध्यर्थम्' (वा. 3-3-58) इति घञर्थे कप्रत्ययः । प्रपिबन्त्यस्यामिति **प्रपा**=पानीयशाला ।

A. 'इतः स्म मित्रावरुणौ किमेतौ किमश्विनौ सोमरसं **पिपासू** ।' भ. का. 2. 41.

B. 'भवतु वपुषा यावांस्तावान् अगस्त्यरुषा पुनः
विधिरयमपाम् **ईषत्पान**स्तपांसि नमोऽस्तु वः ॥' अनर्घराघवे 7.14.

C. '**दुष्पानः** पुनरेतेन **कपिना** मृङ्गसंभृतः ।' भ. का. 9.108.



पातुम्, पाययितुम्, पिपासितुम्, पेपीयितुम्;
[1]सम्पीतिः, सपीतिः, [2]क्षीरपायिका, पायना, पिपासा, पेपीया;
[3]क्षीरपाणाः, [A]सुरापाणाः, सौवीरपाणाः, कषायपाणाः (वा उशीनरादयः।)
[4]मधुपानम्, [5]क्षीरपाणम्-क्षीरपानम् [वर्तते], सुरापाणः-सुरापानः [कंसः],
[6]पयःपानम्[B] [सुखम्], पायनम्, पिपासनम्, पेपीयनम्;
पीत्वा, पाययित्वा, पिपासित्वा, पेपीयित्वा;
[7]निपाय, प्रपाय्य, प्रपिपास्य, प्रपेपीय्य;
पायम् २, पीत्वा २,} पायम् २, पाययित्वा२,} पिपासम् २, पिपासित्वा २,} पेपीयम् २; पेपीयित्वा २;}
[8]पायुः, [9]पाकः,

---

1. 'स्थागा**पा**पचो भावे' (3-3-95) इति स्त्रियां सोपसर्गादपि क्तिन्प्रत्ययः । समाना पीतिः इति विशेषणसमासे 'समानस्य च्छन्दसि—' (6-3-84) इत्यत्र 'समानस्य' इति योगविभागात् सभावः । **सपीतिः**=सहपानम् ।
2. 'पर्यायार्हर्णोत्पत्तिषु ण्वुच्' (3-3-111) इति अर्हार्थे ण्वुच् । 'शायिकाऽद्य तव प्रापद्, अर्हसि **क्षीरपायिकाम्** ।' इति **प्र. सर्वस्वे** ।
3. '**पानं** देशे' (8-4-9) इति णत्वम् । अत्र क्षीरं पानं येषां ते **क्षीरपाणाः** इति वृत्तिः । **क्षीरपाणा**दयः शब्दाः देशविशेषवाचकाः । **क्षीरपाणा** उशीनराः । **सुरापाणः** प्राच्याः । **सौवीरपाणा** बाह्लीकाः । **कषायपाणा** गन्धाराः ।
4. देशविशेषाभिधानाभावादत्र णत्वं न ।
5. 'वा भावकरणयोः' (8-4-10) इति णत्वविकल्पः । भावार्थे—**क्षीरपाणम्—क्षीरपानम्** इति, करणार्थे **सुरापाणः-सुरापानः** इति चोदाहरणमिति ज्ञेयम् ।
6. 'कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम्' (3-3-116) इति ल्युट् । अत्र **पयःपानेन** पयःपानकर्तुः शरीरसुखसद्भावादीदृशस्थलेषु ल्युट् इति ज्ञेयम् ।
7. 'न ल्यपि' (6-4-69) इति ईत्वनिषेधः । '**निपीय** यस्य—' (नैषधे 1-1) इत्यादयः प्रयोगाः 'पीङ् पाने' इत्यस्माल्ल्यपि साधव इति ज्ञेयम् ।
8. 'कृवा**पा**—' [द. उ. 1-86] इत्यादिना उण्प्रत्यये रूपम् ।
9. 'इण्भीका**पा**—' [द. उ. 3-21] इत्यादिना कन्प्रत्ययः । **पाकः**=असुरविशेषः, अर्भकश्च ।

A. '**सुरापाण**परिक्षीबं रिपुदर्पहरोदयम् ।' भ. का. 9. 96.

B. '**पयःपान**मिवाशंसुः महानायादशोभनः ॥' भ. का. 7. 79.

[1]पीथः, [2]पम्पा, [3]पात्रम्, [4]पयः, [5]पेरुः ।

(988) “पा रक्षणे” (II-अदादिः-1056. सक. अनि. पर.)

‘पाने पिबति, रक्षायां पाति, पायति शोषणे ॥’ (श्लो. 5) इति देवः ।

[6]पायकः-यिका, [7]पालकः-[8]गोपालकः-लिका, पिपासकः-सिका, [9]पापायकः-यिका ;

[A]पाता-पात्री, पालयिता-त्री, पिपासिता-त्री, पापायिता-त्री ;

[10]पान्-न्ती-[B]ती, पालयन्-न्ती, पिपासन्-न्ती ; —

पास्यन्-न्ती-ती, पालयिष्यन्-न्ती-ती, पिपासिष्यन्-न्ती-ती ; —

1. ‘पातॄ—’ [द. उ. 6-32] इत्यादिना थक्प्रत्यये, ईत्त्वे च रूपम् । पिबति तेजांसि इति **पीथः**=आदित्यः मकरश्च ।
2. औणादिके [द. उ. 7-7] पप्रत्यये बाहुलकात् ह्रस्वनुमागमयोः निपातितयो रूपमेवम् । पिबन्त्यस्यामिति **पम्पा**=सरोविशेषः ।
3. औणादिके त्रप्रत्यये [द. उ. 8-90] रूपम् । पिबन्त्यनेनेति **पात्रम्**=भाजनम् ।
4. ‘**पिबतेरि** च’ [द. उ. 9-50] इत्यसुन्प्रत्यये इकारश्चान्तादेशः । **पयः**=जलं क्षीरं च ।
5. औणादिके रुप्रत्यये, धात्वन्तस्य एकारे च रूपम् । **पेरुः**=आदित्यः ।
6. ‘**आतो** युक् चिण्कृतोः’ (7-3-33) इति युगागमः । एवं घञादिष्वपि ज्ञेयम् ।
7. ‘**पातेर्लुग्** वक्तव्यः’ (वा. 7-3-37) इति ण्यन्ते सर्वत्र लुगागमः ।
8. गवां पालकः **गोपालकः** । 'नित्यं क्रीडाजीविकयोः' (2-2-17) इत्यनेन जीविकार्थकस्य नित्यसमासः ।
9. ‘गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम्’ (वा. 2 4-77) इति वचनादस्य लुग्विकरणत्वेन, ‘लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य’ (परिभाषा 91) इत्यनेन च ‘घुमास्थागापा—’ (6-4-66) इत्यादिषु नास्य ग्रहणम् । तेन ईत्वादिकमस्य नेति ज्ञेयम् । तेन यङन्ताण्वुलि द्वित्वे, अभ्यासह्रस्वे च, ‘दीर्घोऽकितः’ (7-4-83) इत्यभ्यासस्य दीर्घः । एवं यङन्ते सर्वत्र ज्ञेयम् ।
10. शत्रन्तात् स्त्रियाम्, ‘आच्छीनद्योर्नुम्’ (7-1-80) इति नुम्विकल्पः ।

A. ‘यद्भागिभाजोऽपि हि जानते तान् ज्ञेयं यदष्टादश यश्च **पाता** ।’ वा. वि. 2.53.

B. ‘**पान्त्यः** शिशून्, धान्यधनानि रान्त्यो, लान्त्यश्च काश्चित् कुसुमानि दान्त्यः ॥’ धा. का. 2. 49.



[1]व्यतिपानः, पालयमानः, [2]व्यतिपिपासमानः, पापायमानः ;

व्यतिपास्यमानः, पालयिष्यमाणः, व्यतिपिपासिष्यमाणः, पापायिष्यमाणः ;

[3]नपात्-नपातौ-नपातः, [A]तनूनपात्, अपान्नपात्, अपोनपात् ;

पातम्-तः-तवान्, पालितः, पिपासितः, पापायितः-तवान् ;

[4]विश्वपाः-सुपाः, [5]गोपः-नृपः, [6]अधिपः, [7]पायः, [8]गोपायी, [9]नगरपायी, [10]पपिवान्, पालः, [11]गोपालः, पिपासुः, पापाः ;

पातव्यम्, पालयितव्यम्, पिपासितव्यम्, पापायितव्यम् ;

[12]प्रपाणीयम्-प्रपानीयम्, पालनीयम्, पिपासनीयम्, पापायनीयम् ;

पेयम्, पाल्यम्, पिपास्यम्, पापाय्यम् ;

[13]ईषत्पानः-दुष्पानः-सुपानः ; — —

पायमानः, पालयमानः, पिपास्यमानः, पापाय्यमानः ;

1. ‘कर्तरि कर्मव्यतीहारे’ (1-3-14) इति कर्मव्यतीहारे शानच् ।
2. सन्नन्तात् ‘पूर्ववत् सनः’ (1-3-62) इत्यनेन कर्मव्यतीहारे शानच् ।
3. न पातीति **नपात्**=नप्ता । ‘नभ्राण्नपात्—’ (6-3-75) इत्यत्र निपातनात् नञ्तत्पुरुषे नञः प्रकृतिभावः, क्विपि तुगागमश्च । तन्वा न पातीति **तनूनपात्**=अग्निरिन्द्रश्च । अपोन**पात्**, **अपांनपात्** इत्यपि देवताविशेषवाचके पदे । सर्वेऽप्येते क्विबन्ताः । प्रक्रिया पूर्ववत् ।
4. विश्वं पातीति **विश्वपाः** । ‘अन्येभ्योऽपि दृश्यन्ते’ (3-2-75) इति विचि रूपमेवम् । एवं **सुपाः** इत्यत्रापि ।
5. ‘**आतोऽ**नुपसर्गे कः’ (3-2-3) इति कर्मण्युपपदे कर्तरि कप्रत्ययः । एवं **नृपः** इत्यादिष्वपि ज्ञेयम् ।
6. ‘**आत**श्चोपसर्गे’ (3-1-136) इति कर्तरि कप्रत्ययः ।
7. ‘श्याऽऽद्व्यध—’ (3-1-141) इत्यादिना आदन्तलक्षणे कर्तरि णप्रत्यये रूपम् ।
8. ‘व्रते’ (3-2-80) इति णिनिप्रत्यये युगागमः ।
9. ‘सुप्यजातौ णिनिस्ताच्छील्ये’ (3-2-78) इति णिनिप्रत्ययः ।
10. छान्दसोऽपि क्वसुरत्र धातौ भवतीति ‘विभाषा पूर्वाह्णापराह्णाभ्याम्’ (4-3-24) इत्यत्र भाष्ये ‘पपुष आगतं **पपिवद्**रूप्यम्—’इति प्रयोगाज्ज्ञायते । तेन क्वसुप्रत्यये, लिड्वद्भावेन द्विर्वचने, ‘**आतो** लोप इटि च’ (6-4-64) इत्याकारलोपे, ‘वस्वेका**जाद्**घसाम्’ (7-2-67) इतीडागमे च रूपम् ।
11. गाः पालयतीति **गोपालः** । ‘कर्मण्यण्’ (3-2-1) इति ण्यन्तादस्मादण्प्रत्ययः ।
12. ‘शेषे विभाषा—(8-4-18) इत्यनेन णत्वविकल्पः ।
13. ‘**आतो** युच्’ (3-3-128) इति ईषदाद्युपपदेषु खलपवादो युच् ।

A. ‘बभार बाष्पैर्द्विगुणीकृतं तनुः **तनूनपाद्** धूमवितानमाधिजैः ॥’ शि.व. 1. 62.

| | | | |
|---|---|---|---|
| पायः, | पालः, | पिपासः, | पापायः ; |
| पातुम्, | पालयितुम्, | पिपासितुम्, | पापायितुम् ; |
| पातिः, [1]सम्पातिः, | पालना, | पिपासा, | पापाया ; |
| पात्वा, | पालयित्वा, | पिपासित्वा, | पापायित्वा ; |
| प्रपाय, | प्रपाल्य, | प्रपिपास्य, | प्रपापाय्य ; |
| पायम् २, } पात्वा २, } | पालम् २, } पालयित्वा २, } | पिपासम् २, } पिपासित्वा २, } | पापायम् २ ; } पापायित्वा २; } |

[2]पतिः, [3]पिता, [4]पापम्, [5]पुमान्, [6]पाथः.

(989) "पार कर्मसमाप्तौ" (X-चुरादिः-1911. सक. सेट्. उभ.)

अदन्तः।

पारकः-रिका, पिपारयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिककालयतिवत् (185) ज्ञेयानि ।

[7]पारयः, [8]पारयिष्णुः, [9]पारणा, [A]निष्पारः ।

1. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां क्तिच् । पुंल्लिङ्गोऽयम् । **सम्पातिः**=जटायुभ्राता ।
2. '**पातेर्डतिः**' (द. उ. 1. 27.) इति डतिप्रत्ययः । पातीति **पतिः**=नायकः ।
3. औणादिके (द. उ. 2. 3.) तृन्प्रत्यये, तृच्प्रत्यये वा रूपम् । तत्र [द. उ. 2. 3.] निपातनात् धातोरित्वम् । पातीति **पिता**=जनकः ।
4. '**पानी**विषिभ्यः पः' [द. उ. 7.2.] इति पप्रत्यये रूपम् । दुर्जनैः पायते इति **पापम्**=कायवाङ्मनोदुश्चरितम् ।
5. '**पातेर्डुम्सुन्**' [द. उ. 9.48.] इति डुम्सुन्प्रत्यये, टिलोपे च रूपम् । पातीति **पुमान्**=नरः ।
6. '**पातेर्बले** जुट् च ; उदके थुट् च, अन्ने च' [द. उ. 9-63 to 5. इति बलेऽभिधेये जुडागमे **पाजः**=अग्निः; जलेऽभिधेये अन्ने च, थुडागमे **पाथः**=जलमन्नं च ।
7. 'अनुपसर्गाल्लिम्पविन्दधारि**पारि**—' (3-1-138) इति कर्तरि शप्रत्यय. । शप्रत्ययस्य शित्त्वेन सार्वधातुकत्वात् 'णेरनिटि' (6-4-51) इति णिलोपो न । शित्त्वेन शपि पररूपे गुणेऽयादेशे च रूपमेवम् ।
8. 'णेश्छन्दसि'(3-2-137) इति ताच्छीलिकः इष्णुच्प्रत्ययः । 'अयामन्ताल्वाय्येत्न्विष्णुषु' (6-4-55) इति णेरयादेशः । 'वीरुधः **पारयिष्णवः**—' इति श्रौतः (ऋ. वे.(10-97-3) प्रयोगः)
9. 'ण्यासश्रन्थो युच्' (3-3-107) इति युच् । णत्वम् ।

A. 'नि[दु]ष्पारदुश्चरिततीरणकृयथेशो नो चक्षमे पुटभितुं तमकत्रितोष्मा ॥' धा. का. 3. 59.



(990) "पाल रक्षणे" (X-चुरादिः-1609. सक. सेट्. उभ.)

'पल—' इति मैत्रेयक्षीरस्वाम्यादयः पठन्ति ।

पालकः-लिका, पिपालयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिककालयतिवत् (185) ज्ञेयानि । [1]कपोतपाली[A] ।

(991) "पि गतौ" (VI-तुदादिः-1405. सक. अनि. पर.)

| | | | |
|---|---|---|---|
| पायकः-यिका, | पायकः-यिका, | [2]पिपीषकः-षिका, | [3]पेपीयकः-यिका ; |
| पेता-त्री, | पाययिता-त्री, | पिपीषिता-त्री, | पेपीयिता-त्री, |
| [4]पियन्[B]-न्ती-ती, | पाययन्-न्ती, | पिपीषन्-न्ती ; | — |
| पेष्यन्-न्ती-ती, | पाययिष्यन्-न्ती-ती, | पिपीषिष्यन्-न्ती-ती ; | — |
| — | पाययमानः, पाययिष्यमाणः, | — | पेपीयमानः, पेपीयिष्यमाणः ; |
| सुपित्-पितौ-पितः ; | — | — | — |
| पितम्-तः, | पायितः, | पिपीषितः, | पेपीयितः-तवान् ; |
| पयः, | पायः, | पिपीषुः, | पेप्यः ; |
| पेतव्यम्, | पाययितव्यम्, | पिपीषितव्यम्, | पेपीयितव्यम् ; |
| पयनीयम्, | पायनीयम्, | पिपीषणीयम्, | पेपीयनीयम् ; |
| पेयम्, | पाय्यम्, | पिपीष्यम्, | पेपीय्यम् ; |
| ईषत्पयः-दुष्पयः-सुपयः ; | | — | — |
| पीयमानः, | पाय्यमानः, | पिपीष्यमाणः, | पेपीय्यमानः ; |

1. कपोतं पालयतीति **कपोतपालः** । 'कर्मण्यण्' (3-2-1) इत्यण् । स्त्रियाम्, अणन्तत्वेन ङीप् ।
2. सन्नन्तात् ण्वुलि, 'इको झल्' (1-2-9) इति सनः कित्त्वे, 'अज्झनगमां सनि' (6-4-16) इति दीर्घः । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
3. यङन्तात् ण्वुलि, 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः । एवं यङन्ते सर्वत्र ज्ञेयम् ।
4. शतरि, '**तुदादिभ्यः**—' (3-1-77) इति शप्रत्यये, 'अचि श्नुधातुभ्रुवाम्—' (6-4-77) इतीयङादेशः ।

A. 'चिक्रंसया कृत्रिमपत्रिपङ्क्तेः **कपोतपालीषु** निकेतनानाम् ।' शि. व. 3. 51.

B. 'व्यापारेऽत्र तदाऽमरानपि रियन् आशाः **पियन्** आधित- कौर्योत्क्षीणधनुष्प्रसूतनिनदः कंसे व्यकारीद् गरम् ।' धा. का. 2,83.

| | | | |
|---|---|---|---|
| [1]पयः, | पायः, | पिपीषः, | पेपीयः ; |
| पेतुम्, | पाययितुम्, | पिपीषितुम्, | पेपीयितुम् ; |
| पितिः, | पायना, | पिपीषा, | पेपीया ; |
| पयनम्, | पायनम्, | पिपीषणम्, | पेपीयनम् ; |
| पित्वा, | पाययित्वा, | पिपीषित्वा, | पेपीयित्वा ; |
| प्रपित्य, | प्रपाय्य, | प्रपिपीष्य, | प्रपेपीय्य ; |
| पायम् २, पित्वा २, | पायम् २, पाययित्वा २, | पिपीषम् २, पिपीषित्वा २, | पेपीयम् २ ; पेपीयित्वा २. |

(992) **" पिच्छ कुट्टने "** (X-चुरादिः-1576. सक. सेट्. उभ.)

**' पिच्च ' इति क्षीरस्वामी ।**

पिच्छकः-च्छिका, पिपिच्छयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कुट्टयति**वत् (207) ज्ञेयानि । ल्युटि-पिच्छनम्[A] ।

(993) **" पिजि वर्णे "** (II-अदादिः-1028. अक. सेट्. आत्म.)

'—सम्पर्चने' इति **शाकटायनः** । '—वर्णसम्पर्चनयोः' इति **सम्मताकारः** । '—अवयवे', 'अव्यक्ते शब्दे च' इति **काश्यपः** । 'पृजि—' इत्येके । इति **मा. धा. वृत्तौ** ।

'वर्णे **पिङ्क्ते** भवेत् पिञ्जेर्भाषार्थे पिञ्जयेदिति ।' (श्लो. 67) इति **देवः** । पिञ्जकः-ञ्जिका, पिञ्जकः-ञ्जिका, पिपिञ्जिषकः-षिका, पेपिञ्जकः-ञ्जिका ; इत्यादीनि समस्तान्यपि रूपाणि आदादिक**निजति**वत् (672) ज्ञेयानि । शानचि—[B]पिञ्जानः ।

(994) **" पिजि हिंसाबलादाननिकेतनेषु "**

**(X-चुरादिः-1567. सक. सेट्. उभ.)**

' पिज—' इति **शाकटायनः** ।

पिञ्जकः-ञ्जिका, पिपिञ्जयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि

1. भावे, 'एरच्' (3-3-56) इत्यच्प्रत्ययः । घञपवादः ।

A. 'कः स्मापयेत विभुमेनमशिश्लिषद् यः पन्थन् व्रजेऽत्र भव**त्पिच्छन**भाग्भिरेवं ।' धा. का. 3. 18.

B. 'शिञ्जान**पिञ्जान**सुवर्णभूषासम्पृञ्जितो वृज्यविवृञ्जिसेव्यः ।' धा. का. 2.46.



चौरादिक**कुंशयति**वत् (232) ज्ञेयानि । भावे घञर्थेऽचि [A]विपिञ्जः ।

(995) **" पिजि भाषार्थः "** (X-चुरादिः-1758. सक. सेट्. उभ.)

'.........भाषार्थे **पिञ्जयेदि**ति ।' (श्लो. 67) इति **देवः** । **आस्वदीयः** ।

पिञ्जकः-ञ्जिका, पिपिञ्जयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कुंशयति**वत् (232) ज्ञेयानि । इदित्करणात् णिचो वैकल्पिकत्वम् ।

(996) **" पिट शब्दसंघातयोः "** (I-भ्वादिः-311. अक. सेट्. पर.)

पेटकः-टिका, पेटकः-टिका, पिपिटिषकः-पिपेटिषकः-षिका, पेपिटकः-टिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**केटति**वत् (190) बोध्यानि । घञन्ते, पेटी[B] इति । [1]पिटकम् ।

(997) **" पिठ हिंसासंक्लेशनयोः "** (I-भ्वादिः-339. सक. सेट्. पर.)

पेठकः-ठिका, पेठकः-ठिका, पिपिठिषकः-पिपेठिषकः-षिका, पेपिठकः-ठिका ; इत्यादीनि सर्वाणि रूपाणि **केटति**वत् (190) ज्ञेयानि । [2]पीठम्[C], पीठी ।

(998) **" पिडि संघाते "** (I-भ्वादिः-274. अक. सेट्. आत्म.)

'संघाते पिण्डयेत् पिण्डेस्तत्रैव शपि **पिण्डते** ।' (श्लो. 90) इति **देवः** । पिण्डकः-ण्डिका, पिण्डकः-ण्डिका, पिपिण्डिषकः-षिका, पेपिण्डकः-ण्डिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कुण्ठति**वत् (209) ज्ञेयानि । पिण्डमानः, पिण्डयमानः, पिपिण्डिषमाणः, पिपिण्डिषिष्यमाणः, इति शानचि रूपाणीति विशेषः । पचाद्यचि-पिण्डः[D] ।

1. 'क्वुन् शिल्पिसंज्ञयोः—' (द. उ. 3. 5.) इति क्वुन्प्रत्यये रूपम् । **पिटकम्** = पर्वतशिखरः ।

2. घञि, गुणापवादतया, 'अन्येषामपि दृश्यते' (6-3-137) इति दीर्घः ।

A. 'आश्वाठितारिकुलतुञ्ज**विपिञ्ज**शीलः संपेसयन् गृहमसान्त्वयद् एष गोपीः ।' धा. का. 3.17.

B. 'क्वचिच्च **पेटी**शतपूर्णहाटकान् क्वचित् सटालोटनलोलघोटकान् ॥' धा. का. 1.41.

C. 'रोठन् नृशंसालुठितैरनोठकैर्वृतान् धनाढ्यैर्मणि**पीठ**संश्रयैः ॥' धा. का. 1. 44.

D. 'स भण्डिलो भोजनृपाल**पिण्ड**भुक् प्रमुण्डितांस्तत्र जनान् अतुण्डकान् ॥' धा. का. 1. 36.

**(999) " पिडि संघाते "** (X-चुरादिः-1670. अक. सेट्. उभ.)

'सङ्घाते **पिण्डयेत्** पिण्डेस्तत्रैव शपि पिण्डते ।' (श्लो. 90) इति **देवः** ।

पिण्डकः-ण्डिका, पिपिण्डयिषकः-षिका, पिण्डकः-ण्डिका, पिपिण्डिषकः-षिका, पेपिण्डकः-ण्डिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चिन्तयति**वत् (523) बोध्यानि । [A]पिण्डितः ।

**(1000) " पिवि सेचने "** (I-भ्वादिः-588. सक. सेट्. पर.)

'— सेवने' इति **केचित्** ।

पिन्वकः-न्विका, पिन्वकः-न्विका, पिपिन्विषकः-षिका, पेपिन्वकः-न्विका ; इत्यादीनि समस्तान्यपि रूपाणि भौवादिक**जिन्वति**वत् (604) ज्ञेयानि ।

[B]पिन्वितम् ।

**(1001) " पिश अवयवे "** (VI-तुदादिः-1437. अक. सेट्. पर.)

**मुचादिः** । अवयवे=अवयवक्रियायामित्यर्थः । अयं दीपनायामपि वर्तते । 'त्वष्टा रूपाणि **पिंशतु**—' ऋ. वे. (10-184-1), 'नक्षत्रेभिः पितरो द्यामपिंशन् ।' ऋ. वे. (10-63-11) इत्यादिषु दीपनार्थे दर्शनात् ।

पेशकः-शिका, पेशकः-शिका, पिपिशिषकः-पिपेशिषकः-षिका, पेपिशकः-शिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**केटति**वत् (190) ज्ञेयानि । शतरि—[1]पिंशन्-ती, इति रूपम् ।

**(1002) "पिष्लृ सञ्चूर्णने"** (VII-रुधादिः-1452. सक. अनि. पर.)

**सञ्चूर्णनम्**=धान्यादीनां चूर्णीकरणम्, हिंसा च ।

पेषकः-षिका, पेषकः-षिका, [2]पिपिक्षकः-क्षिका, पेपिषकः-षिका ;
पेष्टा-पेष्ट्री, पेषयिता-त्री, पिपिक्षिता-त्री, पेपिषिता-त्री ;

1. शतरि, तुदादित्वात् शप्रत्यये, 'शे **मुचादीनाम्**' (7-1-59) इति नुमि रूपमेवम् ।
2. सन्नन्ताण्वुलि, 'हलन्ताच्च' (1-2-10) इति सनः कित्वे, 'षढोः कः सि' (8-2-41) इति षकारस्य ककारे, 'इण्कोः' (8-3-57) इति सकारस्य षत्वे च रूपमेवम् । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।

A. 'इत्थं वदत्यसुरजासिनि **पिण्डित**ायस्स्थेमाऽथ रोषितमतिः प्रतिमल्लडेपी ।' धा. का. 3. 32.

B. 'विश्वेन्वितं सज्जधु**पिन्वित**ाङ्कं मिन्वन्तमुच्चैः कृपयैव निन्वकान् ।' धा.का.1.75.



[[1]चौरस्य] पिंषन्-ती, [धानाः] पिंषन्, पेषयन्-न्ती, पिपिक्षन्-न्ती ; —
[A]पेक्ष्यन्-न्ती-ती, पेषयिष्यन्-न्ती-ती, पिपिक्षिष्यन्-न्ती-ती ; —
— पेषयमाणः, पेषयिष्यमाणः, — पेपिष्यमाणः, पेपिषिष्यमाणः ;
पिट्-पिषौ-पिषः ; — — —
पिष्टम्-ष्टः, [2]पिष्टः, पेषितः, पिपिक्षितः, पेपिषितः-तवान् ;
पिषः, [3]पेषणः, पेषः, पिपिक्षुः, पेपिषः ;
पेष्टव्यम्, पेषयितव्यम्, पिपिक्षितव्यम्, पेपिषितव्यम् ;
पेषणीयम्, पेषणीयम्, पिपिक्षणीयम्, पेपिषणीयम् ;
पेष्यम्, पेष्यम्, पिपिक्ष्यम्, पेपिष्यम् ;
ईषत्पेषः-दुष्पेषः-सुपेषः ; — —
पिष्यमाणः, पेष्यमाणः, पिपिक्ष्यमाणः, पेपिष्यमाणः ;
पेषः, पेषः, पिपिक्षः, पेपिषः ;
पेष्टुम्, पेषयितुम्, पिपिक्षितुम्, पेपिषितुम् ;
पिष्टिः, [4]पिष्टिः, पेषणा, पिपिक्षा, पेपिषा ;
पेषणम्, पेषणम्, पिपिक्षणम्, पेपिषणम् ;
पिष्ट्वा, पेषयित्वा, पिपिक्षित्वा, पेपिषित्वा ;
विनिष्पिष्य, प्रपेष्य, प्रपिपिक्ष्य, प्रपेपिष्य ;
[5]शुष्कपेषम्[B], [C]चूर्णपेषम्, रूक्षपेषं वा पिनष्टि । [6]उरःप्रतिपेषं[D]

1. 'जासिनिप्रहणनाटक्राथ**पिषां** हिंसायाम्' (2-3-56 इति कर्मणि षष्ठी । हिंसाभिन्नार्थे तु 'धानाः **पिंषन्**' इत्यत्र न ।
2. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां क्तप्रत्ययः । **पिष्टः**=सक्तुः ।
3. नन्द्यादेः (3-1-134) आकृतिगणत्वात् कर्तरि ल्युः ।
4. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां क्तिच् । **पिष्टिः**=सक्तुः ।
5. 'शुष्कचूर्णरूक्षेषु **पिषः**' (3-4-35) इति णमुल् । 'कषादिषु यथाविध्यनुप्रयोगः' (3-4-46) इति णमुलन्तधातोरेवानुप्रयोगः । एवं **चूर्णपेषम्**, **रूक्षपेषम्** इत्यत्रापि ज्ञेयम् ।
6. 'स्वाङ्गे—' (3-4-54) इत्यनुवर्तमाने, 'परिक्लिश्यमाने च' (3-4-55) इति द्वितीयान्तात् णमुल् । कृत्स्नमुरः पीडयन्तो युध्यन्ते इत्यर्थः । अध्रुवार्थोऽयं योगः ।

A. '........**पेक्ष्यतस्तु** माधवमभङ्गभुजेषु तेषु ॥' धा. का. 3.2.
B. '**शुष्कपेषं पिनष्म्युर्वीम्** अखिन्दानः स्वतेजसा ॥' भ. का. 6.37.
C. 'वर्म करतलयुगेन महत्तनु**चूर्णपेषम**पिषद् रुषा परः ॥' शि. व. 15.76.
D. 'पीडिते पुर **उरःप्रतिपेषं** भर्तरि स्तनयुगेन युवत्याः ।' शि. व. 10.46.

युध्यन्ते । [1]उदपेषं पिनष्टि । [A]मूर्धपेषम्, मूर्धानं पेषं वा युध्यन्ते ।

| | | | |
|---|---|---|---|
| पेषम् २, पिष्ट्वा २, | पेषम् २, पेषयित्वा २, | पिपिक्षम् २, पिपिक्षित्वा २, | पेपिषम् २ ; पेपिषित्वा २ ; |

[2]पिनाकः, पिण्याकम् ।

(1003) "**पिस गतौ**" (X-चुरादिः-1568. सक. सेट्. उभ.)

पेसकः-सिका, पिपेसयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चोरयति**वत् (546) ज्ञेयानि । [B]संपेसयन् ।

(1004) "**पिसि भाषार्थः**" (X-चुरादिः-1763. सक. सेट्. उभ.)

**आस्वदीयः ।**

'णौ **पिंसयति** भाषार्थे, गत्यां तु शपि पेसति ।' (श्लो. 192) इति **देवः** ।

पिंसकः-सिका, पिपिंसयिषकः-षिका, पिंसकः-सिका, पिपिंसिषकः-षिका, पेपिंसकः-सिका ;

इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कुंशयति**वत् (232) ज्ञेयानि ।

(1005) "**पिसृ गतौ**" (I-भ्वादिः-719. सक. सेट्. पर.)

'इह **क्वचित्कोशे विसृ वेसृ**—इति पठ्यते ।' इति **मा. धा. वृत्तौ** ।

'णौ पिंसयति भाषार्थे, गत्यां तु शपि **पेसति** ।' (श्लो. 192) इति **देवः** ।

पेसकः-सिका, पेसकः-सिका, पिपिसिषकः-पिपेसिषकः-षिका,

1. '**स्नेहने पिषः**' (3-4-38) इति णमुल् । '**पेषं**वासवाहनधिषु च' (6-3-58) इति उदकशब्दस्योदादेशः । उदकेन पिनष्टीत्यर्थः ।
2. '**पिनाकादयश्च**' [द. उ. 3-34] इति आकप्रत्यये, षकारस्य नकारः, गुणाभावश्च निपातनात् भवति । पिनष्ट्यनेन शत्रून् इति **पिनाकः**=रुद्रधनुः, शूलं वा । अत्रैव गणे निपातनात् युगागमः, षकारस्य णकारः गुणाभावश्च । अतः **पिण्याकम्** इत्यपि सिद्ध्यति । **पिण्याकम्**=तिलपिष्टकल्कः ।

A. 'परितः पीड्यमानेऽङ्गे ध्रुवेऽप्युपपदे णमुल् ।
**मूर्धपेषं** नियुध्यन्ते, **मूर्धानं पेष**मित्यपि ॥' प्र. सर्वस्वे.

B. 'आश्वाठितारिकुलतुङ्गविपिञ्जशीलः
**संपेसयन्** गृहमसान्त्वयदेष गोपीः ।' धा. का. 3-17.



पेपिसकः-सिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककिटतिवत (190) बोध्यानि । [1]पेस्वरः, अनुपिसितः[A] ।

(1006) "**पीङ् पाने**" (IV-दिवादिः-1141. सक. अनि. आत्म.)

**स्वादिः ।**

पायकः-यिका, पायकः-यिका, पिपीषकः-षिका, पेपीयकः-यिका ; इत्यादीनि सर्वाण्यपि रूपाणि दैवादिकधीङ्धातुवत्, (901) ज्ञेयानि । पीयमानः, [2]पाययन्-न्ती, [3]पीवा, इतीमानि रूपाणि अधिकान्यत्रेति विशेषः । आपीय[B] ।

(1007) "**पीड अवगाहने**" (X-चुरादिः-1544. सक. सेट्. उभ.)

अवगाहनम्—**बाधनम्** । '**बाधगाहनयोः**' इति **द्रुमे** । '**—गहने**' इति **क्षीरस्वामी** ।

पीडकः-डिका, पिपीडयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कीटयति**वत् (194) ज्ञेयानि । णमुलि–[4]पाणावुपपीडं पाण्युपपीडं, पाणिनोपपीडं [वा धारयति] । [5]पीडा, [6]जनापीडः, [C]मुष्टिपीडम्,

1. '**स्थेशभासपिस**—' (3-2-175) इति ताच्छीलिके वरच्प्रत्यये एवं रूपम् ।
2. '**निगरण**चलनार्थेभ्यश्च' (1-3-87) इति ण्यन्तात् नित्यं परस्मैपदम् ।
3. 'अन्येभ्योऽपि दृश्यन्ते (3-2-75) इति वनिप्प्रत्यये एवं रूपम् ।
4. 'सप्तम्यां चोप**पीड**रुधकर्षः' (3-4-49) इति णमुल् । 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (2-2-21) इति समासविकल्पः ।
5. युचं बाधित्वा भिदादिपाठात् (3-3-104) अङ् ।
6. 'कर्मण्यण्' (3-2-1) इति अण्प्रत्यये रूपम् । जनान्, आ=समन्तात् पीडयतीति विग्रहः ।

A. 'जीमूतचर्चिरवझर्झरवाद्यहृद्यं
तेनैव चा**ऽनुपिसितो** निलयं पिपेस ॥' धा. का. 1.89.

B. '**आपीय** तद्गिरममाननिरीतरोषः
प्रीतिं श्यतोऽस्य स करेण शिरोधिमच्छात् ।' धा. का. 2.59.

C. 'धनुररिभिरसह्यं **मुष्टिपीडं** दधाने ।' (भ. का. 1-26) इत्यत्र '**उप**' इत्युपसर्गस्याविवक्षा ज्ञेया । यथा 'उपेयिवान्' इत्यत्र, 'ईयिवान्' इति सिद्ध्यर्थं '**उप**' इत्यस्याविवक्षा ।

[A]नयोपपीडम्, [1]तिलपीडकः, [B]बाहूपपीडम् ।

(1008) "**पील प्रतिष्टम्भे**" (I-भ्वादिः-521. अक. सेट्. पर.)

**प्रतिष्टम्भः**=रोधनम् ।

पीलकः-लिका, पीलकः-लिका, पिपीलिषकः-षिका, पेपीलकः-लिका; इत्यादीनि सर्वाणि रूपाणि भौवादिक**कीलति**वत् (195) बोध्यानि । पीलितः[C] ।

(1009) "**पीव स्थौल्ये**" (I-भ्वादिः-563. सक. सेट्. पर.)

पीवकः-विका, पीवकः-विका, पिपीविषकः-षिका, पेपीवकः-विका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कीलति**वत् (195) ज्ञेयानि । [2]पीवरः, [D]पीवितः ।

(1010) "**पुट संश्लेषणे**" (VI-तुदादिः-1367. अक. सेट्. पर.)

**कुटादिः ।**

'भाषासंसर्गसंश्लेषे पोटयेत् पुटयेत् **पुटेत्** ॥' (श्लो. 75) इति **देवः** ।

पोटकः-टिका, पोटकः-टिका, पुपुटिषकः-षिका, पोपुटकः-टिका; पुटिता-त्री, प्रपुटितम्-[E]तः-तवान्, इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**कुटति**वत् (204) ज्ञेयानि ।

(1011) "**पुट भाषार्थः**" (X-चुरादिः-1754. सक. सेट्. उभ.)

**आस्वदीयः ।**

'भाषासंसर्गसंश्लेषे **पोटयेत्** पुटयेत् पुटेत् ॥' (श्लो. 75) इति **देवः** ।

पोटकः-टिका, पुपोटयिषकः-षिका; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक-

1. पीडयतीति **पीडकः** । तिलस्य पीडकः **तिलपीडकः**=तैलाविष्करणार्थो दारुविशेषः ।
2. 'छित्वरछत्वरधीवर**पीवर**—' [द. उ. 8-49] इति ष्वरच्प्रत्यये, वलोपोऽगुणत्वं च निपात्यते । **पीवरः**=स्थूलः ।

A. 'सलीलमालिङ्ग्य **नयोपपीड**मनामयं पृच्छति वासवस्त्वाम् ।' नैषधे 6.78.
B. '**बाहूपपीड**माश्लिष्य जगाहे द्यां निशाचरः ॥' भ. का. 5.94.
C. 'पिच्छस्रजा **पीलित**नीलकुन्तलं शीलेन संकीलितलोकमानसम् ॥' धा.का. 1.67.
D. '**अपीवितां** नाप्यतिमीवितां श्रितं तनुं सुतीवोरुमनीवमध्यमाम् ॥' धा.का. 1.72.
E. 'ततोऽतिकुटिलाशयैः **प्रपुटितैः** कुचज्जीवितैः
गुजद्भिरपि सैनिकैः सुगुडितां डिपद्भिर्जनान् ।' धा. का. 2. 80.



**कोटयति**वत् (205) बोध्यानि । अस्य धातोरुभयपदित्वात्, शतरि पोटयन्-न्ती, पुपोटयिषन्, पोटयिष्यन्, पुपोटयिषिष्यन्-न्ती-ती; इति विशेषः ।

(1012) "**पुट संसर्गे**" (X-चुरादिः-1913. सक. सेट्. उभ.)

**कथादिः, अदन्तश्च ।**

'भाषासंसर्गसंश्लेषे पोटयेत् **पुटयेत्** पुटेत् ॥' (श्लो. 75) इति **देवः** ।

पुटकः-टिका, पुपुटयिषकः-षिका; इत्यादीनि सर्वाणि रूपाणि प्रायः चौरादिक**कथयति**वत् (162) बोध्यानि । [A]पुटयितुम् ।

(1013) "**पुटि भाषार्थः**" (X-चुरादिः-1793. सक. सेट्. उभ.)

**आस्वदीयः ।**

पुण्टकः-ण्टिका, पुपुण्टयिषकः-षिका, पुण्टकः-ण्टिका, पुपुण्टिषकः-षिका, पोपुण्टकः-ण्टिका; इत्यादीनि सर्वाण्यपि रूपाणि **कुण्ठयति**वत् (210) ज्ञेयानि ।

(1014) "**पुट्ट अल्पीभावे**" (X-चुरादिः-1559. अक. सेट्. उभ.)

पुट्टकः-ट्टिका, पुपुट्टयिषकः-षिका, पुट्टयिता-त्री, पुपुट्टयिषिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि विशेषरूपाणि विना चौरादिक**कुट्टयति**वत् (207) बोध्यानि । कर्तरि क्तप्रत्यये [B]प्रपुट्टितः इति ।

(1015) "**पुड उत्सर्गे**" (VI-तुदादिः-1384. सक. सेट्. पर.)

**कुटादिः । 'मुड' इति आत्रेयः ।**

पोडकः-डिका, पोडकः-डिका, पुपुडिषकः-षिका, पोपुडकः-डिका; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**कुटति**वत् (204) ज्ञेयानि । [C]पुडित्वा ।

A. 'दुष्पारदुश्चरिततीरणकृच्यथेशो
नो चक्षमे **पुटयितुं** तमकत्रितोष्मा ॥' धा. का. 3.59.
B. 'सा पूतना च शिशुभक्षणकुट्टनोत्का जघ्ने **प्रपुट्टित**कृपेण विचुट्टिताघा ।' धा. का. 3. 16.
C. 'पोड्यौऽयं चुडतेति केऽपि, जुडतेत्यन्ये कडन्तोऽलुठन्
देवे स्वैर्लुलिते कुडत्विषि कुडद्गात्रे **पुडित्वा**ऽऽदरम् ।' धा. का. 2. 81.

(1016) "**पुडि खण्डने**" (I-भ्वादिः-326. सक. सेट्. पर.)

**मैत्रेया**नुसारेण पठितोऽयम् ।

पुण्डकः-ण्डिका, पुण्डकः-ण्डिका, पुपुण्डिषकः-षिका, पोपुण्डकः-ण्डिका ; इत्यादीनि सर्वाण्यपि रूपाणि **कुण्ठति**वत् (209) ज्ञेयानि । [1]पुण्ड्रम्, [2]पुण्डरीकम् इति रूपे इति विशेषः ।

(1017) "**पुण कर्मणि शुभे**" (VI-तुदादिः-1333. अक. सेट्. पर.)

'पुण कर्मणि शब्दे च' इति **क्षीरस्वामि**सम्मतः पाठः ।

पोणकः-णिका, पोणकः-णिका, [3]पुपुणिषकः-पुपोणिषकः-षिका ; पोपुणकः-णिका ;
पोणिता-त्री, पोणयिता-त्री, पुपुणिषिता-पुपोणिषिता-त्री, पोपुणिता-त्री ;
[4]पुणन्-न्ती-ती, पोणयन्-न्ती, पुपुणिषन्-पुपोणिषन्-न्ती ; —
पोणिष्यन्-न्ती-ती, पोणयिष्यन्-न्ती-ती, पुपुणिषिष्यन्-पुपोणिषिष्यन्-न्ती-ती ; —
— पोणयमानः, पोणयिष्यमाणः, — पोपुण्यमानः, पोपुणिष्यमाणः ;
प्रपुण्-प्रपुणौ-प्रपुणः ; — — —
पुणितम्-तः, पोणितः, पुपुणिषितः-पुपोणिषितः, पोपुणितः-तवान् ;
[5]निपुणः, आचारनिपुणः, पोणः, पुपुणिषुः-पुपोणिषुः, पोपुणः ;
पोणितव्यम्, पोणयितव्यम्, पुपुणिषितव्यम्-पुपोणिषितव्यम्, पोपुणितव्यम् ;
पोणनीयम्, पोणनीयम्, पुपुणिषणीयम्-पुपोणिषणीयम्, पोपुणनीयम् ;

---

1. औणादिके रक्प्रत्यये एवं रूपम् । **पुण्ड्रम्**=इक्षुभेदः । इक्षुसादृश्यात् अन्यत्रापि **पुण्ड्र**त्वव्यवहारः ।
2. 'फर्फरीकादयश्च' [द. उ. 3-38] इत्यत्र 'मृद्वीक ......**पुण्डरीक**—' इति **भोजेन** निपातितः ।' इति धा. का. व्याख्याने. (1.43.) ।
3. 'रलो व्युपधात्—' (1-2-26) इति कित्त्वविकल्पः । एवं सन्नन्ते सर्वत्र, क्त्वा-प्रत्ययेऽपि, रूपद्वयस्योपपत्तिर्ज्ञेया ।
4. '**तुदादिभ्यः** शः' (3-1-77) इति कर्तरि शप्रत्ययः । 'आच्छीनद्योर्नुम्' (7-1-80) इति नुम् वा भवति ।
5. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कप्रत्ययः ।



[1]पुण्यम्-[A]पोण्यम्, पुपुणिष्यम्-पुपोणिष्यम्, पोपुण्यम् ;
ईषत्पोणः-दुष्पोणः-सुपोणः ; — —
पुण्यमानः, पोण्यमानः, पुपुणिष्यमाणः, पुपोणिष्यमाणः, पोपुण्यमानः ;
पोणः, पोणः, पुपुणिषः-पुपोणिषः, पोपुणः ;
पोणितुम्-पोणयितुम्, पुपुणिषितुम्-पुपोणिषितुम्, पोपुणितुम् ;
[2]पुणितिः, पोणना, पुपुणिषा-पुपोणिषा, पोपुणा ;
पोणनम्, पोणनम्, पुपुणिषणम्-पुपोणिषणम्, पोपुणनम् ;
पुणित्वा-पोणित्वा, पोणयित्वा, पुपुणिषित्वा-पुपोणिषित्वा, पोपुणित्वा ;
प्रपुण्य, प्रपोण्य, प्रपुपुणिष्य-प्रपुपोणिष्य, प्रपोपुण्य ;
पोणम् २, पुणित्वा २-पोणित्वा २, } पोणम् २, पोणयित्वा २, } पुपुणिषम् २- पुपोणिषम् २, पुपुणिषित्वा २-पुपोणिषित्वा २, } पोपुणम् २ ; पोपुणित्वा २ ; }
[3]पुण्डरीकम्.

(1018) "**पुथ हिंसायाम्**" (IV-दिवादिः-1119. सक. सेट्. पर.)

'**पुथ्येत्** पुन्थति हिंसार्थे, भाषार्थे पोथयेदिति ॥' (श्लो. 100) इति **देवः** ।
पोथकः-थिका, पोथकः-थिका, पुपुथिषकः-पुपोथिषकः-षिका, पोपुथकः-थिका ; इत्यादीनि सर्वाण्यपि रूपाणि दैवादिक**कुथ्यति**वत् (218) ज्ञेयानि । पोथ्यम्[B] ।

(1019) "**पुथ भाषार्थः**" (X-चुरादिः-1776. सक. सेट्. उभ.)

**आस्वदीयः** ।

---

1. 'जनिकृति**पुणिभ्यः** क्यप्' इति **भोजो**क्तेः क्यप् प्रत्ययः ।
2. 'तितुत्रेष्वग्रहादीनाम्—' (वा. 7-2-9) इतीट् भवति ।
3. '**पुण**' इत्यस्य धातोर्णकारस्य डकारे, डप्रत्ययस्य रुडागमे च एवं रूपम् ।
'**पुण्डरीकं** सिताम्भोजे सितच्छत्रे च भेषजे ।
पुंसि व्याघ्रेऽग्निदिङ्नागे कोशकारान्तरेऽपि च ॥' इति **मेदिनी** ।

A. 'ईशस्य **पुण्य**सुगमस्य वधं मुणन्तो
मल्लाश्च यत्र चुकुणुः शुनका इवोच्चैः ।' धा. का. 2.76.

B. 'तं प्लुष्यद्दृष्टिनृत्यद्वृषमपि च गतत्राससुत्कुथ्यदङ्गम्
**पोथ्यं** प्रोचे स्वरेण स्वजनविशुधितं क्षिप्यता पुष्पमाध्वीम् ॥' धा. का. 2. 56.

'पुथ्येत पुन्थति हिंसार्थे, भाषार्थे **पोथयेदिति** ॥' (श्लो. 100) इति **देवः** ।
पोथकः-थिका, पुपोथयिषकः-षिका; पोथयिता-त्री, पुपोथयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चोदयति**वत् (542) बोध्यानि ।

**(1020) "पुथि हिंसासंक्लेशनयोः"** (I-भ्वादिः-44. सक. सेट्. पर.)

'पुथ्येत् **पुन्थति** हिंसार्थे, भाषार्थे पोथयेदिति ॥' (श्लो. 100) इति **देवः** ।
पुन्थकः-न्थिका, पुन्थकः-न्थिका, पुपुन्थिषकः-षिका, पोपुन्थकः-न्थिका ; इत्यादीनि सर्वाण्यपि रूपाणि **कुन्थति**वत् (220) ज्ञेयानि । ल्यपि प्रपुन्थ्य[A] इति रूपम् । [1]खड्गोपपुन्थं खड्गेनोपपुन्थम् वा शत्रुं मारयति ।

**(1021) "पुर अग्रगमने"** (VI-तुदादिः-1346. सक. सेट्. पर.)

पोरकः-रिका, पोरकः-रिका, पुपुरिषकः-पुपोरिषकः-षिका, पोपुरकः-रिका ; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**कुरति**वद् (229) ऊह्यानि । शतरि-[B]पुरन्-न्ती-ती, इति ।

**(1022) "पुर्व पूरणे"** (I-भ्वादिः-576. सक. सेट्. पर.)

'**पूर्व**—' इति **क्षीरस्वामी** ।

'पूरणे **पूर्वतीति** स्यात्, पूर्वयेण्णौ निकेतने ॥' (श्लो. 162) इति **देवः** ।
पूर्वकः-र्विका, पूर्वकः-र्विका, पुपूर्विषकः-षिका, पोपूर्वकः-र्विका ; पूर्विता-त्री, पूर्वयिता-त्री, पुपूर्विषिता-त्री, पोपूर्विता-त्री ; [C]पूर्वितम-तः-तवान् ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**गूर्वति**वत् (416) बोध्यानि । [2]पूर्तिः इति क्तिनि रूपम् ।

**(1023) "पुर्व निकेतने"** (X-चुरादिः-1666. अक. सेट्. उभ.)

'पूरणे पूर्वतीति स्यात् **पूर्वयेत्** णौ निकेतने ॥' (श्लो. 162) इति **देवः** ।
'**पूर्व** निकेतने' इति **मैत्रेयः** । अत्र **क्षीरस्वामी**—"**पूर्वनिकेतनम्**=आद्यनिवासः । **पारायणे-द्वौ** धातू" इति ।

---

1. 'हिंसार्थानां च समानकर्मकाणाम्' (3-4-48) इति णमुल्प्रत्ययः ।
2. 'राल्लोपः' (6-4-21) इति झलादौ किति ङिति च प्रत्यये परतः वकारस्य लोपः ।

A. 'ममन्थ विश्वं सुजनानकुन्थकान् **प्रपुन्थ्य** बन्धूनपि लुन्थति स्म यः ।' धा. का. 1.7.
B. 'मुरादिबन्धुः क्षुरघोरचेताः **पुरन्** खलानां जनजीवबर्हो ।' धा. का. 2.77.
C. 'दुदूर्विषून् धूर्वितुमेव गूर्वणं मूर्वन्तमा**पूर्वित**पर्वताध्वरम् ॥' धा. का. 1. 73.



[1]पूर्वकः-र्विका, पुपूर्वयिषकः-षिका, पूर्वयिता-त्री, पुपूर्वयिषिता-त्री ; पूर्वयन्-न्ती, पुपूर्वयिषन्-न्ती-ती ; पूर्वयिष्यन्-न्ती-ती, पुपूर्वयिषिष्यन्-न्ती-ती ; पूर्वयमाणः, पुपूर्वयिषमाणः, पूर्वयिष्यमाणः, पुपूर्वयिषिष्यमाणः, [A]पूर्वितम्-तः, पुपूर्वयिषितः-तवान् ; पूर्वयिट्-यिषौ-यिषः ; पूर्वः, पुपूर्वयिषुः, पूर्वयितव्यम्, पुपूर्वयिषितव्यम्, पूर्वणीयम्, पुपूर्वयिषणीयम्, पूर्व्यम्, पुपूर्वयिष्यम्, ईषत्पूर्वः-दुष्पूर्वः-सुपूर्वः, पूर्व्यमाणः, पुपूर्वयिष्यमाणः ; पूर्वः, पुपूर्वयिषः, पूर्वयितुम्, पुपूर्वयिषितुम्, पूर्वणा, पुपूर्वयिषा, पूर्वणम्, पुपूर्वयिषणम्, पूर्वयित्वा, पुपूर्वयिषित्वा, प्रपूर्व्य, प्रपुपूर्वयिष्य, पूर्वम् २, पूर्वयित्वा २, पुपूर्वयिषम् २, पुपूर्वयिषित्वा २.

**(1024) "पुल महत्त्वे"** (I-भ्वादिः-841. अक. सेट्. पर.)

**ज्वलादिः** ।

'महत्त्वे **पोलति** पुलेर्णौ तु तत्रैव पोलयेत् ।' (श्लो. 156) इति **देवः** ।
पोलकः-लिका, पोलकः-लिका, पुपुलिषकः-पुपोलिषकः-षिका, पोपुलकः-लिका ; इत्यादीनि सर्वाणि रूपाणि **कोलति**वत् (231) ज्ञेयानि । [2]पुलिः, [3]पुलकः, [4]पुलिनम्, [5]पुलाकः, [6]पुलिन्दः, इमानि रूपाणि अस्य धातोर्भवन्तीति विशेषः । [B]प्रपोलः ।

**(1025) "पुल महत्त्वे"** (X-चुरादिः-1601. अक. सेट्. उभ.)

'महत्त्वे पोलति पुलेर्णौ तु तत्रैव **पोलयेत्** ।' (श्लो. 156) इति **देवः** ।
'—**समुच्छ्राये**' इति **क्षीरस्वामी** ।

---

1. 'उपधायां च' (8-2-78) इति सर्वत्र दीर्घः ।
2. 'इक् कृष्यादिभ्यः (वा. 3-3-94) इति स्त्रियां भावादौ इक्प्रत्ययः ।
3. 'क्वुन् शिल्पिसंज्ञयोः—' (द. उ. 3-5) इति क्वुन् ।
4. बाहुलकादौणादिके किनन्प्रत्यये रूपम् । **पुलिनम्**=सैकतम् ।
5. 'पिनाकादयश्च' (द. उ. 3-34.) इत्यस्याकृतिगणत्वात् आकप्रत्यये रूपमेवम् । **पुलाकः**=पक्वान्नलेशः ।
6. 'कुणि**पुल्योः** किन्दच्' (द. उ. 6.46.) इति किन्दच्प्रत्ययः । **पुलिन्दः**=म्लेच्छजातिविशेषः ।

A. 'मद्याग्र**पूर्वित**नृपे शिशुना रणं वः
स्यादेव मानपरिजंसकमीड्यधाम्नाम् ॥' धा. का. 3.31.
B. 'स्थलीर्हली सन्नलिनीश्च तीर्त्वा पलन् हरिश्चात्मबल**प्रपोलः** ।' धा. का. 22.2.

पोलक:-लिका, पुपोलयिषक:-षिका; इत्यादीनि सर्वाण्यपि रूपाणि **तोलयति**वत् (757) ज्ञेयानि। कर्तरि क्तप्रत्यये [A]पोलितम् इति।

## (1026) "**पुष पुष्टौ**" (I-भ्वादि:-700. अक. सेट्. पर.)

'धारणे पोषयेत्, पुष्टौ पुष्येत् पुष्णाति पोषति। (श्लो. 171) इति **देव:**।

पोषक:-षिका, पोषक:-षिका, [1]पुपोषिषक:-पुपुषिषक:-षिका, पोपुषक:-षिका;
पोषिता-त्री, पोषयिता-त्री, पुपोषिषिता-पुपुषिषिता-त्री, पोपुषिता-त्री;
[B]प्रपोषन्-न्ती, पोषयन्-न्ती, पुपोषिषन्-न्ती, पुपुषिषन्-न्ती; —
पोषिष्यन्-न्ती-ती, पोषयिष्यन्, पुपोषिषिष्यन्-पुपुषिषिष्यन्-न्ती-ती; —
— पोषयमाण:, पोषयिष्यमाण:, — पोपुष्यमाण:, पोपुषिष्यमाण:;
प्रपुट्-प्रपुड्-पुषौ-पुष:; — — —
[2]पोषितम्-पुषितम्-त:, पोषित:, पुपोषिषित:-पुपुषिषित:-पोपुषित:-तवान्;
पुष:, [3]पोषण:, [4]प्रपोषी-घनपोषी, पोष:, पुपोषिषु:-पुपुषिषु:, पोपुष:;
पोषितव्यम्, पोषयितव्यम्, पुपोषिषितव्यम्-पुपुषिषितव्यम्, पोपुषितव्यम्;
पोषणीयम्, पोषणीयम्, पुपोषिषणीयम्-पुपुषिषणीयम्, पोपुषणीयम्;
पोष्यम्, पोष्यम्, पुपोषिष्यम्-पुपुषिष्यम्, पोपुष्यम्;
ईषत्पोष:-दुष्पोष:-सुपोष:; — —
पुष्यमाण:, पोष्यमाण:, पुपोषिष्यमाण:-पुपुषिष्यमाण:, पोपुष्यमाण:;
पोष:, पोष:, पुपोषिष:-पुपुषिष:, पोपुष:;

---

1. 'रलो व्युपधाद्धलादे: संश्च' (1-2-26) इति सन्नन्ते सर्वत्र कित्त्वविकल्प:। तेन रूपद्वयं बोध्यम्। एवं शुद्धात् क्त्वायामपि ज्ञेयम्।

2. निष्ठायाम्, '**उदुपधाद्** भावादिकर्मणोरन्यतरस्याम्' (1-2-21) इति कित्त्व-विकल्प:। तेन रूपद्वयम्।

3. नन्द्यादित्वात् कर्तरि ल्युप्रत्यये ऽनादेशे च रूपम्।

4. ताच्छीलिके णिनिप्रत्यये गुणे च रूपम्।

A. 'संदोलयन् अधिक**पोलित**मद्रिराजं
संचोलितं सुबहुमूलितशाखिबृन्दै:॥' धा. का. 3.21.

B. 'वेषैर्मष्यतमै: **प्रपोषद्**शुभप्रश्रेषिभि: श्लेषति प्रोष्यान् .... ....।' धा.का. 1.88.

C. '**स्वपोषमपुषद्** युष्मान् या पक्षिमृगशावका:।' भ. का. 6. 26.



पोषितुम्, पोषयितुम्, पुपोषिषितुम्-पुपुषिषितुम्, पोपुषितुम्;
पुष्टि:, पोषणा, पुपोषिषा-पुपुषिषा, पोपुषा;
पोषणम्, पोषणम्, पुपोषिषणम्-पुपुषिषणम्, पोपुषणम्;
पोषित्वा-पुषित्वा, पोषयित्वा, पुपोषिषित्वा-पुपुषिषित्वा, पोपुषित्वा;
प्रपुष्य, प्रपोष्य, प्रपुपोषिष्य-प्रपुपुषिष्य, प्रपोपुष्य;
[1]स्वपोषं-घनपोषं-गोपोषं-रैपोषं वा पोषति।

पोषम् २, पुषित्वा २– पोषित्वा २, } पोषम् २, पोषयित्वा २, } पुपोषिषम् २-पुपुषिषम् २, पुपोषिषित्वा २-पुपुषिषित्वा २, } पोपुषम् २; पोपुषित्वा २; }
[2]पोषयित्नु:, [3]पुष्करम्, [4]पुष्कलम्.

## (1027) "**पुष पुष्टौ**" (IV-दिवादि:-1182. सक. अनि. पर.) [अ]

'धारणे पोषयेत् पुष्टौ **पुष्येत्** पुष्णाति पोषति।' (श्लो. 171) इति **देव:**।

पोषक:-षिका, पोषक:-षिका, पुपुक्षक:-क्षिका, पोपुषक:-षिका;
इत्यादीनि सर्वाण्यपि रूपाणि दैवादिक**तुष्यति**वत् (758) ज्ञेयानि।

---

1. 'स्वे **पुष:**' (3-4-40) इति णमुल्। 'कषादिषु यथाविध्यनुप्रयोग:' (3-4-46) इति णमुल्प्रयोजकस्यैव धातोरनुप्रयोग:। सूत्रे '**स्वे**—' इति अर्थग्रहणम्, स्वरूपग्रहणं च। तेन **रैपोषम्, गोपोषम्** इत्यादिषु 'स्व' इत्यस्यार्थस्य सदृशार्थकेषु च णमुल् भवति।

2. ण्यन्तात्, 'स्तनिहृषि**पुषि**—' [द. उ. 1-140] इतीत्नुच्प्रत्यय:। 'अयामन्ताल्वाय्येत्न्विष्णुषु' (6-4-55) इति णेरयादेश:। **पोषयित्नु:**= पोषणकर्ता।

3. '**पुष:** कित्' [द. उ. 8.71] इति करन्प्रत्यये, तस्य कित्त्वेन, बाहुलकात् प्रत्ययादे: ककारस्येत्संज्ञाभावे च रूपम्।

4. '**पुष:** कलन् किच्च' [द. उ. 8-118] इति कलन्प्रत्यये रूपम्। अत्रापि बाहुलकात् प्रत्ययककारस्य न लोप इति ज्ञेयम्।

[अ] 'सूर्यापाये न खलु कमलं **पुष्यति** स्वामभिख्याम्।' इति (**मेघसन्देशे** II-13), '**पुपोष** लावण्यमयान् विशेषान् ज्योत्स्नान्तराणीव कलान्तराणि॥' इति (**कुमारसम्भवे** 1-25) च **महाकवि**प्रयोगात् सकर्मकत्वम्। 'वराह इव **पुष्यति**—' इत्यादिप्रयोगदर्शनादकर्मकत्वमप्यस्य धातो: संगच्छत इति ज्ञेयम्।

[1]पुष्यः,[A] [2]स्वपोषं[B] रैपोषम्, गोपोषम् धान्यपोषम् वा पुष्यति। [3]गोपोषी।

**(1028) "पुष पुष्टौ"** (IX-क्र्यादिः-1529. अक. सेट्. पर.)

'धारणे पोषयेत्, पुष्टौ पुष्येत् **पुष्णाति** पोषति।' (श्लो. 171) इति **देवः**। पोषकः-षिका, पोषकः-षिका, पुपोषिषकः-पुपुषिषकः-षिका, पोपुषकः-षिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**पोषति**वत् (1026) ज्ञेयानि। शतरि [4]पुष्णन्[C]-ती, इति रूपमिति विशेषः।

**(1029) "पुष धारणे"** (X-चुरादिः-1751. सक. सेट्. उभ.)

**आस्वदीयः।**

'धारणे **पोषयेत्**, पुष्टौ पुष्येत् पुष्णाति पोषति।' (श्लो. 171) इति **देवः**। पोषकः-षिका, पुपोषयिषकः-षिका; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**तोलयति**वत् (757) ज्ञेयानि। [D]प्रपोषितः।

**(1030) "पुष्प विकसने"** (IV-दिवादिः-1122. अक. सेट्. पर.)

पुष्पकः-ष्पिका, पुष्पकः-ष्पिका, पुपुष्पिषकः-षिका, पोपुष्पकः-ष्पिका; पुष्पम्, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**जल्पति**वत् (592) ज्ञेयानि। शतरि—[5]पुष्यन्-न्ती, इति रूपमिति विशेषः।

---

1. '**पुष्य**सिध्यौ नक्षत्रे' (3-1-116) इति नक्षत्रेऽभिधेये क्यप्। अन्यत्र **पोष्यम्** इति ण्यदेव। पुष्यन्त्यर्था अस्मिन् इति **पुष्यः**=नक्षत्रविशेषः।
2. 'स्वे **पुषः**' (3-4-40) इति णमुल्। 'स्वे' इति पर्यायाणामपि ग्रहणात् **रैपोषम्** इत्यादीनां साधुत्वम्। 'कषादिषु यथाविध्यनुप्रयोगः' (3-4-46) इति णमुलन्तस्यैव धातोरनुप्रयोगः।
3. 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः।
4. '**क्र्यादिभ्यः**—' (3-1-81) इति श्ना विकरणप्रत्ययः। '**श्नाऽभ्यस्तयोरातः**' (6-4-112) इत्याकारलोपः। णत्वम्।
5. '**दिवादिभ्यः**—' (3-1-69) इति श्यन्प्रत्ययः।

A. 'महारथः **पुष्यरथं** रथाङ्गी क्षिप्रं क्षपानाथ इवाधिरूढः॥' शि. व. 3. 22.

B. 'प्रस्थापयत् पूगकृतान् **स्वपोषं पुष्टान्** प्रयत्नाद् दृढगात्रबन्धान्।' भ. का. 3.4.

C. 'प्रुष्णन् सतां प्रियमयं प्लुषिताङ्गरागः
**पुष्णन्** मुदं मृगदृशां रिपुधाम मुष्णन्।' धा. का. 3.12.

D. 'दोर्भ्यां ग्रासयतां **प्रपोषित**रुषां निर्दलनोद्योगिनां
तेषां विक्रमणैरपाटि पटिमा शिक्षाऽप्यपोटि स्फुटम्।' धा. का. 3.43.



**(1031) "पुंस अभिवर्धने"** (X-चुरादिः-1638. सक. सेट्. उभ.)

'—अभिमर्दने' इति **क्षीरस्वामी**।

पुंसकः-सिका, पुपुंसयिषकः-षिका; [1]पुन्-पुंसौ-पुंसः; [A]पुंसना, इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**गन्धयति**वत् (375) ज्ञेयानि। अस्योभयपदित्वात् शतरि पुंसयन्-न्ती, पुंसयिष्यन्-न्ती-ती, इति रूपे अधिके इति विशेषः।

**(1032) "पुस्त आदरानादरयोः"** (X-चुरादिः-1590. सक.सेट्. उभ.)

'—दानादरयोः' इति **धातुकाव्ये** (3-20) पाठः।

पुस्तकः-स्तिका, पुपुस्तयिषकः-षिका; [B]पुस्तितः, [2]पुस्तकम्, इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कुस्मयति**वत् (236) ज्ञेयानि। अस्योभयपदित्वात् शताऽपि भवतीति विशेषः। क्विपि, पुस्त्-पुस्तौ-पुस्तः इति रूपाणि इति विशेषः।

**(1033) "पूङ् पवने"** (I-भ्वादिः-966. अक. सेट्. आत्म.)

**पवनम्=शोधनम्।**

'श्नि पुनाति पुनीते स्ताम्, पवने **पवते** ङितः।' (श्लो. 27) इति **देवः**।

पावकः-विका, पावकः-विका, [3]पिपविषकः-षिका, पोपूयकः-यिका;
पविता-त्री, पावयिता-त्री, पिपविषिता-त्री, पोपूयिता-त्री;
— पावयन्-न्ती, पावयिष्यन्-न्ती-ती, — —
पवमानः, पावयमानः, पिपविषमाणः, पोपूयमानः;

---

1. 'नकारजावनुस्वारपञ्चमौ झलि धातुषु। सकारजश्शकारश्चेर्षाट्टवर्गस्तवर्गजः॥' इति अभियुक्तोक्त्याऽत्रानुस्वारो नकारस्थानिकः। तेन क्विपि संयोगान्तलोपे नकारान्तं रूपं प्रथमैकवचने बोध्यम्।
2. 'क्वुन् शिल्पिसंज्ञयोः—' (द. उ. 3-5) इति संज्ञायां क्वुन्।
3. सन्नन्ते, उगन्तत्वेनेण्निषेधे प्राप्ते, 'स्मिपूङ्रञ्ज्वशां सनि' (7-2-74) इति नित्यमिट्। '**ओः पुयण्ज्यपरे**' (7-4-80) इत्यभ्यासस्य इकारः। एवं सन्नन्ते सर्वत्र ज्ञेयम्।

A. 'न स्फिट्टयामि किमु चुम्बभिया स्थितोऽसि
किं पूलिताञ्चकृत**पुंसनया**ऽत्र पुंसाम्॥' धा. का. 3.26.

B. 'बर्हादिमण्डितसुभण्डितविग्रहोऽसौ प्रच्छर्दितः किल बकेन च **पुस्तितार्तिः**।' धा. का. 3.20.

पविष्यमाणः, पावयिष्यमाणः, पिपविषिष्यमाणः, पोपूयिष्यमाणः ;

पूः-पुवौ-पुवः ; — — —

[1]पूतम्-पवितम्-[A]तः-तवान्, पावितः, पिपविषितः, पोपूयितः-तवान् ;

पवः, [2]पवमानः, [3]पवनः, [4]पवित्रम् [अग्निः, देवता वा], [5]पोता, पावः, [B]पिपविषुः-[6]पिपावयिषुः, पोपुवः ;

पवितव्यम्, पावयितव्यम्, पिपविषितव्यम्, पोपूयितव्यम् ;

[7]प्रपवणीयम्-प्रपवनीयम्, [8]प्रपावणीयम्-प्रपावनीयम्, पिपविषणीयम्, पोपूयनीयम् ;

---

1. 'पूङश्च' (7-2-51) इति निष्ठाया इड्विकल्पः। 'पूङः क्त्वा च' (1-2-22) इति निष्ठायाः कित्त्वनिषेधाद् गुणावादेशौ। एवं क्त्वायामपि रूपद्वयस्योपपत्तिर्ज्ञेया।

2. कर्तरि, 'पूङ्यजोः शानन्' (3-2-128) इति शानन्प्रत्ययः। शपि, 'आने मुक्' (7-2-82) इति मुगागमः।

3. नन्द्यादित्वात् (3-1-134) कर्तरि ल्युप्रत्यये, अनादेशे च रूपम्। **पवनः**=वायुः।

4. 'कर्तरि चर्षिदेवतयोः' (3-2-186) इति कर्तरि ऋषौ, देवतायां वा अभिधेये सति इत्रप्रत्ययः। ऋषिः=अग्निः। 'अग्निः **पवित्रम्**, स मा पुनातु,' (आप. श्रौ. सू. 12-19-6) 'वायुः सोमः सूर्य इन्द्रः **पवित्रम्**, ते मा पुनन्तु।' (आप. श्रौतसूत्रे 12-9-6) इत्यादिषु यथा। ऋषौ करणे, देवतायाम् कर्तरि चायं प्रत्ययो ज्ञेयः।

5. 'तृन्' (3-2-135) इति तच्छीलादिषु कर्तृषु तृन्प्रत्ययः। बाहुलकात् इडागमाभावः।

6. ण्यन्तात् सनि, उप्रत्यये रूपम्। अत्रापि 'ओः पुयण्ज्यपरे' (7-4-80) इति अभ्यासस्येकारः। तत्प्रदर्शनार्थमेवात्र रूपमेकं निदर्शितम्।

7. 'न भाभूपू—' (8-4-34) इत्यत्र 'पू' इत्यनेन **पूञ** एव ग्रहणम्, न तु **पूङः** इति **काशिकादिषु** दृश्यते। तेनात्र णत्वं भवत्येव। **क्षीरस्वामी** तु अविशेषेण **पूङो**ऽपि प्रकृतसूत्रे ग्रहणं मन्यमानः **प्रपवनीयम्** इति णत्वाभावघटितं रूपमुदाजहार।

8. 'ण्यन्तभादीनामुपसंख्यानम्' (वा. 8-4-34) इति णत्वनिषेधोऽपि नास्य धातोरिति पक्षे रूपमेवम्। **क्षीरस्वामि**मते तु पूर्ववदत्रापि णत्वनिषेधः।

A. '**पवितो**ऽनुगुणैर्वातैः शीतैः **पूत्वा** पयोनिधौ।' भ. का. 9-39.

B. 'जगत् **पिपविषुर्वायुः** कल्पान्त इव दुर्धरः॥' भ. का. 9-53.



[1]विपूयः[A]-पव्यम्, [2]अवश्यपाव्यम्, पाव्यम्, पिपविष्यम्, पोपूय्यम् ;

पूयमानः, पाव्यमानः, पिपविष्यमाणः, पोपूय्यमानः ;

[3]पवः, [4]निष्पावः, [5]उत्पावः, [6]पोत्रम्, [B]वनपोत्रः, [7]पवित्रम्, पावः, पिपविषः, पोपूयः ;

पवितुम्, पावयितुम्, पिपविषितुम्, पोपूयितुम् ;

पूतिः, पावना, विपविषा, पिपावयिषा, पोपूया ;

पवनम्, पावनम्, पिपविषणम्, पोपूयनम् ;

पूत्वा-पवित्वा,[C] पावयित्वा, पिपविषित्वा, पोपूयित्वा ;

प्रपूय, प्रपाव्य, प्रपिपविष्य, प्रपोपूय्य ;

पावम् २ पूत्वा २-पवित्वा २ } पावम् २, पावयित्वा २, } पिपविषम् २, पिपविषित्वा २, } पोपूयम् २ ; पोपूयित्वा २. }

---

1. '**विपूय**विनीयजित्या मुञ्जकल्कहलिषु' (3-1-117) इत्यनेन मुञ्जेऽभिधेये विपूर्वकादस्मात् क्यपि रूपमेवम्। अन्यत्रार्थे तु 'अचो यत् (3-1-97) इति यति, अवादेशे च **पव्यम्** इति रूपम्।

2. '**ओरावश्यके**' (3-1-125) इति ण्यत्। आवादेशः। अवश्यमो मकारस्य 'लुम्पेदवश्यमः कृत्ये' (काशिका. 6-3-109) इति लोपः।

3. 'ऋ**दोरप्**' (3-3-57) इति भावेऽप्प्रत्ययः। घञपवादः।

4. 'निरभ्योः पूल्वोः' (3-3-28) इति निष्पूर्वकादस्मात् घञ्। **निष्पावः**=धान्यविशेषः। 'परिमाणाख्यायां सर्वेभ्यः' (3-3-20) इति घञ्यपि रूपमेवमेव। तदानीं **निष्पावः**=परिमाणविशेषः।

5. '**उदि** श्रयतियौतिपूद्रुवः' (3-3-49) इति घञ्।

6. 'हलसूकरयोः **पुवः**' (3-2-183) इति करणे ष्ट्रन्प्रत्यये रूपम्। **पोत्रम्**=सूकरस्य, हलस्य वा मुखम्।

7. '**पुवः** संज्ञायाम्' (3-2-185) इति करणे इत्रप्रत्ययः। **पवित्रम्**=दर्भः, चक्रायुधं च।

A. 'वसानां वल्कले शुद्धे **विपूयैः** कृतमेखलाम्।' भ. का. 6·61.

B. 'भूदार एव **वनपोत्र**वतामतानीत् भूदारशब्दमसहिष्णुरिवान्तमेषाम्॥' च. भा. 1.20.

C. 'सूतोऽपि गङ्गासलिलैः **पवित्वा** सहाश्वमात्मानमनल्पमन्युः।' भ. का. 3.18.

**(1034) "पूज पूजने"** (X-चुरादिः 1643. सक. सेट्. उभ.)

पूजकः-जिका, पुपूजयिषकः-षिका, इत्यादीनि सर्वाणि रूपाणि चौरादिक-**कूटयति**वत् (240) ज्ञेयानि । [1]पूजा, [A]पूज्यमानः, पूजयन्-न्ती, [राज्ञां] [2]पूजितः, राजपूजितः, इत्यादीनि रूपाण्यस्य धातोः विशेषेण संभवन्ति ।

**(1035) "पूञ् पवने"** (IX-क्र्यादिः-1482. सक. सेट् उभ.)

**प्वादिः, ल्वादिश्च ।** [अ]

'ञि **पुनाति** पुनीते स्ताम्, पवने पवते ङितः ।' (श्लो. 27) इति **देवः** ।

पावकः-विका, पावकः-विका, [3]पुपूषकः-षिका, पोपूयकः-यिका;

पविता-त्री, पावयिता-त्री, पुपूषिता-त्री, पोपूयिता-त्री;

[4]पुनन्[B]-पुनाति, पावयन्-न्ती, [C]पुपूषन्-न्ती; —

पविष्यन्-न्ती-ती, पावयिष्यन्-न्ती-ती, पुपूषिष्यन्-न्ती-ती; —

पुनानः, पावयमानः, पुपूषमाणः, पोपूयमानः;

पविष्यमाणः, पावयिष्यमाणः, पुपूषिष्यमाणः, पोपूयिष्यमाणः;

---

1. 'चिन्ति**पूजि**कथिकुम्बिचर्चश्च' (3-3-105) इति स्त्रियां भावादौ युजपवादोऽङ्प्रत्ययः ।
2. 'मतिबुद्धि**पूजार्थेभ्य**श्च' (3-2-188) इति वर्तमाने क्तः । 'क्तस्य च वर्तमाने' (2-3-67) इति कर्तरि षष्ठी । 'क्तेन च **पूजायाम्**' (2-2-12) इति समासनिषेधः । **राजपूजितः** इति प्रयोगस्तु **राज्ञा पूजितः** इति तृतीयासमासे साधुः ।
3. 'सनि ग्रहगुहोश्च' (7-2-12) इतीण्निषेधः । 'इको झल्' (1-2-9) इति सनः कित्त्वान्न गुणः । एवं सन्नन्ते सर्वत्र प्रक्रिया बोध्या ।
4. शतरि '**क्र्यादिभ्यः**—' (3-1-81) इति श्ना विकरणप्रत्ययः । 'श्नाऽभ्यस्तयोरातः' (6-4-112) इत्याकारलोपः । '**प्वादीनां** ह्रस्वः' (7-3-80) इति ह्रस्वे रूपमेवम् । एवं शानजन्तेऽपि प्रक्रिया ज्ञेया ।

A. 'च्युतनिखिलविशङ्कः **पूज्यमानो** जनौघैः
सकलभुवनराज्यं कारयास्मन्मतेन ॥' भ. का. 3. 56.

B. 'द्वारं **पुनन्** पदतलेन स लूनवैरी
स्तीर्णाननं मदजलेन करीतुकामम् ।' धा. का. 3.6.

C. 'त्वं समीरण इव प्रतीक्षितः कर्षकेण वलजान् **पुपूषता** ।' शि. व. 14.7.

[अ] क्र्यादिषु **क्षीरस्वामिना** "दिवादौ—पूयते.......।" इत्याद्युक्तम् । **पू**धातुः भ्वादौ, क्र्यादिषु च पठ्यते; न दिवादौ । **क्षीरस्वामिना**ऽपि दिवादिषु **पू**धातुः कुत्रापि न पठितः । तस्मात् **क्षीरस्वामि**वाक्यं क्र्यादिगतं किंनिबन्धनमिति न जानीमः ।



[1]खलपूः-खलप्वौ-खलप्वः; — — —

[2]पूतम्-तः-तवान्-[3]पूनः-पूनवान् (यवः), पावितः, पुपूषितः, पोपूयितः-तवान्;

पवः-[4]पवनः, [5]पुपविवान्, [6]पवित्रम् (अग्निः, देवता वा), [7]पोता, पावः, [8]पावनः[A], पुपूषुः, [9]पिपावयिषुः, पोपुवः;

पवितव्यम्, पावयितव्यम्, पुपूषितव्यम्, पोपूयितव्यम्;

[10]प्रपवनीयम्, [11]प्रपावनीयम्, पुपूषणीयम्, पोपूयनीयम्;

[12]विपूयः, पव्यम्-[B]अवश्यपाव्यम्, पाव्यम्, पुपूष्यम्, पोपूय्यम्;

पूयमानः, पाव्यमानः, पुपूष्यमाणः, पोपूय्यमानः;

पावः, [13]निष्पावः, [14]निष्पावः, [15]उत्पावः,

---

1. खलं पुनातीति **खलपूः** । क्विपि रूपमेवम् । द्विवचनादौ, '**ओः** सुपि' (6-4-83) इति यण् ।
2. 'श्र्युकः किति' (7-2-11) इति निष्ठायामिण्निषेधः । एवं क्तिनि, क्त्वायाम्, ल्यपि चेण्निषेधो ज्ञेयः ।
3. ल्वादित्वेन नित्यं निष्ठानत्वे प्राप्ते, '**पूञो** विनाशे' (वा. 8-2-44) इत्यर्थविशेषे निष्ठानत्वम् । **पूनाः** यवाः । विनष्टाः इत्यर्थः ।
4. नन्द्यादित्वात् (3-1-134) कर्तरि ल्युप्रत्ययः ।
5. लिटः क्वसौ, द्विर्वचने, इडागमे, उत्तरखण्डे गुणे, 'न शसददवादि**गुणानाम्**' (6-4-126) इति न एत्वाभ्यासलोपः ।
6. 'कर्तरि चर्षिदेवतयोः' (3-2-186) इति कर्तरि, करणे च इत्रप्रत्ययः ।
7. 'तृन्' (3-2-135) इति कर्तरि तच्छीलादिषु तृन्प्रत्ययः । बाहुलकादिडागमो न ।
8. ण्यन्तादस्मात् नन्द्यादित्वात् कर्तरि ल्युप्रत्ययः ।
9. ण्यन्तादस्मात् सनि, उप्रत्यये, '**ओः पुयण्**—' (7-4-80) इत्यभ्यासस्येकारः ।
10. 'न भाभूपूकमि—' (8-4-34) इति णत्वनिषेधः ।
11. 'ण्यन्तभादीनामुपसंख्यानम्' (वा. 8-4-34) इति णत्वनिषेधः ।
12. '**विपूय**विनीयजित्या **मुञ्ज**कल्कहलिषु' (3-1-117) इति मुञ्जेऽभिधेये **क्यपि** रूपमेवम् ।
13. 'निरभ्योः **पूल्वोः**' (3-3-28) इति निष्पूर्वकादस्मात घञ्प्रत्ययः । **निष्पावः**= धान्यविशेषः ।
14. 'परिमाणाख्यायां सर्वेभ्यः (3-3-20) इति घञ् । **निष्पावः**=शूर्पः । निष्पूयते= शोध्यते तुषाद्यपनयनेन यस्तण्डुलादिः सः **निष्पावः** । शूर्पस्यापि प्राक्काले परिमाणवाचकत्वात् प्रत्ययोत्पत्तिरिति ज्ञेयम् ।
15. '**उदि** श्रयतियौतिपूद्रुवः' (3-3-49) इति भावे घञ् ।

A. 'दक्षिणीयमवगम्य पङ्क्तिशः पङ्क्ति**पावन**मथ द्विजव्रजम् ।' शि. व. 14.33.

B. '**अवश्यपाव्यं** पवसे कच्चित् त्वं देवभाक् हविः ।' भ. का. 6.65.

[1]पोत्रम्-पोत्रः, [2]पवित्रम् ; पावः, पुपूषः, पोपूयः ;
पवितुम्, पावयितुम्, पुपूषितुम्, पोपूयितुम् ;
पूतिः, [3]पविः, पावना, पुपूषा-पिपावयिषा, पोपूया ;
पवनम्, पावनम्, पुपूषणम्, पोपूयनम् ;
पूत्वा, पावयित्वा, पुपूषित्वा, पोपूयित्वा ;
प्रपूय, प्रपाव्य, प्रपुपूष्य, प्रपोपूय्य ;
पावम् २, पूत्वा २, } पावम् २, पावयित्वा, } पुपूषम् २, पुपूषित्वा २, } पोपूयम् २ ; पोपूयित्वा २. }
[4]पूगः, [5]पोतः, [6]पुण्यम्, [7]पुत्रः.

## (1036) "पूयी विशरणे दुर्गन्धे च"

(I-भ्वादिः-484. अक. सेट्. आत्म.)

पूयकः-यिका, पूयकः-यिका, पुपूयिषकः-षिका, पोपूयकः-यिका ;
पूयिता-त्री, पूययिता-त्री, पुपूयिषिता-त्री, पोपूयिता-त्री ;
— पूययन्-न्ती, पूययिष्यन्-न्ती ; —
पूयमानः, पूययमानः, पुपूयिषमाणः, पोपूय्यमानः ;
पूयिष्यमाणः, पूययिष्यमाणः, पुपूयिषिष्यमाणः, पोपूयिष्यमाणः ;
[8]सुपूः-सुपुवौ-सुपुवः ; — — —
[9]पूतम्-पूतः-पूतवान्, पूयितः, पुपूयिषितः, पोपूयितः-तवान् ;

---

1. 'हलसूकरयोः **पुवः**' (3-2-183) इति करणे ष्ट्रन्प्रत्यये रूपम् ।
2. '**पुवः** संज्ञायाम्' (3-2-185) इति करणे इत्रप्रत्ययः । **पवित्रम्**=दर्भः, चक्रं च ।
3. 'इणजादिभ्यः' (वा. 3-3-94) इति भावे इण्प्रत्ययः । बाहुलकात् वृद्धिर्न । गुणस्तु भवत्येव । **पविः**=वज्रम् । **अजादिः**=अजधातुप्रकारः ।
4. 'छापूञ्—' [द. उ. 3-69] इति गक्प्रत्ययः । **पूगः**=संघातः ।
5. औणादिके [द. उ. 6-7] तन्प्रत्यये रूपम् । पुनाति इति **पोतः**=अग्निः, पुत्रः समुद्रयानं वा । बाहुलकादिडागमो न ।
6. '**पूञो** यण्णुग् ह्रस्वश्च [द. उ. 8-16] इति यत्प्रत्यये णुडागमे, उपधाया ह्रस्वे च रूपमेवम् । ह्रस्वविधानसामर्थ्यात् गुणो न ।
7. '**पूञो** ह्रस्वश्च' [द. उ. 8-87] इति त्रप्रत्यये, धातोर्ह्रस्वे च रूपमेवम् ।
8. क्विपि, वलि लोपे, ऊकारान्तत्वं ज्ञेयम् । द्विवचनादौ उवङ् ज्ञेयः ।
9. '**श्वीदितो** निष्ठायाम्' (7-2-14) इतीण्निषेधः । वलि लोपे रूपमेवम् ।



पूयः, [1]पूयिता, पूयः, पुपूयिषुः, पोपूयः ;
पूयितव्यम्, पूययितव्यम्, पुपूयिषितव्यम्, पोपूयितव्यम् ;
पूयनीयम्, पूयनीयम्, पुपूयिषणीयम्, पोपूयनीयम् ;
पूय्यम्, पूय्यम्, पुपूयिष्यम्, पोपूय्यम् ;
ईषत्पूयः-दुष्पूयः-सुपूयः ; — —
पूय्यमानः, पूय्यमानः, पुपूयिष्यमाणः, पोपूय्यमानः ;
पूयः, पूयः, पुपूयिषः, पोपूयः ;
पूयितुम्, पूययितुम्, पुपूयिषितुम्, पोपूयितुम् ;
[2]पूतिः,[A] पूयना, पुपूयिषा, पोपूया ;
पूयनम्, पूयनम्, पुपूयिषणम्, पोपूयनम् ;
पूयित्वा, पूययित्वा, पुपूयिषित्वा, पोपूयित्वा ;
प्रपूय्य, प्रपूय्य, प्रपुपूयिष्य, प्रपोपूय्य ;
पूयम् २ ; पूयित्वा २ ; } पूयम् २ ; पूययित्वा २ ; } पुपूयिषम् २ ; पुपूयिषित्वा २ ; } पोपूयम् २ ; पोपूयित्वा २. }

## (1037) "पूरी आप्यायने" (IV-दिवादिः-1151. अक. सेट्. आत्म.)

'आप्यायनम्=वृद्धिः ।' इति क्षीरस्वामी ।

'पूरेराप्यायनेऽर्थे स्यात् पूर्यते पूरयेदपि ॥' ( श्लो. 150) इति देवः ।

पूरकः-रिका, पूरकः-रिका, पुपूरिषकः-षिका, पोपूरकः-रिका ;
पूरिता-त्री, पूरयिता-त्री, पुपूरिषिता-त्री, पोपूरिता-त्री ;
— पूरयन्-न्ती, पूरयिष्यन्-न्ती-ती ; — —

---

1. धातोरस्यानुदात्तेत्त्वात्, हलादित्वाच्च तच्छीलादिषु कर्तृषु प्राप्तो युच्, '**न यः**' (3-2-152) इति निषिध्यते । तेन, 'तृन्' (3-2-135) इति औत्सर्गिकः तृन्नेव ।
2. स्त्रियां भावादौ, 'गुरोश्च हलः' (3-3-103) इति प्राप्तमकारप्रत्ययं बाधित्वा, बाहुलकात्, 'क्तिन् **आबादिभ्यः**' (वा. 3-3-94) इत्याबादित्वात्, 'गन्धस्येद् उत्**पूति**सुसुरभिभ्यः' (5-4-135) इत्यत्र '**पूति**—' इति निर्देशाच्च क्तिन्नेव भवति । क्तिनि वलिलोपे च रूपमेवम् ।

A. 'गोदोहदेशे रयितं सहाग्रजं तमूतसत्कीर्तिम् **अपूतिभिर्गुणैः** ॥' धा. का. 1·62.

| | | | |
|---|---|---|---|
| पूर्यमाणः, | [1]प्रपूर्यमाणः, | पुपूरिषमाणः, | पोपूर्यमाणः ; |
| पूरिष्यमाणः, | पूरयिष्यमाणः, | पुपूरिषिष्यमाणः, | पोपूरिष्यमाणः ; |
| पूः-पूरौ-पूरः ; | — | — | — |
| [2]पूर्णम्-पूर्णः-पूर्णवान्, | [3]पूर्णः-पूरितः, | पुपूरिषितः, | पोपूरितः-तवान् ; |
| पूरः, [4]पूरणः, | पूरः, | पुपूरिषुः, | पोपूरः ; |
| पूरितव्यम्, | पूरयितव्यम्, | पुपूरिषितव्यम्, | पोपूरितव्यम् ; |
| पूरणीयम्, | पूरणीयम्, | पुपूरिषणीयम्, | पोपूरणीयम् ; |
| पूर्यम्, | पूर्यम्, | पुपूरिष्यम्, | पोपूर्यम् ; |
| पूर्यमाणः, | पूर्यमाणः, | पुपूरिष्यमाणः, | पोपूर्यमाणः ; |
| पूरः, | पूरः, | पुपूरिषः, | पोपूरः , |
| पूरितुम्, | पूरयितुम्, | पुपूरिषितुम्, | पोपूरितुम् ; |
| [5]पूर्तिः [पूर्णिः], | पूरणा, | पुपूरिषा, | पोपूरा ; |
| पूरणम्, | पूरणम्, | पुपूरिषणम्, | पोपूरणम् ; |
| पूरित्वा, | पूरयित्वा, | पुपूरिषित्वा, | पोपूरित्वा ; |
| प्रपूर्य, | प्रपूर्य, | प्रपुपूरिष्य, | प्रपोपूर्य ; |

[6]चर्मपूरं स्तृणोति । उदरपूरं भुङ्क्ते ।

---

1. 'णेर्विभाषा' (8-4-30) इति सूत्रस्य नेदं लक्ष्यम् । यत्रोपसर्गस्थान्निमित्तात् कृत्स्थस्य नकारस्य णत्वम्, तत्रैव तस्य सूत्रस्य प्रवृत्तिः । अत्र तु धातुस्थान्निमित्तात् रेफरूपात् णत्वमिति ज्ञेयम् । तेन नित्यणत्वमेव ।
2. '**श्वीदितो** निष्ठायाम्' (7-2-14) इतीण्निषेधः । णत्वम् ।
3. 'वा दान्तशान्त**पूर्ण**दस्तस्पष्टच्छन्नज्ञप्ताः' (7-2-27) इत्यनेन ण्यन्तादस्मान्निष्ठायां पक्षे अनिट्त्वं निपात्यते । अनिट्पक्षे, णिलुकि णत्वे **पूर्णः** इति, इट्पक्षे **पूरितः** इति च रूपम् ।
4. '**अनुदात्तेतश्च हलादेः**' (3-2-149) इति तच्छीलादिषु कर्तृषु युच् । अनादेशे णत्वे च रूपमेवम् । **पूरणः**=समुद्रः ।
5. 'क्तिन् आबादिभ्यः' (वा. 3-3-94) इति क्तिन्; अप्रत्ययापवादः । 'तितुत्र—' (7-2-9) इतीण्निषेधः । **पूर्णिः** इति तु बाहुलकात् निप्रत्यये णत्वे च रूपम् ।
6. 'चर्मोदरयोः **पूरेः**' (3-4-31) इत्यनेन चर्मोदरयोः कर्मणोरुपपदयोः णमुल्प्रत्ययः । **पूरयतेः** 'धातुसम्बन्धे प्रत्ययाः' (3-4-1) इति परिभाषया धातुसम्बन्धे विधानात् धात्वन्तरस्य प्रयोगः । एवम् **उदरपूरम्** इत्यत्रापि ज्ञेयम् ।



[1]गोष्पदपूरम् [A]गोष्पदप्रम्, सीतापूरं सीताप्रं वा वृष्टो देवः । [2]ऊर्ध्वपूरं पूर्यते ।

| | | | |
|---|---|---|---|
| पूरम् २, | पूरम् २, | पुपूरिषम् २, | पोपूरम् २ ; |
| पूरित्वा २, | पूरयित्वा २, | पुपूरिषित्वा २, | पोपूरित्वा २ ; |

[3]पूरुः.

## (1038) "पूरी आप्यायने" ( X-चुरादिः-1804. सक. सेट्. उभ. )

### आस्वदीयः ।

'पूरेराप्यायनेऽर्थे स्यात् पूर्यते, **पूरयेद**पि ॥' (श्लो. 150) इति **देवः** । ईदित्त्वस्य ण्यन्ते प्रयोजनाभावात् णिज्विकल्पो ज्ञेयः । णिजभावपक्षे औत्सर्गिकः शब्विकरण इति ज्ञेयम् । पूरकः-रिका, पुपूरयिषकः-षिका, [4]पूरकः-रिका, पुपूरिषकः-षिका, पोपूरकः-रिका ; [5]पूरन्-न्ती, पूरिष्यन्-न्ती-ती ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चोरयति**वत् (546) ज्ञेयानि ।

## (1039) "पूर्ण सङ्घाते" (X-चुरादिः-1637. अक. सेट्. उभ.)

'पूल—' इत्यस्य पाठान्तरमिदम् । "—'पूण—' इति **शाकटायनः** । कोशशुद्धिस्तु ईदृशेषु कीदृशीति न विद्मः ।" इति **पुरुषकारे** (156 श्लो.) चिन्तितम् । 'पूण—' इति **मा. धा. वृत्तौ** पाठभेदः प्रदर्शितः ।

---

1. 'वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्' (3-4-32) इत्यनेन कर्मण्युपपदे, वर्षस्येयत्तायां गम्यमानायाम्, पूरयतेर्णमुल्, ऊकारलोपश्चास्य विकल्पेन भवति । एवम्, '**मूषिकाबिलपूरम्, मूषिकाबिलप्रं** वा वृष्टो देवः ।' इत्यत्रापि णमुल् ज्ञेयः ।
'**कूपप्रं वापिकापूरं** वर्षति स्माद्य वारिदः ।
यावता पूर्यते कूपस्तावदित्यवगम्यते ॥' इति **प्र. सर्वस्वे** ।
2. '**ऊर्ध्वे शुषिपूरोः**' (3-4-44) इति कर्तृवाचिन्यूर्ध्वे उपपदे णमुल् । 'कषादिषु यथाविध्यनुप्रयोगः' (3-4-46) इति णमुल्प्रयोजकस्यैव धातोरनुप्रयोगः । 'ऊर्ध्वः सन् पूर्यते कुम्भ **ऊर्ध्वपूरं प्रपूर्यते** ।' इति **प्र. सर्वस्वे** ।
3. बाहुलकादौणादिके उप्रत्यये रूपमेवम् ।
4. णिजभावपक्षे क्रमेण शुद्धात्, शुद्धप्रकृतिकसन्नन्तात्, यङन्ताच्च रूपाणि प्रदर्शितानीति ज्ञेयम् ।
5. णिजभावपक्षे, शतरि 'शेषात् कर्तरि—' (1-3-78) इति परस्मैपदंभवति ।

A. 'ददाल भूर्नभो रक्तं **गोष्पदप्रं** ववर्ष च ।' भ. का. 14.20.

पूर्णकः-र्णिका, पुपूर्णयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक-**चूर्णयति**वत् (550) ज्ञेयानि ।

(1040) “ **पूर्व निकेतने** ” (X-चुरादिः-1666. अक. सेट्. उभ.)

‘ गुर्द पूर्वनिकेतने ’ इति चुरादिषु पठितस्य धातोः **केषाश्चित्** मतेन ‘ गुर्द-पूर्व ’ इति व्यस्तपाठपक्षे धातुरयमुपात्तः । ‘ पूर्व पूर्वनिकेतने ’ इति धा. का. (3-31) पाठः ।

‘ पूरणे पूर्वतीति स्यात् **पूर्वयेत्** णौ निकेतने ॥ ’ (श्लो. 162) इति **देवः** ।

पूर्वकः-र्विका, पुपूर्वयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक-**चूर्णयति**वत् (550) ज्ञेयानि ।

(1041) “ **पूल सङ्घाते** ” (I-भ्वादिः-528. अक. सेट्. पर.)

‘संघाते पूलयेत् **पूलेत्** पूलेः स्तां णिशपोः क्रमात् ॥’ (श्लो. 156) इति **देवः** ।

पूलकः-लिका, पूलकः-लिका, पुपूलिषकः-षिका, पोपूलकः-लिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कूलति**वत् (244) ज्ञेयानि । [1]पूलः ।

(1042) “ **पूल सङ्घाते** ” (X-चुरादिः-1637. अक. सेट्. उभ.)

‘संघाते **पूलयेत्** पूलेत् पूलेः स्तां णिशपोः क्रमात् ॥’ (श्लो. 156) इति **देवः** ।

**पूलकः**-पुपूलयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कूटयति**-वत् (240) ज्ञेयानि ।

(1043) “ **पूष वृद्धौ** ” (I-भ्वादिः-675. अक. सेट्. पर.)

पोषकः-षिका, पोषकः-षिका, पुपूषिषकः-षिका, पोपूषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**चूषति**वत् (552) ज्ञेयानि । [2]पूषा ।

(1044) “ **पॄ पालनपूरणयोः** ”

(III-जुहोत्यादिः-1086. सक. अनि. पर.) [अ]

---

1. ‘ हलश्च ’ (3-3-121) इति संज्ञायां घञ् । **पूलः**=मूलिकाविशेषः ।
2. बाहुलकात् औणादिके [ द. उ. 6.55. ] कनिन्प्रत्यये रूपम् । **पूषा**=आदित्यः ।

[अ] “ ह्रस्वान्तोऽयं धातुरिति-**वर्धमान-काश्यप-आभरण-पुरुषकाराः** । **[क्षीर] स्वामी** तु दीर्घान्तं पठित्वा, ‘ ह्रस्वान्तोऽयम् ’ इति **नन्दी** ।’ इति । **आत्रेय-मैत्रेयौ** तु ह्रस्वान्तं पठित्वा, ‘ दीर्घान्त**मेके** ’ इति । ...... **वृत्तिकारस्य**



‘पृणाति पूरणे, श्लौ तु **पिपर्ति**, णिचि पारयेत् ॥’ (श्लो. 36) इति **देवः** ।

पारकः-रिका, पारकः-रिका, [1]पुपूर्षकः-र्षिका, [2]पेप्रीयकः-यिका ;
पर्ता-पर्त्री, पारयिता-त्री, पुपूर्षिता-त्री, पेप्रीयिता-त्री ;
[3]पिप्रत्-पिप्रतौ-पिप्रतः, पिप्रती, पारयन्-न्ती, पुपूर्षन्-न्ती ; —
[4]परिष्यन्-न्ती-ती, पारयिष्यन्-न्ती-ती, पुपूर्षिष्यन्-न्ती-ती ; —
व्यतिपिप्राणः, पारयमाणः, व्यतिपुपूर्षमाणः, पेप्रीयमाणः ;
व्यतिपरिष्यमाणः, पारयिष्यमाणः, व्यतिपुपूर्षिष्यमाणः, पेप्रीयिष्यमाणः ;
व्यापृत्-व्यापृतौ-व्यापृतः ; — — —
व्यापृतम्-तः-तवान् , पारितः, पुपूर्षितः, पेप्रीयितः-तवान् ;
परः, व्यापारी, पारः, पुपूर्षुः, [5]पिपारयिषुः, पेप्रियः ;

---

तु दीर्घान्त एवेष्टः । यदाह—‘ शॄद्दॄप्रां ह्रस्वो वा ’ (7-4-12) इत्यत्र “ **केचित्** एतत् सूत्रं प्रत्याचक्षते । ‘ श्रा पाके, द्रा कुत्सायां गतौ, प्रा पूरणे ’ इत्येषाम् , ‘ बह्वर्था अपि धातवः ’ (भाष्यम् 1-3-1) इति शॄद्दॄप्राम् अर्थे वर्तमानानां ‘ विशश्रतुः ’ इत्यादीनि रूपाणि साधयन्ति । तथा सति, ‘ विशुश्रुवान् ’ इति क्वसौ एतद्रूपं न स्यात् ।” इति । यदि ह्रस्वान्तः स्यात् प्रातिना प्रत्याख्यानम् , **‘पिपृवान्’** इति प्रयोजनकथनं चानुपपन्नं स्यात् । तथा **वृत्ति-न्यास पदमञ्जरी-प्रदीपकारादयो**ऽपि । किञ्च, **अपाणिनीयश्च** ह्रस्वान्तः । यदि हि स्यात् ; किं ह्रस्वविकल्पेन ? यत् क्रैयादिकाद् दीर्घान्तरूपाणि, अस्माच्च ह्रस्वान्तरूपाणि भविष्यन्ति । एवञ्च, “ तं **पिपृतं** रोदसी—” (तै. ब्रा. 2. 8. 4. 8.) ‘ पाहि माऽग्ने **पिपृहि**—’ ( तै. सं. 1.3.3.1. ) इत्यादयश्छान्दसा द्रष्टव्याः ॥” इति **मा. धा. वृत्तौ** सुदूरं विचार्य ह्रस्वान्तपाठाभावः समर्थितः । तथापि, **सिद्धान्त-कौमुद्यादिषु**, पूर्वेषां ग्रन्थेषु ह्रस्वान्तस्याप्युपलम्भात्तेषां मतानुरोधेनात्र ह्रस्वान्तस्य रूपाणि प्रदर्शितानि ।

1. सन्नन्ते सर्वत्र, ‘अज्झनगमां सनि, (6-4-16) इति दीर्घे, ‘हलन्ताच्च’ (1-2-10) इति सनः कित्त्वे ‘ उद् **ओष्ठ्यपूर्वस्य** ’ (7-1-102) इत्युत्त्वे रपरत्वे ‘ हलि च ’ (8-2-77) इति दीर्घः । ‘ इट् सनि वा ’ (7-2-41) इत्यत्रोपदेशाधिकारादत्र सनि इड्विधिर्न ।
2. यङन्ते सर्वत्र ‘ **रीङ् ऋतः** ’ (7-4-27) इति रीङागमः । अभ्यासे गुणः ।
3. शतरि, ‘ **जुहोत्यादिभ्यः**—’ (2-4-75) इति श्लुः विकरणप्रत्ययः । ‘ श्लौ ’ (6-1-10) इति द्विर्वचनम् । ‘ **अर्तिपिपर्त्योश्च** ’ (7-4-77) इति अभ्यासस्येत्त्वम् । ‘ **नाभ्यस्ताच्छतुः** ’ (7-1-78) इति नुम्निषेधः ।
4. ‘ **ऋद्धनोः स्ये** ’ (7-2-70) इति स्यप्रत्ययस्येडागमः ।
5. ण्यन्तात् सनि, ‘ **ओः पुयण्ज्यपरे** ’ (7-4-80) इत्यभ्यासस्येकारः ।

| | | | |
|---|---|---|---|
| पर्तव्यम् , | पारयितव्यम् | पुपूर्षितव्यम् , | पेप्रीयितव्यम् ; |
| परणीयम् , | पारणीयम् , | पुपूर्षणीयम् , | पेप्रीयणीयम् ; |
| [1]पार्यम् , | पार्यम् , | पुपूर्ष्यम् , | पेप्रीय्यम् ; |
| ईषत्परः-दुष्परः-सुपरः ; | — | — | — |
| [2]व्याप्रियमाणः, | पार्यमाणः, | पुपूर्ष्यमाणः, | पेप्रीय्यमाणः ; |
| व्यापारः, | पारः, | पुपूर्षः, | पेप्रीयः ; |
| पर्तुम् , | पारयितुम् , | पुपूर्षितुम् , | पेप्रीयितुम् ; |
| व्यापृतिः, | पारणा, | पुपूर्षा-पिपारयिषा, | पेप्रीया ; |
| परणम्, | पारणम् , | पुपूर्षणम् , | पेप्रीयणम् ; |
| पृत्वा, | पारयित्वा, | पुपूर्षित्वा, | पेप्रीयित्वा ; |
| व्यापृत्य, | व्यापार्य, | व्यापुपूर्ष्य, | प्रपेप्रीय्य ; |
| पारम् २, पृत्वा २, | पारम् २, पारयित्वा २, | पुपूर्षम् २, पुपूर्षित्वा २, | पेप्रीयम् २ ; पेप्रीयित्वा २. |

(1045) "**पृ प्रीतौ**" (V-स्वादिः-1258. अक. अनि. पर.)

'प्रीतौ **पृणो**त्यृदन्तस्य, व्यायामे प्रियते पृङः ।' (श्लो. 34) इति **देवः** ।

अयं धातुश्छान्दस इति **क्षीरस्वामिकाश्यपौ** ।

पारकः-रिका, पारकः-रिका, पुपूर्षकः-र्षिका, पेप्रीयकः-यिका ; इत्यादीनि सर्वाण्यपि रूपाणि जौहोत्यादिक**पिपर्ति**वत् (1044) ज्ञेयानि । शतरि—[3]पृण्वन्-ती, इति रूपमिति विशेषः ।

(1046) "**पृङ् व्यायामे**" (VI-तुदादिः-1402. अक. अनि. आत्म.)

'**व्यायामः**=उद्योगः । स च प्रवृत्तिमात्रम् ।' इति **धा. का.** (2-83) । 'प्रीतौ पृणोत्यृदन्तस्य, व्यायामे **प्रियते** पृङः ।' (श्लो. 34) इति **देवः** । प्रायेणायम् 'वि, आङ्' इत्युपसर्गद्वयपूर्वकः ।

पारकः-रिका, पारकः-रिका, पुपूर्षकः-र्षिका, पेप्रीयकः-यिका ;

1. '**ऋहलोः**—' (3-1-124) इति भावकर्मणोर्ण्यत्प्रत्ययः ।
2. यकि, 'रिङ् शयग्लिङ्क्षु' (7-4-28) इति रिङादेशः ।
3. '**स्वादिभ्यः**—' (3-1-73) इति श्नुः विकरणप्रत्ययः । '**हुश्नुवोः** सार्वधातुके' (6-4-87) इति यण् । णत्वम् ।



इत्यादीनि सर्वाण्यपि रूपाणि जौहोत्यादिक**पिपर्ति**वत् (1044) ज्ञेयानि । शानचि—[1]व्याप्रियमाणः, इति रूपम् ।

(1047) "**पृच संयमने**" (X-चुरादिः-1808. सक. सेट्. उभ.)

**आधृषीयः** ।

'पृणक्ति पृक्ते (पृङ्क्ते) सम्पर्के, यौ **पर्चयति** पर्चति ॥' (श्लो. 51) इति **देवः** । 'पृची सम्पर्चने' इति **क्षीरस्वामी** । **देवो**ऽप्यत्रानुकूलः । '—'सम्बन्धने—' इति **क्षीरस्वामी** ।' इति **पुरुषकारे** । आधृषीयत्वेन णिज्विकल्पः । पर्चकः-र्चिका, पिपर्चयिषकः-षिका, पर्चकः-र्चिका, पिपर्चिषकः-षिका, परीपृचकः-चिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चर्पयति**वत् (554) ज्ञेयानि ।

(1048) "**पृची सम्पर्चने**" (II-अदादिः-1030. सक. सेट्. आत्म.)

**सम्पर्चनम्**=मिश्रीकरणम् ।

'पृणक्ति **पृक्ते** (पृङ्क्ते) सम्पर्के, यौ पर्चयति पर्चति ॥' (श्लो. 51) इति **देवः** । "उदित्—इति **दुर्ग-काश्यप-नन्दि-धनपालादयः** । 'इदित्, तृतीयान्तः ।' इति **कौशिकः** । 'ईदित्—' इत्यपरे । तत्र **वृत्तौ** 'सम्पृच—', (3-2-142) आदिसूत्रे, "पृची सम्पर्के' इति रुधादिर्गृह्यते, न त्वदादिः ।' इत्यभिधानात् प्रथमान्त ईदिदेव युक्तः ।" इति **मा. धा. वृत्तौ** । 'पृचे—' इति **शाकटायनः** ।

पर्चकः-र्चिका, पर्चकः-र्चिका, पिपर्चिषकः-षिका, परीपृचकः-चिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**गृज**धातुवत् (422) ज्ञेयानि । [2]पृक्तः-पृक्तम्-पृक्तवान्, इति, [3]पृच्यम्, [4]सम्पर्कः, मधुपर्कः, [5]संपृचानः इति च रूपाणि धातोरस्य निष्ठा-ण्यद्-घञादिषु भवन्तीति विशेषः ।

1. शानचि, '**तुदादिभ्यः**'—(3-1-77) इति शप्रत्यये, 'रिङ् शयग्लिङ्क्षु' (7-4-28) इति रिङादेशः ।
2. '**श्वीदितो** निष्ठायाम्' (7-2-14) इतीण्निषेधः ।
3. '**ऋदुपधात्**—' (3-1-110) इति भावकर्मणोः क्यप् ।
4. निष्ठायामनिट्त्वात्, 'चजोः कु घिण्ण्यतोः' (7-3-52) इति कुत्वम् ।
5. शानचि, '**अदिप्रभृतिभ्यः**—' (2-4-72) इति शपो लुकि रूपम् ।

(1049) "**पृची सम्पर्के**" (VII-रुधादिः-1462. सक. सेट्. पर.)

'**पृणक्ति** पृक्ते (पृङ्क्ते) सम्पर्के, यौ पर्चयति पर्चति ॥' (श्लो. 51) इति **देवः** ।

पर्चकः-र्चिका, पर्चकः-र्चिका, पिपर्चिषकः-षिका, परीपृचकः-चिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**गृज**धातुवत् (422) ज्ञेयानि । शतरि-[1]पृञ्चन्-ती, घञि—[2]सम्पर्कः, घिनुणि-[3]सम्पर्की, निष्ठायाम्-पृक्तः, इति च रूपाण्यस्य भवन्तीति विशेषः ।

(1050) "**पृजि वर्णे**" (II-अदादिः-1028. अक. सेट्. आत्म.)

'पृची सम्पर्चने' इति धातोः पाठान्तरमिदं **कौशिकादिमतेन** । 'वर्णः= पिङ्गलत्वं तत् । 'सम्पर्चने' **इत्येके** ! 'अवयवे' **इत्यन्ये** । 'अव्यक्ते शब्दे' **इत्यपरे** ।' इति **धा. का. व्याख्यायाम्** (2-46) । 'पृणक्ति **पृङ्क्ते** सम्पर्के—॥' (श्लो. 51) इति **देव**पाठाभ्युपगमेनाप्ययं पाठोऽस्तीति ज्ञायते ।

पृञ्जकः-ञ्जिका, पृञ्जकः-ञ्जिका, पिपृञ्जिषकः-षिका, परीपृञ्जकः-ञ्जिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कुण्ठति**वत् (209) ज्ञेयानि । शानचि पृञ्जानः, इति रूपमिति विशेषः । [A]सम्पृञ्जितम् ।

(1051) "**पृड सुखने**" (VI-तुदादिः-1328. अक. सेट्. पर.)

पर्डकः-र्डिका, पर्डकः-र्डिका, पिपर्डिषकः-षिका, परीपृडकः-डिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**गर्जति**वत् (422) ज्ञेयानि । शतरि पृडन्-ती, इति रूपमिति विशेषः ।

(1052) "**पृण प्रीणने**" (VI-तुदादिः-1329. अक. सेट्. पर.)

पर्णकः-र्णिका, पर्णकः-र्णिका, पिपर्णिषकः-षिका, परीपृणकः-णिका ; इत्यादीनि

1. शतरि, '**रुधादिभ्यः—**' (3-1-78) इति श्नम् विकरणप्रत्ययः । मित्त्वादन्त्यादचः परो भवति । '**श्नसोरल्लोपः**' (6-4-111) इति श्नमोऽकारस्य लोपः । नकारस्यानुस्वारे, परसवर्णे च रूपमेवम् ।
2. निष्ठायामनिट्त्वेन 'चजोः कु—' (7-3-52) इति घञि कुत्वम् ।
3. '**सम्पृचानुरुध—**' (3-2-142) इत्यादिना सम्पूर्वकादस्मात् कर्तरि, तच्छीलादिष्वर्थेषु घिनुण्प्रत्ययः । 'चजोः—' (7-3-52) इति कुत्वम् ।

A. 'शिञ्जानपिञ्जानसुवर्णभूषा**सम्पृञ्जितो** वृज्यविवृञ्जिसेव्यः ।' धा. का. 2.46.



सर्वाण्यपि रूपाणि भौवादिक**गर्जति**वत् (422) ज्ञेयानि । [1]लोकम्पृणः ।

(1053) "**पृथ प्रक्षेपे**" (X-चुरादिः-1554. सक. सेट्. उभ.)

'पृथेः **पर्थयती**त्येतत् प्रक्षेपे णौ पदं विदुः ॥' (श्लो.99) इति **देवः** ।

पर्थकः-र्थिका, पिपर्थयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कल्पयति**वत् (250) ज्ञेयानि । ल्यादिकं नास्येति विशेषः । [A]पर्थितः ।

(1054) "**पृषु सेचने**" (I-भ्वादिः-705. सक. सेट्. पर.)

'—हिंसासंक्लेशनयोश्च' इति **माधवः** ।

पर्षकः-र्षिका, पर्षकः-र्षिका, पिपर्षिषकः-षिका, [2]परीपृषकः-षिका ;
पर्षिता-त्री, पर्षयिता-त्री, पिपर्षिषिता-त्री, परीपृषिता-त्री ;
पर्षन्-[3]व्यतिपर्षन्-न्ती, पर्षयन्-न्ती, पिपर्षिषन्-न्ती ; —
— पर्षयमाणः, — परीपृष्यमाणः ;
— पर्षयिष्यमाणः, — परीपृषिष्यमाणः ;
पृट्-पृड्-पृषौ-पृषः ; — — —
[4]पृष्टम्-पृष्टः-पृष्टवान्, पर्षितः, पिपर्षिषितः, परीपृषितः-तवान् ;
पर्षः, [5]पर्षणः, सुपर्षी, पर्षः, पिपर्षिषुः, परीपर्षः ;
पर्षितव्यम्, पर्षयितव्यम्, पिपर्षिषितव्यम्, परीपृषितव्यम् ;
पर्षणीयम्, पर्षणीयम्, पिपर्षिषणीयम्, परीपृषणीयम् ;

1. लोकं पृणतीति **लोकम्पृणः** । 'कप्रकरणे-मूलविभुजादिभ्य उपसंख्यानम्' (वा. 3-2-5) इति कर्तरि कप्रत्यये, '**लोकस्य पृणे**' (वा. 6-3-70) इति मुमागमः । **लोकम्पृणः**=यागवेदिका, आशुकार्यकारी, जनरञ्जकश्च ।
2. यङन्ते सर्वत्र, 'रीग् **ऋदुपधस्य च**' (7-4-90) इति रीगागमः ।
3. 'न गति**हिंसार्थेभ्यः**' (1-3-15) इति कर्मव्यतीहारे शानज्निषेधात् शतैव ।
4. उदित्त्वेन क्त्वायामिड्विकल्पनात्, निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्निषेधः । ष्टुत्वम् ।
5. नन्द्यादित्वेन (3-1-134) कर्तरि ल्युप्रत्ययः ।

A. 'अप्रार्थितो व्रजगृहेऽपि च **पर्थितो**ऽभूदासम्बयन् जनमतिं निजशाम्बरीभिः ॥' **धा. का. 3.15.**

[1]पृष्यम् , पर्ष्यम् , पिपर्षिष्यम् , परीपृष्यम् ;
ईषत्पर्षः-[2]दुष्पर्षः-सुपर्षः ; — —
पृष्यमाणः, पर्ष्यमाणः, पिपर्षिष्यमाणः, परीपृष्यमाणः ;
पर्षः, पर्षः, पिपर्षिषः, परीपृषः ;
पर्षितुम्, पर्षयितुम्, पिपर्षिषितुम्, परीपृषितुम् ;
पृष्टिः, पर्षणा, पिपर्षिषा, परीपृषा ;
पर्षणम्, पर्षणम्, पिपर्षिषणम्, परीपृषणम् ;
[3]पर्षित्वा-पृष्ट्वा, पर्षयित्वा, पिपर्षिषित्वा, परीपृषित्वा ;
प्रपृष्य, प्रपर्ष्य, प्रपिपर्षिष्य, प्रपरीपृष्य ;
[4]दण्डोपपर्षम्, दण्डेनोपपर्षम्, दण्डपर्षं वा गाः कालयति ।
पर्षम् २, पर्षित्वा २-पृष्ट्वा २, } पर्षम् २, पर्षयित्वा २, } पिपर्षिषम् २, पिपर्षिषित्वा २, } परीपृषम् २ ; परीपृषित्वा २; }
[5]पृषितम्, [6]पृषत्-पृषती, [7]पृषतम् ।

(1055) "पॄ पालनपूरणयोः" (III-जुहोत्यादिः-1086. सक.सेट्.पर.)
'पृणाति पूरणे, श्लौ तु पिपर्ति, णिचि पारयेत् ॥' (श्लो. 36) इति देवः ।

1. 'ऋदुपधात्—' (3-1-110) इति भावकर्मणोः क्यप् । ण्यदपवादः ।
2. खल्विधायके सूत्रे (3-3-126) 'दुस्' इति सान्तस्योपसर्गस्योपादानम् , रेफान्तस्य च, इति पक्षद्वयम् । तत्र सान्तस्यैवेति पक्षे षत्वमत्रेति ज्ञेयम् । रेफान्तस्यैवेति पक्षे तु 'दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधः' (वा. 1-4-60) इति उपसर्गत्वनिषेधात् षत्वाभावः ।
3. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः । इट्पक्षे, 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधाद् गुणः ।
4. 'हिंसार्थानां च समानकर्मकाणाम्' (3-4-48) इति णमुल् । 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (2-2-21) इति समासविकल्पः ।
5. बाहुलकान्निष्ठायामिडागम इति केचित् । वस्तुतस्तु बाहुलकात् औणादिके इतच्-प्रत्यये रूपमेवमिति ज्ञेयम् ।
6. 'वर्तमाने पृषद्-' (द. उ. 6-5) इत्यादिना कतिप्रत्यये, तस्य शतृवद्भावेन शपि, पररूपे च रूपमेवम् । स्त्रियाम्, उगित्त्वेन, 'उगितश्च' (4-1-6) इति ङीपि पृषती इति रूपम् ।
7. 'पृषिरञ्जिभ्यां कित्' (द. उ. 6-15) इति अतच्प्रत्ययः । पृषतः = मृगः, बिन्दुश्च ।



[1]पारकः-रिका, पारकः-रिका, [2]पुपूर्षकः-पिपरिषकः-पिपरीषकः-षिका, [3]पोपुरकः-रिका ;
परिता-परीता-त्री, पारयिता-त्री, पुपूर्षिता-पिपरिषिता-पिपरीषिता-त्री, पोपुरिता-त्री ;
[4]पिपुरत्-पिपुरतौ-पिपुरतः, पारयन्-न्ती, पुपूर्षन्-पिपरिषन्-पिपरीषन्-न्ती ; —
परिष्यन्-परीष्यन्-न्ती-ती, पारयिष्यन्-न्ती-ती, पुपूर्षिष्यन्-पिपरिषिष्यन्-पिपरीषिष्यन्-न्ती-ती ; —
— पारयमाणः, — पोपूर्यमाणः ;
— पारयिष्यमाणः, — पोपुरिष्यमाणः ;
पूः-पुरौ-पुरः ; — — —
[5]पूर्तम्-पूर्तवान् , पारितः, पुपूर्षितः-पिपरिषितः-पिपरीषितः, पोपुरितः-तवान् ;
परः- [6]पूः[A] [7]पारयः, [8]पारयिष्णुः, पुपूर्षुः-पिपरिषुः-पिपरीषुः, पोपुरः ;

1. 'इत्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन' (वा. 7-1-102) इति वचनेन वृद्धिरत्र ज्ञेया । एवं तव्यदादिषु गुणोऽपि ज्ञेयः ।
2. सन्नन्ते सर्वत्र, 'इको झल्' (1-2-9) इति सनः कित्त्वे, 'श्र्युकः किति' (7-2-11) इति प्राप्तमिण्निषेधं बाधित्वा, 'इट् सनि वा' (7-2-41) इतीड्विकल्पः । इट्पक्षे 'उदोष्ठ्यपूर्वस्य' (7-1-102) इत्युत्त्वे रपरत्वे, 'हलि च' (8-2-77) इति दीर्घे च रूपमेवम् । इडभावपक्षे 'वृतो वा' (7-2-38) इति इटो दीर्घविकल्पे रूपद्वयम् । तत्र सनः कित्त्वाभावाद् गुणः, अभ्यासे इकारश्चेति ज्ञेयम् । आहत्य रूपत्रयमिति बोध्यम् ।
3. यङन्ते सर्वत्र, उत्वरपरत्वाल्लोपयलोपेषु अभ्यासे, 'गुणो यङ्लुकोः' (7-4-82) इति गुणो ज्ञेयः ।
4. शतरि, 'जुहोत्यादिभ्यः—' (2-4-75) इति शपः श्लौ, 'श्लौ' (6-1-10) इति द्विर्वचने, श्लोः शित्त्वेन सार्वधातुकत्वात् धातोरुत्वे रपरत्वे, 'अर्तिपिपर्त्योश्च' (7-4-77) इत्यभ्यासेकारः ।
5. 'श्र्युकः किति' (7-2-11) इति इण्निषेधे, उत्वादिकम् ।
6. तच्छीलादिषु कर्तृषु 'भ्राजभासधुर्विद्युतोर्जिपॄ—' (3-2-177) इति क्विपि उत्वादिषु प्रवृत्तेषु रेफस्य विसर्गे रूपम् ।
7. ण्यन्तादस्मात् 'अनुपसर्गाल्लिम्पविन्दधारिपारि—' (3-1-138) इति कर्तरि शप्रत्यये तस्य शित्त्वेन सार्वधातुकत्वात् शपि, पररूपे, अयादेशे च रूपम् ।
8. 'णेश्छन्दसि' (3-2-137) इति इष्णुच्प्रत्यये, 'अयामन्ताल्वाय्येत्न्विष्णुषु' (6-4-55) इति णेरयादेशः ।
A. 'रथस्य तस्यां पुरि दत्तचक्षुः विद्वान् विदामास शनैर्न यातम् ॥' शि.व 3.32.

परितव्यम्-परीतव्यम्, पारयितव्यम्, पुपूर्षितव्यम्-पिपरिषितव्यम्-पिपरीषितव्यम्, पोपुरितव्यम्;

परणीयम्, पारणीयम्, पुपूर्षणीयम्, पिपरिषणीयम्-पिपरीषणीयम्, पोपुरणीयम्;

पार्यम्, पार्यम्, पुपूर्ष्यम्-पिपरिष्यम्-पिपरीष्यम्, पोपूर्यम्;

ईषत्परः-दुष्परः-सुपरः; — —

[1]पूर्यमाणः, पार्यमाणः, पुपूर्ष्यमाणः-पिपरिष्यमाणः-पिपरीष्यमाणः, पोपूर्यमाणः;

परः, पारः, पुपूर्षः-पिपरिषः-पिपरीषः, पोपुरः;

परितुम्-परीतुम्, पारयितुम्, पुपूर्षितुम्-पिपरिषितुम्-पिपरीषितुम्, पोपुरितुम्;

पूर्तिः-[2]पूर्णिः, पारणा, पुपूर्षा-पिपरिषा-पिपरीषा, पोपुरा;

परणम्, पारणम्, पुपूर्षणम्-पिपरिषणम्-पिपरीषणम्, पोपुरणम्;

पूर्त्वा, पारयित्वा, पुपूर्षित्वा-पिपरिषित्वा-पिपरीषित्वा, पोपुरित्वा;

प्रपूर्य, प्रपार्य, प्रपुपूर्ष्य-प्रपिपरिष्य प्रपिपरीष्य, प्रपोपूर्य;

पारम् २, } पारम् २, } पुपूर्षम् २-पिपरिषम् २-पिपरीषम् २, }
पूर्त्वा २, } पारयित्वा २, } पुपूर्षित्वा २-पिपरिषित्वा २-पिपरीषित्वा २, }
पोपुरम् २; }
पोपुरित्वा २; }

[3] पुरुः, [4]पर्व, [5]पुरीषम्, [6]पुरुषः, [7]परुषः, [8]परुः।

---

1. यकः कित्त्वेन उत्वरपरत्वादिकं ज्ञेयम्।
2. '**ॠल्वादिभ्यः** क्तिन् निष्ठावद् वाच्यः' (वा. 8-2-44) इति नकारे, णत्वम्। एतच्च पाक्षिकमिति **केचित्**।
3. '**पॄभि**—' (द. उ. 1-108) इति कुप्रत्ययः। पृणाति, पूर्यते वा इति **पुरुः**=विस्तीर्णः, लोकश्च।
4. '**स्नामदिपद्यर्तिपॄ**—' (द. उ. 6-68) इति वनिप्प्रत्ययः। पृणाति, पिपर्ति पूर्यते वा इति **पर्व**=अङ्गुल्यग्रम्, पुण्यतिथिश्च।
5. '**शॄपॄभ्यां** कित्' (द. उ. 9-10) इतीषन्प्रत्ययः, तस्य कित्त्वं च। पृणाति, पूर्यते वा तेनोदरमिति **पुरीषम्**।
6. '**पुरः** कुषन्' (द. उ. 9-14) इत्यनेन कुषन्प्रत्यये, उत्वादिकम्।
7. '**पॄकलिभ्यामुषच्**' (द. उ. 9-15) इत्युषच्प्रत्ययः। पृणाति, पिपर्ति इति वा **परुषः**=अमृदुः।
8. 'अर्तिपॄवपि —' (द. उ. 9-39) इत्युसिप्रत्ययः। **परुः**= समुद्रः, राजा च।



(1056) "**पॄ पालनपूरणयोः**" (IX-क्र्यादिः-1489. सक. सेट्. पर.)

**प्वादिः, ल्वादिश्च।**

'**पृणाति** पूरणे, श्लौ तु पिपर्ति, णिचि पारयेत्॥' (श्लो. 36) इति **देवः**।

पारकः-रिका, पारकः-रिका, पुपूर्षकः-षिका, पिपरीषकः-पिपरिषकः-षिका, पोपुरकः-रिका; [1]पारयः[A], [2]पृणन्-ती, इत्यादीनि सर्वाण्यपि रूपाणि जौहोत्यादिक**पिपर्ति**वत् (1055) ज्ञेयानि। [3]पूर्तम्[B]-पूर्तः-पूर्तवान्।

(1057) "**पॄ पूरणे**" (X-चुरादिः-1548. सक. सेट्. उभ.)

'पृणाति पूरणे, श्लौ तु पिपर्ति, णिचि **पारयेत्**॥' (श्लो. 36) इति **देवः**।

पारकः-रिका, पिपारयिषकः-षिका, पारकः-रिका, पुपूर्षकः-षिका, पिपरीषकः-पिपरिषकः-षिका, पोपुरकः-रिका;

इत्यादीनि सर्वाण्यपि रूपाणि ण्यन्तात्, ण्यन्तप्रकृतिकसन्नन्तात् शुद्धात् तदुपरि सन्नन्तात् यङन्ताच्च यथायथं जौहोत्यादिकपॄधातुवत् (1052) बोध्यानि। ण्यन्तात् सनि—पिपारयिषिता-त्री, पिपारयिषन्-न्ती, पिपारयिषिष्यन्-न्ती-ती; पिपारयिषमाणः, पिपारयिषिष्यमाणः, पिपारयिट्-यिषौ-यिषः, पिपारयिषितम्-तः-तवान्, पिपारयिषुः, पिपारयिषितव्यम्, पिपारयिषणीयम्, पिपारयिष्यम्, ईषत्पिपारयिषः-दुष्पिपारयिषः-सुपिपारयिषः, पिपारयिष्यमाणः, पिपारयिषः, पिपारयिषितुम्, पिपारयिषा, पिपारयिषणम्, पिपारयिषित्वा, प्रपिपारयिष्य, पिपारयिषम् २-पिपारयिषित्वा २, इतीमानि रूपाणीति विशेषः। णिजभावपक्षे शुद्धात् शतरि-परन्-न्ती, परिष्यन्-न्ती-ती इति रूपाणीति विशेषः।

---

1. '**अनुपसर्गाल्लिम्पविन्दधारिपारि**—' (3-1-138) इति ण्यन्तादस्मात् कर्तरि शप्रत्यये, शपि, पररूपे, णेरयादेशे च रूपम्।
2. शतरि, '**क्र्यादिभ्यः**—(3-1-81) इति श्ना विकरणप्रत्ययः। '**प्वादीनां** ह्रस्वः' (7-3-80) इति शिति परे ह्रस्वः। '**ऋवर्णा**न्नस्य णत्वं वाच्यम्' (वा. 8-4-1) इति णत्वम्।
3. 'न ध्याख्यापॄमूर्च्छिमदाम्' (8-2-57) इति निष्ठानत्वनिषेधः।
A. 'धारयैः कुसुमोर्मीणां **पारयैः** बाधितुं जनान्।' भ. का. 6. 79.
B. 'नागं ददर्श पटबूर्णमुखं धुनानं
कर्णौ श्वगन्तमखिलान् **अभिपूर्त**रोषम्॥' धा. का. 3.6.

**(1058) "पेलृ गतौ"** (I-भ्वादिः-541. सक. सेट्. आत्म.)

पेलकः-लिका, पेलकः-लिका, पिपेलिषकः-षिका, पेपेलकः-लिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**केलति**वत् (262) ज्ञेयानि। पेला भुक्तसमुज्झितम्। पेलकः=त्वग्गन्धः। पेलवम्=तनु। औणादिकोऽयम्।

**(1059) "पेवृ सेवने"** (I-भ्वादिः-504. सक. सेट्. आत्म.)

'—सेचने' इति **मैत्रेयः**। **क्षीरस्वामिमैत्रेयादीनां** मतेनास्य पाठः। पेवकः-विका, पेवकः-विका, पिपेविषकः-षिका, पेपेवकः-विका ; इत्यादीनि सर्वाणि रूपाणि भौवादिक**केलति**वत् (262) ज्ञेयानि। अस्य धातोः आत्मनेपदित्वात् शानचि-पेवमानः, पेविष्यमाणः, पिपेविषमाणः, पिपेविषिष्यमाणः, इतीमान्यधिकानीति विशेषः।

**(1060) "पेषृ प्रयत्ने"** (I-भ्वादिः-615.अक. सेट्. आत्म.)

'एषृ—' इति धातोः पाठान्तरमिदम्।

पेषकः-षिका, पेषकः-षिका, पिपेषिषकः-षिका, पेपेषकः-षिका ; इत्यादीनि रूपाणि भौवादिक**गेपति**वत् (429) ज्ञेयानि। क्विपि तु [1]पेट्-पेड्-पेषौ-पेषः इति रूपम्। कर्तरि क्तप्रत्यये अपेषितम्[A] इति।

**(1061) "पेसृ गतौ"** (I-भ्वादिः-720. सक. सेट्. पर.)

'णौ पिंसयति भाषार्थे, गत्यां तु शपि **पेसति**।' (श्लो. 192) इति **देवः**।

| | | | |
|---|---|---|---|
| पेसकः-सिका, | पेसकः-सिका, | पिपेसिषकः-षिका, | पेपेसकः-सिका ; |
| पेसिता-त्री, | पेसयिता-त्री, | पिपेसिषिता-त्री, | पेपेसिता-त्री ; |
| पेसन्-न्ती, | पेसयन्-न्ती, | पिपेसिषन्-न्ती ; | — |
| पेसिष्यन्, | पेसयिष्यन्-न्ती-ती, | पिपेसिषिष्यन्-न्ती-ती ; | — |
| — | पेसयमानः, पेसयिष्यमाणः, | — | पेपेस्यमानः, पेपेसिष्यमाणः ; |
| पेः-पेसौ-पेसः ; | — | — | — |
| पेसः, | पेसः, | पिपेसिषुः, | पेपेसः ; |
| पेसितव्यम्, | पेसयितव्यम्, | पिपेसिषितव्यम्, | पेपेसितव्यम् ; |

1. 'झलां जशोऽन्ते' (8-2-39) इति जश्त्वे चर्त्वविकल्पे च रूपमेवम्।

A. 'येषणात्सहरिजेषसंभ्रमान्नेषितस्मृतिरपेषितो रथात्॥' धा. का. 1.78.



| | | | |
|---|---|---|---|
| पेसनीयम्, | पेसनीयम्, | पिपेसिषणीयम्, | पेपेसनीयम् ; |
| पेस्यम्, | पेस्यम्, | पिपेसिष्यम्, | पेपेस्यम् ; |
| ईषत्पेसः-दुष्पेसः-सुपेसः ; | | — | |
| पेस्यमानः, | पेस्यमानः, | पिपेसिष्यमाणः, | पेपेस्यमानः ; |
| पेसितुम्, | पेसयितुम्, | पिपेसिषितुम्, | पेपेसितुम्, |
| पेसा, | पेसना, | पिपेसिषा, | पेपेसा ; |
| पेसनम्, | पेसनम्, | पिपेसिषणम्, | पेपेसनम् ; |
| पेसित्वा, | पेसयित्वा, | पिपेसिषित्वा, | पेपेसित्वा ; |
| प्रपेस्य, | प्रपेस्य, | प्रपिपेसिष्य, | प्रपेपेस्य ; |
| पेसम् २, पेसित्वा २, | पेसम् २, पेसयित्वा २, | पिपेसिषम् २, पिपेसिषित्वा २, | पेपेसम् २ ; पेपेसित्वा २. |

**(1062) "पै शोषणे"** (I-भ्वादिः-920. अक. अनि. पर.)

'पाने पिबति, रक्षायां पाति, **पायति** शोषणे॥' (श्लो. 5) इति **देवः**।

| | | | |
|---|---|---|---|
| [1]पायकः-यिका, | [2]पायकः-यिका, | पिपासकः-सिका, | [3]पापायकः-यिका ; |
| पाता-पात्री, | पाययिता-त्री, | पिपासिता-त्री, | पापायिता-त्री ; |
| [4]पायन्-न्ती, | पाययन्-न्ती, | पिपासन्-न्ती ; | — |
| पास्यन्-न्ती-ती, | पाययिष्यन्-न्ती-ती, | पिपासिष्यन्-न्ती-ती ; | — |
| [5]व्यतिपायमानः, | पाययमानः, | व्यतिपिपासमानः, | पापायमानः ; |
| व्यतिपास्यमानः, | पाययिष्यमाणः, | व्यतिपिपासिष्यमाणः, | पापायिष्यमाणः, |
| पाः-पौ-पः ; | — | — | — |

1. '**आतो** युक् चिण्कृतोः' (7-3-33) इति युगागमः। एवं घञ्प्रत्यये, णमुलि च युगागमो ज्ञेयः।
2. 'शाच्छासाह्वाव्यावेपां युक्' (7-3-37) इति ण्यन्ते सर्वत्र युगागमः। **आदन्त**-लक्षणपुगागमस्यापवादः। सूत्रेऽत्र लाक्षणिकस्यापि पाधातोरस्य ग्रहणम् इति **व्याख्यातारः**।
3. 'गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम्' (वा. 2-4-77) इति वचनात् ईत्वविधायके सूत्रे यङन्ते, नास्य ग्रहणमिति क्तप्रत्ययादिषु च ईत्वमस्य धातोर्नेति ज्ञेयम्। तेनैवं रूपम्।
4. '—अशिति' (6-1-45) इत्युक्तत्वादात्वं न। तेन शतरि आयादेशे रूपमेवम्।
5. कर्मव्यतीहारे शानच्। एवं सन्नन्तेऽपि प्रकृतेरात्मनेपदनिमित्तमेव शानज्निमित्तमिति ज्ञेयम्।

| | | | |
|---|---|---|---|
| [A]पातम्-तः, | पायितः, | पिपासितः, | पापायितः-तवान् ; |
| [1]पायः, | [2]सुपः, | पायः, पिपासुः, | पापः ; |
| पातव्यम्, | पाययितव्यम्, | पिपासितव्यम्, | पापायितव्यम् ; |
| पानीयम्, | पायनीयम्, | पिपासनीयम्, | पापायनीयम् ; |
| पेयम्, | पाय्यम्, | पिपास्यम्, | पापाय्यम् ; |
| [3]ईषत्पानःदुष्पानः-सुपानः ; | | — | — |
| पायमानः, | पाय्यमानः, | पिपास्यमानः, | पापाय्यमानः ; |
| पायः, | पायः, | पिपासः, | पापायः ; |
| पातुम्, | पाययितुम्, | पिपासितुम्, | पापायितुम् ; |
| पातिः, [4]सुपा, | पायना, | पिपासा, | पापाया ; |
| पानम्, | पायनम्, | पिपासनम्, | पापायनम् ; |
| पात्वा, | पाययित्वा, | पिपासित्वा, | पापायित्वा ; |
| प्रपाय, | प्रपाय्य, | प्रपिपास्य, | प्रपापाय्य ; |
| पायम् २, पात्वा २, | पायम् २, पाययित्वा २, | पिपासम् २, पिपासित्वा २, | पापायम् २ ; पापायित्वा २. |

## (1063) " पैणृ गतिप्रेरणश्लेषणेषु "

(I-भ्वादिः-458. सक. सेट्. पर.)

' पेणृ—' इति **क्वचित्** पाठः। ' प्रैणृ—' इति **मा. धा. वृत्तिसंमतः** पाठः।

| | | | |
|---|---|---|---|
| पैणकः-णिका, | पैणकः-णिका, | [5]पिपैणिषकः-षिका, | [6]पेपैणकः-णिका ; |
| पैणिता-त्री, | पैणयिता-त्री, | पिपैणिषिता-त्री, | पेपैणिता-त्री ; |

1. **आदन्त**लक्षणे णप्रत्यये युगागमे च रूपमेवम्।
2. ' **आत**श्चोपसर्गे ' (3-1-136) इति कर्तरि कप्रत्ययः।
3. ईषदाद्युपपदेषु, ' **आतो युच्** ' (3-3-128) इति खलपवादो युच्। अनादेशः।
4. स्त्रियां भावादौ, ' **आत**श्चोपसर्गे ' (3-3-106) इत्यङ्।
5. सन्नन्तात् ण्वुलि, द्वित्वे, अभ्यासे ' ह्रस्वः ' (7-4-59) इति ह्रस्वः। स च, ' एच इग् घ्रस्वादेशे ' (1-1-48) इति परिभाषया इकाररूप इति ज्ञेयम्।
6. यङन्ताण्ण्वुलि अभ्यासे ह्रस्वे, तस्य ' गुणो यङ्लुकोः ' (7-4-82) इति गुणेन पुनरेकारश्रवणमिति ज्ञेयम्।

A. ' **अपातम**ाल्यं शयितं सुवानकाशरविषि स्तातततनौ फणीन्द्रे ॥ ' धा. का. 2-32.



इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**गेपति**वत् (429) ज्ञेयानि। शतरि-पैणन्-न्ती इति रूपमिति विशेषः।

## (1064) " ओ प्यायी वृद्धौ " (I-भ्वादिः-488. अक. सेट्. आत्म.)

प्रायेणायमाङ्पूर्वः।

| | | | |
|---|---|---|---|
| प्यायकः-यिका, | प्यायकः-यिका, | [1]पिप्यायिषकः-षिका, | [2]पेपीयकः-यिका ; |
| प्यायिता-त्री, | प्याययिता-त्री, | पिप्यायिषिता-त्री, | पेपीयिता-त्री ; |
| — | [3]आप्याययन्-न्ती ; | आप्याययिष्यन्-न्ती-ती ; | — |
| आप्यायमानः, | आप्याययमानः, | पिप्यायिषमाणः, | पेपीयमानः ; |
| आप्यायिष्यमाणः, | आप्याययिष्यमाणः, | पिप्यायिषिष्यमाणः, | पेपीयिष्यमाणः ; |
| [4]सुप्याः-सुप्यौ-सुप्यः ; | — | — | — |

[5]पीनः-पीनवान्, [6]आप्यानः[A]-प्रप्यानः(चन्द्रमाः), [7]आपीनम्[B] (अन्धूः, ऊधो वा), प्यायितः, पिप्यायिषितः, पेपीयितः-तवान् ;

प्यायः, [8]प्यायिता[C], [9]पिप्यिवान्,

1. सन्नन्तात् ण्वुलि, अभ्यासे हलादिशेषे, इडागमे च रूपम्।
2. यङन्ते सर्वत्र, ' लिड्यङोश्च ' (6-1-29) इति **पी**भावे, द्विर्वचने अभ्यासे गुणश्चेति ज्ञेयम्।
3. चित्तवत्कर्तृकत्वे परस्मैपदमेव। अचित्तवत्कर्तृकत्वे तु आत्मनेपदमेव।
4. क्विपि वलि लोपे रूपमेवम्।
5. ' **प्यायः पी** ' (6-1-28) इति विकल्पेन प्रकृतेः पीभावः। '**श्वीदितो** निष्ठायाम् ' (7-2-14) इतीण्निषेधः। ' **ओदितश्च** ' (8-2-44) इति निष्ठानत्वम्।
6. ' **प्यायः पी** ' (6-1-28) इत्यत्र व्यवस्थितविभाषाश्रयणात्, सोपसर्गात् पीभावो न। तेनात्र वलि लोपे निष्ठानत्वे च रूपं ज्ञेयम्।
7. ' आङ्पूर्वादन्धूधसोरिति वक्तव्यम् ' (वा. 6-1-28) इति वचनात् अन्धूधसो-र्विशेष्ययोः आङुपसृष्टादस्माद्धातोः पीभावे निष्ठानत्वे च रूपं ज्ञेयम्।
8. धातोर्यकारान्तत्वेन ' न यः ' (3-2-152) इति युचो निषेधात्, तच्छीलादिषु कर्तृषु औत्सर्गिकः ' तृन् ' (3-2-135) इति तृन्नेव।
9. लिटः क्वसौ, ' लिड्यङोश्च ' (6-1-29) इति पीभावे, ' वस्वेकाजाद्घसाम् ' (7-2-67) इतीडागमे यणादेशे च रूपम्।

A. ' **यदाप्यानं** हिमोस्रेण भनक्त्युपवनं कपिः ॥' भ. का. 9.2.

B. ' **आपीन**भारोद्वहनप्रयत्नात् गृष्टिर्गुरुत्वाद् वपुषो नरेन्द्रः।' रघुवंशे 2.18.

C. ' नावैत्याप्**यायितारं** किं कमलानि रविं कपिः।' भ. का. 7.17.

[1]आपीः, प्यायः, पिप्यायिषुः, पेप्यः ;
प्यायितव्यम्, प्याययितव्यम्, पिप्यायिषितव्यम्, पेपीयितव्यम् ;-
[2]प्रप्यायनीयम्, प्रप्यायनीयम्, पिप्यायिषणीयम्, पेपीयनीयम् ;
आप्याय्यम्, प्याय्यम्, पिप्यायिष्यम्, पेपीय्यम् ;
ईषत्प्यायः-दुष्प्यायः-सुप्यायः ; — —
प्याय्यमानः, प्याय्यमानः, पिप्यायिष्यमाणः, पेपीय्यमानः ;
आप्यायः, प्यायः, पिप्यायिषः, पेपीयः ;
आप्यायितुम्, आप्याययितुम्, पिप्यायिषितुम्, पेपीयितुम् ;
[3]प्याया, [A]आप्यायना, पिप्यायिषा, पेपीया ;
आप्यायनम्, [4]प्रप्यायनम्, पिप्यायिषणम्, पेपीयनम् ;
प्यायित्वा, प्याययित्वा, पिप्यायिषित्वा, पेपीयित्वा ;
आप्याय्य, प्रप्याय्य, प्रपिप्यायिष्य, प्रपेपीय्य ;
प्यायम् २, प्यायित्वा २, } प्यायम् २, प्याययित्वा २, } पिप्यायिषम् २, पिप्यायिषित्वा २, } पेपीयम् २ ; पेपीयित्वा २. }

## (1065) "प्यैङ् वृद्धौ" (I-भ्वादिः-964. अक. अनि. आत्म.)

प्यायकः-यिका, प्यापकः-पिका, पिप्यासकः-सिका, पाप्यायकः-यिका ;
प्याता-त्री, प्यापयिता-त्री, पिप्यासिता-त्री, पाप्यायिता-त्री ;
— प्यापयन्-न्ती, प्यापयिष्यन्-न्ती-ती ; —

1. 'अन्येभ्योऽपि दृश्यते' (3-2-178) इत्यत्र बाहुलकात् 'ध्याप्योः सम्प्रसारणं च' (भाष्यम्) इति वचनात् आङ्पूर्वादस्मात् क्विपि, सम्प्रसारणे, 'लोपो व्योर्वलि' (6-1-66) इति यलोपे च रूपमेवमिति **प्र. सर्वस्वे**। प्रकृतसूत्रे 'ध्यायतेः सम्प्रसारणं च' इत्येव **भाष्ये** दृश्यते। '**भट्टपाद**सम्मतोऽयं पाठः स्यात् दाक्षिणात्यः साधुः।' इति **प्र. स. टीका** (पु. 68)।
2. उपसर्गस्थान्निमित्तात् परस्य अच उत्तरस्य कृत्स्थस्य नकारस्य 'न भाभूपूकमिगमिप्यायीवेपाम्' (8-4-34) इति णत्वनिषेधः।
3. 'गुरोश्च हलः' (3-3-103) इति स्त्रियाम् अकारप्रत्ययः।
4. 'ण्यन्तभादीनामुपसंख्यानम्' (वा. 8-4-34) इति ण्यन्तादुपसर्गस्थान्निमित्तात् परस्य कृत्स्थस्य नस्य णत्वनिषेधः।

A. 'छायाविशेषैः प्रचितैस्तदर्हा**माप्यायना**मारचयन्ति वृक्षाः॥' या.अ.18.67.



प्यायमानः, [1]प्यापयमानः, पिप्यासमानः, पाप्यायमानः ;
प्यास्यमानः, प्यापयिष्यमाणः, पिप्यासिष्यमाणः, पाप्यायिष्यमाणः ;
प्याः-प्यौ-प्यः ; — —
[2]प्यानम्-[A]नः, प्यानवान्, प्यापितः, पिप्यासितः, पाप्यायितः-तवान् ;
[3]आप्यायः, [4]पीवा-[B]पीवरी, प्यापः, पिप्यासुः, पाप्यः ;
प्यातव्यम्, प्यापयितव्यम्, पिप्यासितव्यम्, पाप्यायितव्यम् ;
प्यानीयम्, प्यापनीयम्, पिप्यासनीयम्, पाप्यायनीयम् ;
प्येयम्, प्याप्यम्, पिप्यास्यम्, पाप्याय्यम् ;
[5]ईषत्प्यानः-दुष्प्यानः-सुप्यानः ; — —
प्यायमानः, प्याप्यमानः, पिप्यास्यमानः, पाप्याय्यमानः ;
प्यायः, प्यापः, पिप्यासः, पाप्यायः ;
प्यातुम्, प्यापयितुम्, पिप्यासितुम्, पाप्यायितुम् ;
प्यातिः, [6]आप्या, प्यापना, पिप्यासा, पाप्याया ;
प्यानम्, प्यापनम्, पिप्यासनम्, पाप्यायनम् ;
प्यात्वा, प्यापयित्वा, पिप्यासित्वा, पाप्यायित्वा ;
प्रप्याय, प्रप्याप्य, प्रपिप्यासिष्य, प्रपाप्याय्य ;
प्यायम् २, प्यात्वा २, } प्यापम् २, प्यापयित्वा २, } पिप्यासम् २, पिप्यासित्वा २, } पाप्यायम् २; पाप्यायित्वा २. }

1. अचित्तवत्कर्तृकत्वे शानच्। चित्तवत्कर्तृकत्वे तु 'अणावकर्मकात्—' (1-3-88) इति ण्यन्ताच्छतैव।
2. '**संयोगादेरातो धातोर्यण्वतः**' (8-2-43) इति निष्ठानत्वे रूपम्।
3. 'श्याऽऽद्—' (3-1-141) इत्यादिना कर्तरि णप्रत्यये युगागमः।
4. '**आतो** मनिन्—' (3-2-74) इत्यनेन बाहुलकात् क्वनिप्प्रत्यये, 'ध्याप्योः सम्प्रसारणं च' (भाष्यम्-3-2-178) इति **प्रक्रियासर्वस्वा**नुसारि**भाष्य**वाक्येन सम्प्रसारणे च रूपम्। स्त्रियाम्, 'वनो र च' (4-1-7) इति ङीब्रेफौ भवतः।
5. ईषदाद्युपपदेषु, '**आतो** युच्' (3-3-128) इति युच्प्रत्ययः। खलोऽपवादः।
6. '**आत**श्चोपसर्गे' (3-3-106) इत्यङ्।

A. 'दयस्व मां देव कृपाम्बुशीत **प्याना**ैजसा त्रातजगत्त्रयं त्वाम्।' धा. का. 2.37.
B. 'जघनमलघु**पीवरो**रु कृच्छ्रादुरुनिबिरीसनितम्बभारखेदि।' शि. व. 7.20.

## (1066) " प्रच्छ ज्ञीप्सायाम् " (VI-तुदादिः-1413. सक. अनि. पर.)

### किरादिः ।

[1]प्रच्छकः-च्छिका, प्रच्छकः-च्छिका, [2]पिपृच्छिषकः-षिका, [3]परीपृच्छकः-च्छिका ;
[4]प्रष्टा-प्रष्ट्री, प्रच्छयिता-त्री, पिपृच्छिषिता-त्री, परीपृच्छिता-त्री ;
[5]पृच्छन्-न्ती-ती, प्रच्छयन्-न्ती, पिपृच्छिषन्-न्ती ; —
[6]प्रक्ष्यन्-न्ती-ती, प्रच्छयिष्यन्, पिपृच्छिषिष्यन्-न्ती-ती ; —
[7]सम्पृच्छमानः, [8]आपृच्छमानः,[A] प्रच्छयमानः, [9]आपिपृच्छिषमाणः, संपिपृच्छिषमाणः, परीपृच्छ्यमानः ;
सम्प्रक्ष्यमाणः-आप्रक्ष्यमाणः, प्रच्छयिष्यमाणः, आपिपृच्छिषिष्यमाणः-सम्पिपृच्छिषिष्यमाणः, परीपृच्छिष्यमाणः ;

---

1. 'प्रछ' इत्येव धातुः। तत्र, 'छे च' (6-1-73) इति ह्रस्वस्य तुकि, तस्य श्चुत्वेन चकारः सर्वत्र ज्ञेयः।
2. सन्नन्तात् ण्वुलि, 'किरश्च पञ्चभ्यः' (7-2-75) इतीडागमे, 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च' (1-2-8) इति सनः कित्त्वे, 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च' (6-1-16) इति सम्प्रसारणे षत्वे च रूपम्। एवं सन्नन्ते सर्वत्र ज्ञेयम्।
3. यङन्ते सर्वत्र यङ्निमित्तकं सम्प्रसारणं भवति। पश्चात् 'रीगृत्वत इति वक्तव्यम्' (वा. 7-4-90) इति रीक् अभ्यासस्य।
4. तृचि, 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' (8-2-36) इति षत्वे, 'ष्टुना ष्टुः' (8-4-41) इति ष्टुत्वे च रूपम्। एवं तव्यदादिष्वपि ज्ञेयम्।
5. शतरि, 'तुदादिभ्यः—' (3-1-77) इति विकरणप्रत्ययः शः। तस्य सार्वधातुकत्वेन ङिद्वद्भावात् सम्प्रसारणे रूपमेवम्। एवं शानजन्तेऽपि प्रक्रिया ज्ञेया।
6. स्यप्रत्यये, 'व्रश्च—' (8-2-36) इत्यादिना षत्वे, 'षढोः कः सि' (8-2-41) इति षकारस्य ककारे, षत्वे च रूपमेवम्।
7. 'विदिप्रच्छिस्वरतीनामुपसंख्यानम्' (वा. 1-3-29) इति वार्तिकेन सम्पूर्वकादस्मादात्मनेपदं, शानच् भवति।
8. 'आङि नुप्रच्छ्योरुपसंख्यानम्' (वा. 1-3-21) इति आङ्पूर्वकादस्माच्छानच्।
9. 'पूर्ववत् सनः' (1-3-62) इति संपूर्वकात्, आङ्पूर्वकाच्च सन्नन्तेऽपि शानच्।

A. 'कृतगुरुतरहारच्छेदमालिङ्ग्य पत्यौ
परिशिथिलितगात्रे गन्तुमापृच्छमाने।' शि. व. 11.38.



[1]प्राट्, शब्दप्राट्-प्राड्-प्राशौ-प्राशः ; — —,
[2]पृष्टम्-पृष्टः-पृष्टवान्, प्रच्छितः, पिपृच्छिषितः, परीपृच्छितः-तवान् ;
प्रच्छः, प्रच्छः, [A]पिपृच्छिषुः, परीपृच्छः ;
प्रष्टव्यम्, प्रच्छयितव्यम्, पिपृच्छिषितव्यम्, परीपृच्छितव्यम् ;
प्रच्छनीयम्, प्रच्छनीयम्, पिपृच्छिषणीयम्, परीपृच्छनीयम् ;
प्रच्छ्यम्, प्रच्छ्यम्, पिपृच्छिष्यम्, परीपृच्छ्यम् ;
ईषत्प्रच्छः-दुष्प्रच्छः-सुप्रच्छः ; — —
पृच्छ्यमानः, प्रच्छ्यमानः, पिपृच्छिष्यमाणः, परीपृच्छ्यमानः ;
प्रच्छः, [3]प्रश्नः, प्रच्छः, पिपृच्छिषः, परीपृच्छः ;
प्रष्टुम्, प्रच्छयितुम्, पिपृच्छिषितुम्, परीपृच्छितुम् ;
पृष्टिः, [4]पृच्छा, प्रच्छना, पिपृच्छिषा, परीपृच्छा ;
प्रच्छनम्, प्रच्छनम्, पिपृच्छिषणम्, परीपृच्छनम् ;
पृष्ट्वा, प्रच्छयित्वा, पिपृच्छिषित्वा, परीपृच्छित्वा ;
[5]आपृच्छ्य, सम्प्रच्छय्य, प्रपिपृच्छिष्य, प्रपरीपृच्छ्य ;
प्रच्छम् २, पृष्ट्वा २, } प्रच्छम् २, प्रच्छयित्वा २, } पिपृच्छिषम् २, पिपृच्छिषित्वा २, } परीपृच्छम् २ ; परीपृच्छित्वा २. }

---

1. 'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च' (वा. 3-2-178) इत्यनेन क्विपि दीर्घेऽसंप्रसारणे च विहिते सति, 'च्छ्वोः शूडनुनासिके च' (6-4-19) इति क्विन्निमित्तके शकारे, तस्य षत्वे जश्त्वे चर्त्वे च रूपमेवम्।
2. क्तप्रत्यये सम्प्रसारणादिकं सर्वं यथायथमूह्यम्।
3. भावेऽकर्तरि च कारके, 'यजयाचयतविच्छप्रच्छरक्षो नङ्' (3-3-90) इति नङ्प्रत्ययः। 'च्छ्वोः शूड्—' (6-4-19) इति सतुक्कस्य छकारस्य शकारः। 'प्रश्ने चासन्नकाले' (3-2-117) इति सूत्रकारनिर्देशप्रामाण्यात् सम्प्रसारणं न भवति। 'शात्' (8-4-44) इति निषेधात् श्चुत्वं न।
4. भिदादेः (3-3-104) आकृतिगणत्वात् अङि, सम्प्रसारणे च पृच्छा इति रूपमिति आत्रेयादीनां मतमिति मा. धा. वृत्तिः।
5. ल्यपि, सम्प्रसारणे रूपमेवम्। 'च्छ्वोः शूठ्—' (6-4-19) इति शकारादेशो न भवति, ल्यपो बहिरङ्गत्वात्।

A. 'उक्तं पिपृच्छिषूणां वो मा स्म भूत सुषुप्सवः॥' भ. का. 7.98.

(1067) " **प्रथ प्रख्याने** " (I-भ्वादिः-765. अक.सेट्. आत्म.)

**घटादिः षिच्च।** '**प्रख्यानम्**=प्रसिद्धिः।' इति **क्षीरस्वामी।** 'विस्तारेऽपि' इति **धा. का.** [2.4]। '**प्रथते** प्राथयत्येतत् प्रख्याने द्वितयं प्रथेः।' (श्लो. 99) इति **देवः** ।

प्राथकः-थिका, [1]प्रथकः-थिका, पिप्रथिषकः-षिका, पाप्रथकः-थिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**क्रथतिवत्** (206) तद्धातुविषयकप्रातिस्विकरूपाणि विना ज्ञेयानि। [2]प्रथा, [3]पृथुः-पृथु, [4]प्रथमः, [5]पृथिवी इति रूपाण्यस्माद्भवन्तीति विशेषः।

(1068) " **प्रथ प्रख्याने** " (X-चुरादिः-1553. अक. सेट्. उभ.)[अ]

'—क्षेपे च।' इति **द्रुमे** (श्लो. 188)।

'प्रथते **प्राथयत्येतत्** प्रख्याने द्वितयं प्रथेः।' (श्लो. 99) इति **देवः।**

प्राथकः-थिका, पिप्राथयिषकः-षिका; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**क्ष्मापयतिवत्** (282) ज्ञेयानि। '**नान्ये मितोऽहेतौ**' (ग. सू. भ्वादौ) इति सम्भवद्धेतुमण्णिचां चुरादिणिचि मित्त्वनिषेधात् घटादिकार्यमत्र नेति ज्ञेयम्। [A]प्राथितः।

---

1. पमन्ते सर्वत्र, '**घटादयो** मितः' (ग. सू. भ्वादौ) इति मित्संज्ञायाम्, '**मितां** ह्रस्वः' (6-4-92) इति उपधाह्रस्वे रूपम्।
2. '**घटादयः** षितः' (ग. सू. भ्वादौ) इति षित्वात्, स्त्रियाम्, '**षिद्भिदा**-दिभ्यः—' (3-3-104) इत्यङि रूपमेवम्।
3. '**प्रथिम्रदि**—' (द. उ. 1. 113) इति कुप्रत्यये सम्प्रसारणे च रूपमेवम्। प्रथतेऽसौ इति **पृथुः**=राजा, प्रथनं वा। **पृथु**=विस्तीर्णम्।
4. '**प्रथेरट्** च' (द. उ. 7.29) इति मन्प्रत्ययेऽडागमे च रूपम्।
5. '**प्रथेः** षिवन् सम्प्रसारणं च' (द. उ 8.124) इति षिवन्प्रत्यये सम्प्रसारणे च रूपम्। षित्वात् ङीष्।

[अ] **क्षीरस्वामी धातुममुं चुरादिषु न पठति।** '**पृथ (पर्थ)**' इति तस्य पाठः।

A. '**अप्राथितो** व्रजगृहेऽपि च पर्थितोऽभूत्......॥' धा. का. 3.15.



(1069) " **प्रस विस्तारे** " (I-भ्वादिः-766. अक. सेट्. आत्म.)

**घटादिः षिच्च।** '—प्रसवे।' इति **क्षीरस्वामी।**

प्रासकः-सिका, प्रसकः-सिका, पिप्रसिषकः-षिका, पाप्रसकः-सिका; [1]प्रसा, [2]प्रासः, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**क्रथतिवत्** (206) ज्ञेयानि। [A]प्रसमानः।

(1070) " **प्रा पूरणे** " (II-अदादिः-1061. सक. अनि. पर.)

प्रायकः-यिका, प्रापकः-पिका, पिप्रासकः-सिका, पाप्रायकः-यिका; इत्यादीनि सर्वाण्यपि रूपाणि आदादिकदाप्धातुवत् (833) ज्ञेयानि। [3]प्रायः, [4]प्रान् प्रान्तौ-प्रान्तः, [5]प्राणः[B]-प्राणवान् इति रूपाणि भवन्त्यस्येति विशेषः।

(1071) " **प्रीङ् प्रीतौ** " (IV-दिवादिः-1144. अक. अनि. आत्म.)

'प्रीङ् प्रीतौ **प्रीयते**ऽप्रीणात् प्रीणीते तर्पणे ञितः॥

अणौ यौ ञित्त्वसाफल्यात् प्रीणयेत् प्रयते प्रयेत्।' (श्लो. 19 20) इति **देवः।**

प्रायकः-यिका, प्रायकः-यिका, पिप्रीषकः-षिका, पेप्रीयकः-यिका; [6]प्रियः-इत्यादीनि सर्वाण्यपि रूपाणि दैवादिकधीङ्धातुवत् (901) ज्ञेयानि।

---

1. षित्त्वात् स्त्रियां भावादावङ् इति ज्ञेयम्।
2. 'हलश्च' (3-3-121) इति संज्ञायां घञ्। **प्रासः**=शब्दचित्रम्।
3. 'श्याऽऽद्व्यध—' (3-1-141) इत्यादिना कर्तरि णप्रत्यये युगागमः।
4. शतरि, शपि, '**अदिप्रभृतिभ्यः**—' (2-4-72) इति शपो लुकि, 'पदान्तस्य' (8-4-37) इति निषेधात् णत्वं नेति ज्ञेयम्।
5. '**संयोगादेरातो धातोर्यण्वतः**' (8-2-43) इति निष्ठानत्वे, णत्वे च रूपम्।
6. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कप्रत्ययः। एतच्च **आत्रेयादीनां** मतेनोक्तम्। **काशिकायां** तु 'प्रीणातीति **प्रियः**।' इति क्रैयादिकस्यैव कप्रत्ययः प्रोक्तः।

A. 'गोपीघटाः प्रग्रथितास्तदानीं पृथूपताप**प्रसमान**चिन्ताः।' धा. का. 2.4.

B. 'ख्यान्त्यः कथाः **प्राणमुदा** प्रतीनां निर्मान्त्य इष्टानि चदून् वचत्यः।' धा. का. 2. 50.

**(1072) "प्रीञ् तर्पणे कान्तौ च"** (IX-क्र्यादिः-1474. सक. अनि उभ.)

**कान्तिः**=कामना। 'प्रीङ् प्रीतौ प्रीयतेऽप्रीणात् प्रीणीते तर्पणे ञितः ॥ अणौ यौ ञित्त्वसाफल्यात् प्रीणयेत् प्रयते प्रयेत् ।' (श्लो. 19.20) इति **देवः** ।

प्रायकः-यिका, [1]प्रीणकः-णिका, पिप्रीषकः-षिका, पेप्रीयकः-यिका ; इत्यादीनि सर्वाण्यपि रूपाणि क्रैयादिक**क्रीणाति**वत् (274) ज्ञेयानि । [2]वत्सप्रीः ।

**(1073) "प्रीञ् तर्पणे"** (X-चुरादिः-1837. सक. सेट्. उभ.)

आधृषीयः ।

'—यौ ञित्त्वसाफल्यात् **प्रीणयेत्** प्रयते प्रयेत् ।' (श्लो. 20) इति **देवः** ।

[3]प्रीणकः-णिका, [4]प्रायकः-यिका, [5]पिप्रीणयिषकः-पिप्राययिषकः-षिका, [6]प्रायकः-यिका, [7]पिप्रीषकः-षिका, [8]पेप्रीयकः-यिका ;

प्रीणयिता-त्री, पिप्रीणयिषिता-त्री, प्रेता-त्री, पिप्रीषिता-त्री, पेप्रीयिता-त्री ;

प्रीणयन्-न्ती, पिप्रीणयिषन्-न्ती, [9]प्रयन्[A]-न्ती, पिप्रीषन्-न्ती ; —

---

1. 'धूञ्प्रीञोर्नुग् वक्तव्यः' (वा. 7-3-37) इति ण्यन्ते सर्वत्र नुगागमे णत्वे च **प्रीणकः, प्रीणयिता** इत्यादीनि सर्वाण्यपि रूपाणि भवन्तीति यथायथमूह्यानि ।
2. वत्सान् प्रीणातीति **वत्सप्रीः** । क्विपि रूपमेवम् । **काशिकायां** (6-4-148) रूपमेतदुदाहृतम् ।
3. 'धूञ्प्रीञोर्नुग् वक्तव्यः' (वा. 7-3-37) इति ण्यन्ते सर्वत्र नुगागमो भवति । एतच्चाविशेषेण ण्यन्ते सर्वत्रेति मतेन लिखितम् ।
4. 'धूञ्प्रीञोः—' (वा. 7-3-37) इति नुगागमः 'धूञ्' साहचर्येण क्रैयादिकस्य प्रीणातेर्णिचेवेति, **हरदत्तादि**मते तु नुगभावात् वृद्धौ, आयादेशे च रूपमेवम् । एवमेव तृजादिष्वपि **प्राययिता-त्री** इत्यादीनि रूपाणि यथायथमूह्यानि ।
5. चुरादिप्रीञोऽपि नुगागमवादिनां पक्षे ण्यन्तात् सनि रूपमेवम् । **हरदत्तादि**मते तु **पिप्राययिषकः** इत्यादीनि रूपाणीति च ज्ञेयम् ।
6. 'आधृषाद् वा' (ग. सू. चुरादौ) इति वचनेन णिचो वैकल्पिकत्वात्, णिजभावपक्षे शुद्धाद्रूपमेवम् ।
7. णिजभावपक्षे सनि, 'एकाच उपदेशे—' (7-2-10) इतीण्निषेधे, सनः कित्त्वे, दीर्घे च रूपम् । धातोरस्य चुरादिपठितस्य सेट्त्वेऽपि णिजभावपक्षे भ्वादिपाठेऽनिट्त्वं शास्त्रवशादिति ज्ञेयम् ।
8. णिजभावपक्षे शुद्धात् यङन्ते रूपमेवमिति ज्ञेयम् ।
9. णिजभावपक्षे शुद्धात्, 'शेषात् कर्तरि—' (1-3-78) इति शतैव ।

A. '…………स्वैरं तत्र जनान् **प्रयन्** विगलितग्रन्थान् कचान् ग्रन्थयन् ।' धा. का. 3. 51.



प्रीणयिष्यन्-पिप्रीणयिषिष्यन्-न्ती-ती, प्रेष्यन्-न्ती-ती, पिप्रीषिष्यन्-न्ती-ती ;

मित्रप्रीः-मित्रप्रियौ-मित्रप्रियः ; —

प्रीणितम्-तः, पिप्रीणयिषितः-तवान्, प्रीतम्-तः, पिप्रीषितः, पेप्रीयितः-तवान् ;

प्रीणः, पिप्रीणयिषुः, प्रियः, पिप्रीषुः, प्रेप्रियः ;

प्रीणयितव्यम्, पिप्रीणयिषितव्यम्, प्रेतव्यम्, पिप्रीषितव्यम्, प्रेप्रीयितव्यम् ;

प्रीणनीयम्, पिप्रीणयिषणीयम्, प्रयणीयम्, पिप्रीषणीयम्, पेप्रीयणीयम् ;

प्रीण्यम्, पिप्रीणयिष्यम्, प्रेयम्, पिप्रीष्यम्, पेप्रीय्यम् ;

ईषत्प्रीणः-दुष्प्रीणः-सुप्रीणः, ईषत्प्रयः-दुष्प्रयः-सुप्रयः ; — —

प्रीण्यमानः, पिप्रीणयिष्यमाणः, प्रीयमाणः, पिप्रीष्यमाणः, पेप्रीय्यमाणः ;

प्रीणः, पिप्रीणयिषः, [1]प्रयः, पिप्रीषः, पेप्रीयः ;

प्रीणयितुम्, पिप्रीणयिषितुम्, प्रेतुम्, पिप्रीषितुम्, पेप्रीयितुम् ;

प्रीणना, पिप्रीणयिषा, प्रीतिः, पिप्रीषा, पेप्रीया ;

प्रीणनम्, पिप्रीणयिषणम्, प्रयणम्, पिप्रीषणम्, पेप्रीयणम् ;

प्रीणयित्वा, पिप्रीणयिषित्वा, प्रीत्वा, पिप्रीषित्वा, पेप्रीयित्वा ;

विप्रीण्य, विपिप्रीणयिष्य, विप्रीय, विपिप्रीष्य, विपेप्रीय्य ;

प्रीणम् २, प्रीणयित्वा २, } पिप्रीणयिषम् २, पिप्रीणयिषित्वा २, } प्रायम् २, प्रीत्वा २, } पिप्रीषम् २, पिप्रीषित्वा २, } पेप्रीयम् २ ; पेप्रीयित्वा २. }

**(1074) "प्रुङ् गतौ"** (I-भ्वादिः-957. सक. अनि. आत्म.)

प्रावकः-विका, प्रावकः-विका, पुप्रूषकः-षिका, पोप्रूयकः-यिका, [2]पिप्रावयिषकः-पुप्रावयिषकः-षिका ;

प्रोता-त्री, प्रावयिता-त्री, पुप्रूषिता-त्री, पोप्रूयिता-त्री, पिप्रावयिषिता-पुप्रावयिषिता-त्री, इत्यादीनि सर्वाण्यपि रूपाणि **च्यवति**वत् (558) ज्ञेयानि ।

---

1. 'एरच्' (3-3-56) इति भावे घञपवादोऽच्प्रत्ययः । 'एरजण्यन्तानाम्' इति मतं तु भाष्यासम्मतत्वादप्रामाणिकम् । स्पष्टमिदं **कैयटे** (3-2-1) ।
2. 'स्रवतिशृणोतिद्रवतिप्रवति—' (7-4-81) इत्यनेन ण्यन्तात् सनि अवर्णपरे यणि च उवर्णान्तस्याभ्यासस्येकारादेशो वा भवति । इयमप्राप्तविभाषा। एवं ण्यन्तात् सनि सर्वत्र रूपद्वयं ज्ञेयम् ।

[1]कटप्रू:-कटप्रुवौ-कटप्रुवः, [2]प्रवकः, [3]प्रवणः, [4]प्रावयन्-प्रावयिष्यन्-न्ती-ती, इति इमानि रूपाणि अस्य धातोः भवन्तीति विशेषः ।

## (1075) " प्रुष स्नेहनसेवनपूरणेषु "

(IX-क्र्यादिः-1527. सक. सेट्. पर.)

'—सेचन.... ' इति **क्षीरस्वामि-पुरुषकार-कविकल्पद्रुम**सम्मतः पाठः । **मैत्रेय**स्तु '....मोचन ....' इति पपाठ। 'मोहनदाहनयोरप्याह **शङ्करः** । इति **धा. का. व्याख्या** (3-12)। अयं '**प्रूष**—' इति दीर्घोपध इति **बालमनोरमा** ।

'—स्नेहनादिषु। प्रुष्णाति च, प्रोषति च दाहे—॥' (श्लो. 172) इति **देवः** । प्रोषकः-षिका, प्रोषकः-षिका, पुप्रोषिषकः-पुप्रुषिषकः-षिका, पोप्रुषकः-षिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**पोषति**वत् (1026) ज्ञेयानि। [5]विप्रुट् । [6]प्रुष्णन्[A] ।

## (1076) " प्रुषु दाहे " (I-भ्वादिः-703. सक. सेट्. पर.)

'—स्नेहनादिषु। प्रुष्णाति च, प्रोषति च दाहे—॥' (श्लो. 172) इति **देवः**। प्रोषकः-षिका, प्रोषकः, पुप्रोषिषकः-पुप्रुषिषकः-षिका, पोप्रुषकः-षिका-इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**पोषति**वत् (1026) ज्ञेयानि । [7]प्रोषित्वा-प्रुष्ट्वा,

---

1. कटं प्रवते इति **कटप्रूः** = कामरूपी कीटश्च । 'क्विब्वचिप्रच्छ्यायतस्तु**कटप्रु**जु-श्रीणां दीर्घोऽसम्प्रसारणं च' (वा. 3-2-178) इत्यनेन सोपपदात् क्विपि प्रकृतेर्दीर्घः। द्विवचनादिषु उवङादेशः।
2. 'प्रुसृल्वः समभिहारे वुन्' (3-1-149) इति कर्तरि वुन्प्रत्ययः। अनादेशः। **समभिहारः** = साधुकारित्वम्।
3. '**चलनशब्दार्थादकर्मकाद्** युच्' (3-2-148) इति तच्छीलादिषु कर्तृषु युच् प्रत्ययः। णत्वम्। अकर्मकत्वं विवक्षाभेदेनेति ज्ञेयम्।
4. 'बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः' (1-3-86) इति कर्तृगामिन्यपि क्रियाफले ण्यन्तात् शतैव, न शानच्।
5. क्विपि षकारस्य जश्त्वेन डकारः। **विप्रुट्**=पामा।
6. शतरि क्रैयादिकत्वात् श्नाप्रत्यये, 'श्नाऽभ्यस्तयोः—'(6-4-112) इत्याकारलोपे णत्वे च रूपम्।
7. '**उदितो** वा' (7-2-56) इति क्त्वायामिड्विकल्पः। इट्पक्षे 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधात् **प्रोषित्वा** इति रूपम्।

A. '**प्रुष्णन्** सतां प्रियमयं प्लुषिताङ्गरागः......।' धा. का. 3. 12.



[1]प्रुष्टम्-प्रुष्टवान् इति रूपाण्यस्माद्भवन्तीति विशेषः ।

## (1077) " प्रेषृ गतौ " (I-भ्वादिः-619. सक. सेट्. आत्म.)

प्रेषकः-षिका, प्रेषकः-षिका, पिप्रेषिषकः-षिका, पेप्रेषकः-षिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**केपति**वत् (261) ज्ञेयानि ।

## (1078) " प्रैणृ गतिप्रेरणश्लेषणेषु " (I-भ्वादिः-458. सक. सेट्. पर.)

'पैणृ–' इति धातोः पाठभेदोऽयम्। सर्वाण्यपि रूपाणि भौवादिक**केपृ**धातुवत् (261) ज्ञेयानि। [A]प्रैणनम् ।

## (1079) " प्रोथृ पर्याप्तौ " (I-भ्वादिः-867. सक. सेट्. उभ.)

'प्रोथति=सूदति' इति 'प्रोथदश्वो न यवसे—' (तैत्ति. सं. 4.4.3.3) इति मन्त्रव्याख्यायां व्याख्यानात्, 'अपप्रोथ दुन्दुभे दुच्छुनाम्–' (तैत्तिरीय-संहिता 4.6.6.7) इत्यत्र, 'अपप्रोथ=मारय—' इति व्याख्यानाच्च **भट्टभास्कर**मते हिंसार्थकोऽयं धातुः इति **मा. धा. वृत्ति**दर्शनाज्ज्ञायते। "–पर्याप्तिगतौ' इत्यपि कचिदर्थनिर्देशः कृतः। 'अपप्रोथनम्=हुङ्करणम्।' इति **क्षुरे**।" इत्यपि **मा. धा. वृत्तिः**। 'शब्दार्थोऽपि। अपपूर्वस्तु मारणे हुङ्करणे वा' इति **धा. का. व्याख्याने** (2.25)। **भाष्यप्रदीपोद्योतात्** (1-4-56) नायं धातुरिति ज्ञायते ।

प्रोथकः-थिका, प्रोथकः-थिका, पुप्रोथिषकः-पुप्रुथिषकः-षिका, पोप्रुथकः-थिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**केपति**वत् (261) ज्ञेयानि। [2]प्रोथः= अश्वादीनां नासारज्जुः ।

## (1080) " प्लिह गतौ " (I-भ्वादिः-642. सक. सेट्. आत्म.)

प्लेहकः-हिका, प्लेहकः-हिका, पिप्लिहिषकः-पिप्लेहिषकः-षिका, पेप्लिहकः-हिका; इत्यादीनि सर्वाण्यपि रूपाणि दैवादिक**क्लिश्यति**वत् (287) ज्ञेयानि। [3]प्लीहा।

---

1. निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इति इण्निषेधः ।
2. 'हलश्च' (3-3-121) इति संज्ञायां करणे घञ्।
3. 'श्वन्नुक्षन्—' [द. उ. 6.55.] इत्यादिना कनिन्प्रत्ययान्तो निपातितः। **प्लीहा** = कुक्षिव्याधिः, अध्वगश्च ।

A. 'प्रश्चोणितान् **प्रैणन**बिभ्रणरिक्षतीन् अनुल्बणान् धेनुगणान् कनत्स्तनान् ॥' धा.का.1.59.

(1081) "प्ली गतौ" (IX-क्र्यादिः-1503. सक. अनि. पर.)

प्वादिः, ल्वादिश्च ।

'ल्वी—'इति क्षीरस्वामी पपाठ । '—वरणे' इति इति केचित् । मैत्रेयादयस्त्वमुं न पठन्ति । इति मा. धा. वृत्तावुक्तम् ।

प्लायकः-यिका, प्लायकः-यिका, पिप्लीषकः-षिका, पेप्लीयकः-यिका ;
प्लेता-त्री, प्लाययिता-त्री, पिप्लीषिता-त्री, पेप्लीयिता-त्री ;
[1]प्लिनन्-[A]न्ती, प्लाययन्-न्ती, पिप्लीषन्-न्ती ; —
प्लेष्यन्-न्ती-ती, प्लाययिष्यन्-न्ती-ती, पिप्लीषिष्यन्-न्ती-ती ; —
— प्लाययमानः, प्लाययिष्यमाणः, — पेप्लीयमानः, पेप्लीयिष्यमाणः ;
सुप्लीः-सुप्लियौ-सुप्लियः ; — —
[2]प्लीनम्-प्लीनः-प्लीनवान्, प्लायितः, पिप्लीषितः, पेप्लीयितः-तवान् ;
प्लयः, प्लायः, पिप्लीषुः, पेप्लियः ;
प्लेतव्यम्, प्लाययितव्यम्, पिप्लीषितव्यम्, पेप्लीयितव्यम् ;
प्लयनीयम्, प्लायनीयम्, पिप्लीषणीयम्, पेप्लीयनीयम् ;
प्लेयम्, प्लाय्यम्, पिप्लीष्यम्, पेप्लीय्यम् ;
ईषत्प्लयः-दुष्प्लयः-सुप्लयः ; — —
प्लीयमानः, प्लाय्यमानः, पिप्लीष्यमाणः, पेप्लीय्यमानः ;
प्लयः, प्लायः, पिप्लीषः, पेप्लीयः ;
प्लेतुम्, प्लाययितुम्, पिप्लीषितुम्, पेप्लीयितुम् ;
[3]प्लीनिः, प्लायना, पिप्लीषा, पेप्लीया ;
प्लयनम्, प्लायनम्, पिप्लीषणम्, पेप्लीयनम् ;

---

1. 'क्र्यादिभ्यः' (3-1-81) इति श्ना विकरणप्रत्ययः । 'श्नाऽभ्यस्तयोरातः' (6-4-112) इत्याकारलोपे 'प्वादीनां ह्रस्वः' (7-3-80) इति ह्रस्वे च रूपमेवम् ।
2. 'ल्वादिभ्यः' (8-2-44) इति निष्ठानत्वम् ।
3. 'ॠल्वादिभ्यः क्तिन् निष्ठावद्वाच्यः' (वा. 8-2-44) इति क्तिनस्तकारस्य नकारे रूपमेवम् ।

A. 'पार्श्वे लिनन् गजमचोदयदुन्मदान्धमक्लीनशक्तिमतिघोरजवं प्लिनन्तम् ॥' धा. का. 3.8.



प्लीत्वा, प्लाययित्वा, पिप्लीषित्वा, पेप्लीयित्वा ;
संप्लीय, संप्लाय्य, प्रपिप्लीष्य, प्रपेप्लीय्य ;
प्लायम् २, प्लीत्वा २, } प्लायम् २, प्लाययित्वा २, } पिप्लीषम् २, पिप्लीषित्वा २, } पेप्लीयम् २ ; पेप्लीयित्वा २. }

(1082) "प्लुङ् गतौ" (I-भ्वादिः-959. सक. अनि. आत्म.)

प्लावकः-विका, प्लावकः-विका, पुप्लूषकः-षिका, [1]पोप्लूयकः-यिका, [2]पुप्लावयिषकः-पिप्लावयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकच्यवतिवत् (558) बोध्यानि । [3]प्लवः-प्लवी, [4]आप्लावः-[A]आप्लवः, ण्यति-[5]आप्लाव्यः, [6]परिप्लूय इत्यादीनि रूपाणि अस्य धातोर्भवन्तीति विशेषः ।

(1083) "प्लुष दाहे" (IV-दिवादिः-1115.1216. सक. सेट्. पर).[अ]

'.......दाहकर्मणि ॥ प्लोषति प्लुष्यतीति स्तां, प्लुष्णाति स्नेहनादिषु ।' (श्लो. 171-172) इति देवः ।

प्लोषकः-षिका, प्लोषकः-षिका, पुप्लुषिषकः-पुप्लोषिषकः-पिका,

---

1. यङन्तात् द्वित्वे 'गुणो यङ्लुकोः' (7-4-82) इत्यभ्यासस्य गुणे 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घे च रूपमेवम् ।
2. ण्यन्तात् सनि 'सन्यङोः' (6-1-9) इति द्वित्वे वृद्ध्यावादेशयोः अवर्णपरयण्परकत्वादभ्यासघटितोकारस्य, 'स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा' (7-4-81) इति पाक्षिके इकारे रूपद्वयम् । एवं सर्वत्र ण्यन्तात् सनि प्रक्रिया ज्ञेया ।
3. पचादिषु (3-1-134) प्लवट् इति पाठात् टित्त्वान्ङीपि स्त्रियां प्लवी इति ज्ञेयम् ।
4. 'विभाषाऽऽङि रुप्लुवोः' (3-3-50) इति विभाषया घञ् भवति । घञभावे अप्प्रत्ययः । एवं रूपद्वयं बोध्यम् ।
5. 'भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा' (3-4-68) इति निपातनात् कर्तरि ण्यत्प्रत्ययः ।
6. ल्यपि 'युप्लुवोर्दीर्घश्छन्दसि' (6-4-58) इति छन्दसि विषये दीर्घः । लोके तु आप्लुत्य इत्येव ।

A. 'दूराप्लावं हनूमन्तं रामः प्रोचे गजाप्लवः ॥' भ. का. 7.47.

[अ] दिवादिष्वेव प्लुषधातुर्द्विवारं पठ्यते—पुषादावन्यत्र च । तत्र पुषादिपाठाद् अप्लुषत् इति अङ्सिद्धिः फलम् । अन्यत्र तु, अप्लोषीत् इति सिचस्सिद्धिः फलमिति विशेषः । कृदन्तेषु तु द्वयोस्तुल्यतेत्यतोऽस्माभिरेकदैवोभयोरुपादानमादृतम् ।

पोप्लुषकः-षिका ; प्लोषिता-त्री, प्लोषयिता-त्री, पुप्लुषिषिता-पुप्लोषिषिता-त्री, पोप्लुषिता-त्री ; इत्यादीनि सर्वाणि रूपाणि दैवादिककुष्यतिवत् (224) बोध्यानि । [A]प्लुष्यन् इति शतरि रूपम् ।

### (1084) " प्लुष स्नेहनसेवनपूरणेषु "

(IX-क्र्यादिः-1528. सक. सेट्. पर.)

'—मोहनदाहनयोरप्याह शङ्करः ।' इति धा. का. (3-12.)। 'सेचन—' इत्यपि कुत्रचिद् दृष्टः पाठः ।

'प्लोषति प्लुष्यतीति स्तां, प्लुष्णाति स्नेहनादिषु।' (श्लो. 172) इति देवः।

प्लोषकः-षिका, प्लोषकः-षिका, पुप्लोषिषकः-पुप्लुषिषकः, पोप्लुषकः-षिका ; प्लुष्णन्-ती इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकपोषतिवत् (1026) ज्ञेयानि। निष्ठायाम्-[B]प्लुषितम्-तः, इति एकमेव रूपमिति विशेषः ।

### (1085) " प्लुषु दाहे " (I-भ्वादिः-704. सक. सेट्. पर.)

'....................दाहकर्मणि ॥ प्लोषति, प्लुष्यतीति स्तां, प्लुष्णाति स्नेहनादिषु।' (श्लो. 171-172) इति देवः।

प्लोषकः-षिका, प्लोषकः-षिका, पुप्लोषिषकः-पुप्लुषिषकः-षिका, पोप्लुषकः-षिका ; [1]प्लुष्टः[C], इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकपोषतिवत् (1026) ज्ञेयानि ।

### (1086) " प्सा भक्षणे " (II-अदादिः-1055. सक. अनि. पर.)

प्सायकः-यिका, प्सापकः-पिका, पिप्सासकः-सिका, पाप्सायकः-यिका ; इत्यादीनि सर्वाण्यपि रूपाणि आदादिकदाप्-धातुवत् (833)

1. उदित्त्वेन क्त्वायामिड्विकल्पनात् निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्निषेधः। ष्टुत्वम् ।

A. 'तं प्लुष्यद् दृष्टिनृत्यग्रुषमपि च गतत्रासमुत्कुथ्यदङ्गं.........॥' धा. का. 2.56.

B. 'प्रुष्णन् सतां प्रियमयं प्लुषिताङ्गरागः
पुष्णन् मुदं मृगदृशां रिपुधाम मुष्णन् ।' धा. का. 3.12.

C. '......प्रोष्यान् प्लुष्टजनान् कृशामृतपृषद्वर्षी भवान् दानवान् ।' धा. का. 1.88.



ज्ञेयानि । [1]प्सापयन्-न्ती-ती, [इदमेषां] [2]प्सातम्, इत्यस्माद् धातोः भवन्तीति विशेषः । [A]प्साति:, [3]प्रणिप्साता, [4]द्रप्सः ।

### (1087) " फक्क नीचैर्गतौ " (I-भ्वादिः-116. सक. सेट्. पर.)

'नीचैर्गतिः=मन्दगमनम्, असद्व्यवहारो वा।' इति क्षीरस्वामी । 'अधोगमनम्।' इति केशवस्वामी । इति मा. धा. वृत्तिः ।

फक्ककः-क्किका, फक्ककः-क्किका, पिफक्किषकः-षिका, पाफक्ककः-क्किका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककक्कतिवत् (139) ज्ञेयानि । फक्कन्-न्ती, इति शतरि रूपम् ।

### (1088) " फण गतौ " (I-भ्वादिः-821. सक. सेट्. पर.) घटादिः ।

फाणकः-णिका, [5]फणकः-फाणकः-णिका, पिफणिषकः-षिका, पंफणकः-पम्फणकः-णिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककणतिवत् (157)

1. 'निगरणचलनार्थेभ्यः—' (1-3-87) इति ण्यन्तात् कर्तृगामिन्यपि क्रियाफले परस्मैपदमेव । तेन शानच् न ।

2. 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (3-4-76) इति अधिकरणे क्तप्रत्ययः । प्रत्यवसानार्थाः=भक्षणार्थकाः धातवः ।

3. 'नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्साति—' (8-4-17) इत्यादिना उपसर्गस्थान्निमित्तात् परस्य नेर्णत्वम् ।

4. द्रवणेन प्सानीयो द्रप्सः । 'घञर्थे कविधानम्—' (वा. 3-3-58) इति कप्रत्ययः । 'आतो लोप इटि च' (6-4-64) इत्याकारलोपः । पृषोदरादित्वात् (6-3-109) द्रवणशब्दस्य द्रादेशः ।

5. घटादित्वेन मित्त्वात् णौ, 'मितां ह्रस्वः' (6-4-92) इति उपधाह्रस्वे रूपमेवम् । 'फणेः पूर्वे घटादयः ।' इति मैत्रेय-क्षीरस्वाम्याद्युपात्तवचनानुसारेण फण-धातोर्घटादित्वं नेति ज्ञायते । तदानीं मित्त्वाभावात् फाणकः-णिका, इत्यादीन्येव रूपाणि । किञ्च, धातूनामनेकार्थकत्वात्, गत्यर्थकस्य फणधातोरेव घटादिषु पाठ इति ज्ञायते ; यतः 'अन्यत्र फाणयति=घटं निःस्नेहयतीत्यर्थः ।' इति क्षीरस्वामी बभाण । '......फण-ण् निःस्नेहने—।' इति कविकल्पद्रुम-(श्लो 176) वाक्यमप्यत्र निःस्नेहनार्थेऽस्य धातोः प्रयोगेऽनुकूलम् ।

A. 'स्नान्त्यस्तदा श्राणमुपाश्य चान्नं निद्रां गताः प्सातिपरास्तथाऽन्याः ।' धा. का. 2.49.

ज्ञेयानि । [1]फाण्टः[A], [2]फणितिः, [3]फेणिवान् - पेफणिवान्, [B]फणितः । इति इमानि रूपाणि अस्य धातोर्भवन्तीति विशेषः ।

**(1089) " फल निष्पत्तौ "** (I-भ्वादिः-530. अक. सेट्. पर.)

' **निष्पत्तिः**=सिद्धिः ।' इति **क्षीरस्वामी** ।

' फलेर्विशरणे फुल्लं फलितं **फलति** त्रयम् ॥
आदितो, ऽनादितस्त्वन्त्ये रूपे निष्पत्तिवाचिनः ।' (श्लो. 158-159)इति **देवः** ।

फालकः-लिका, फालकः-लिका, पिफलिषकः-षिका, पाफलकः-लिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कलति**वत् (174) ज्ञेयानि । फलितम्, [4]फलम्, [5]त्रिफला, [6]संफला-भस्त्रफला-अजिनफला-शणफला-पिण्डफला,

---

1. ' क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्ध**फाण्ट**बाढानि मन्थमनस्तमस्सक्ताविस्पष्टस्वरा**नायास**भृशेषु ' (7-2-18) इत्यनेनास्य धातोर्निष्ठायाम्, अनायाससाध्यकषायविशेषश्चेत् प्रकृतिप्रत्ययसमुदायेनोच्यते तदानीमिडभावो निपात्यते । 'अनुनासिकस्य क्विझलोः क्ङिति ' (6-4-15) इति दीर्घः । पश्चात्, ' ष्टुना ष्टुः' (8-4-41) इति ष्टुत्वेन निष्ठातकारस्य टकारः । अन्यत्र **फणित**मित्येव ।
' उष्णाम्बुन्यौषधं क्षुण्णं क्षिप्त्वा सद्योऽभिषुत्य च ।
पीयते यः कषायोऽसौ **फाण्टो**ऽनायाससाधितः॥' इति **प्र. सर्वस्वे** । **माधवस्तु** ' तद्वै नवनीतं घृतं देवानाम्, **फाण्टं** मनुष्याणाम्—' इति **शतपथ**श्रुतिव्याख्यायाम् (3-1-3-8) 'नवनीतं **फाण्ट**घृतयोरन्तरालवर्ति ' इत्याह । तेन नवनीतभावात् प्रागवस्थापन्नं द्रव्यं **फाण्टम्** इति लभ्यते । **धातुवृत्तौ** तु ' औषधस्य पञ्च कल्पनाः—रसः, कल्कः, शृतः, शीतः, क्वाथः । शीतो नाम क्षुण्णमौषधमुदके प्रक्षिप्य रात्रावधिवासितं यदुदकं प्रातः पीयते तत् । तदेवोष्णोदके प्रक्षिप्य सद्योऽभिषुत्य पूत्वा पीयते । स **फाण्ट** इति तद्विदः ।' इत्याह ।
2. क्तिनि, 'तितुत्रेष्वग्रहादीनाम्—' (वा. 7-2-9) इति वचनात् इडिति ज्ञेयम् । धातूनामनेकार्थकत्वाद् अत्र शब्दार्थकत्वमित्यपि ज्ञेयम् ।
3. कर्तरि लिटः क्वसौ, ' **फणां** च सप्तानाम् ' (6-4-125) इत्येत्वाभ्यासलोपविकल्पः । ' वस्वेकाजाद्घसाम् ' (7-2-67) इतीट् ।
4. फलतीति **फलम्** , कर्तरि पचादित्वादच् । लोकप्रयोगात् क्लीबत्वम् ।
5. अजादिषु (4-1-4) दर्शनात् स्त्रियां टाप् भवति । ङीषपवादः ।
6. ' पाककर्णपर्णपुष्प**फल**—' (4-1-64) इति प्राप्तं ङीषं बाधित्वा, ' संभस्त्राजिनशणपिण्डेभ्यः **फलात्** ' (ग. सू. 4-1-4) इति टाप् । **भस्त्रफला** इत्यत्र ' ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् ' (6-3-63) इति ह्रस्वः ।

A. ' अम्लिष्टनादा निरगुः **फाण्ट**चित्रास्त्रपाणयः ॥' भ. का. 9.17.
B. ' दुष्टानपस्वादयितुं प्रयाते कृष्णे विलेपुः **फणिता** विमोहम् ॥' धा. का. 2.19.



[1]फालः, [2]दासीफली इति रूपाण्यस्य भवन्तीति विशेषः ।

**(1090) " ञि फला विशरणे "** (I-भ्वादिः-516. अक. सेट्. पर.)

' **विशरणम्** = विकसनम् । ' इति **धा. का. व्याख्यायाम्** (1-66) ।

' फलेर्विशरणे फुल्लम्, फलितम्, फलति त्रयम् ॥
आदितो, ऽनादितस्त्वन्त्ये रूपे निष्पत्तिवाचिनः ।' (श्लो. 158-159) इति **देवः** ।

फालकः-लिका, फालकः-लिका, पिफलिषकः-षिका, [3]पम्फुलकः-पंफुलकः-लिका;
फलिता-त्री, फालयिता-त्री, पिफलिषिता-त्री, पम्फुलिता-त्री ;
फलन्-न्ती, फालयन्-न्ती, पिफलिषन्-न्ती ; —
फलिष्यन्-न्ती-ती, फालयिष्यन्-न्ती-ती, पिफलिषिष्यन्-न्ती-ती ; —
— फाल्यमानः, फालयिष्यमाणः, — पम्फुल्यमानः, पम्फुलिष्यमाणः ;
[4]फल्-फलौ-फलः ; — — —
[5]फुल्लः-[6]फुल्लवान्, [7]प्रफुल्तम्-प्रफुल्तः-प्रफुल्तवान्, [8]फलितम्-फलितवान्, [9]उत्फुल्लः-

---

1. ' हलश्च ' (3-3-121) इति संज्ञायां घञ् । फल्यते=निष्पाद्यतेऽनेन धान्यादिकमिति **फालः**=हलः ।
2. ' पाककर्णपर्णपुष्प**फल**मूल—' (4-1-64) इति जातिवाचिनः फलोत्तरपदादस्मात् स्त्रियां ङीष् ।
3. यङन्ताण्ण्वुलि द्वित्वादिके कृते, ' उत् परस्यातः' (7-4-88) इति उत्तरखण्डस्थाकारस्योकारे, परसवर्णविकल्पे च रूपद्वयम् । एवं यङन्ते सर्वत्र ज्ञेयम् ।
4. ' न पदान्ताः परेऽणः सन्ति ।' इति वचनं तु **भाष्यासम्मत**मिति, लकारान्तस्यास्य प्रयोग उपपन्नः ।
5. निष्ठायाम्, ' आदितश्च ' (7-2-16) इति इण्निषेधे, ' अनुपसर्गात् **फुल्ल**क्षीब—' (8-2-55) इत्यत्र निपातनात् निष्ठातकारस्य लकारः, प्रकृतिघटिताकारस्योत्वं च । यद्वा, लत्वस्यासिद्धत्वेन तकारादिप्रत्ययपरकत्वात्, ' ति च ' (7-4-89) इत्युत्वमिति ज्ञेयम् ।
6. ' क्तवतोरप्येतल्लत्वमिष्यते ।' इति **वृत्तिः** । तन्मते **फुल्लवान्** इत्यपि साधुः ।
7. अनुपसर्गादेव लत्वस्य निपातनात्, सोपसृष्टात् इण्निषेधे, उत्वे च रूपमेवम् । **प्रफुल्लम्** इति तु ' **फुल्ल विकसने** ' इत्यस्मात् पचाद्यचि ज्ञेयम् ।
8. ' विभाषा भावादिकर्मणोः' (7-2-17) इति भावे, आदिकर्मणि च या निष्ठा, तत्र विषये इण्निषेधस्य विकल्पनात् **फलितम्** इत्यपि साधुरिति ज्ञेयम् ।
9. '**उत्फुल्लसम्फुल्ल**योरुपसंख्यानम्' (वा. 8-2-55) इति वचनादत्रापि निष्ठातकारस्य लत्वमिति ज्ञेयम् । क्तवत्वन्तस्यापीदं लत्वमिति **वृत्तिकारे**ष्टेः तत्रापि लत्वम् ।

उत्फुल्लवान्, सम्फुल्लः-सम्फुल्लवान्, फालितः, पिफलिषितः, पम्फुलितः-तवान्;

फलम्, [1]फेलिवान्, फालः, पिफलिषुः, पम्फुलः;
फलितव्यम्, फालयितव्यम्, पिफलिषितव्यम्, पम्फुलितव्यम्;
प्रतिफलनीयम्, फालनीयम्, पिफलिषणीयम्, पम्फुलनीयम्;
फाल्यम्, फाल्यम्, पिफलिष्यम्, पम्फुल्यम्;
ईषत्फलः-दुष्फलः-सुफलः; — —
फल्यमानः, फाल्यमानः, पिफलिष्यमाणः, [2]पम्फुल्यमानः;
फालः, फालः, पिफलिषः, पम्फुलः;
फलितुम्, फालयितुम्, पिफलिषितुम्, पम्फुलितुम्;
[3]फुल्तिः, फालना, पिफलिषा, पम्फुला;
फलनम्, फालनम्, पिफलिषणम्, पम्फुलनम्;
फलित्वा, फालयित्वा, पिफलिषित्वा, पम्फुलित्वा;
प्रफल्य, प्रफाल्य, प्रपिफलिष्य, प्रपम्फुल्य;
फालम् २, फलित्वा २, } फालम् २, फालयित्वा २, } पिफलिषम् २, पिफलिषित्वा २, } पम्फुलम् २; पम्फुलित्वा २; }
[4]फल्गुः.

## (1091) "फुल सञ्चलने"

(VI-तुदादिः-1390. अक. सेट्. पर.) **कुटादिः।**

धातुरयं **सिद्धान्तकौमुद्यां** केवलमुपात्तः। **क्षीरतरङ्गिणी-धातुवृत्त्यादिषु** कुत्रापि नोपलभ्यते। 'स्फुल—' इत्यस्य पाठभेदोऽयमिति ज्ञेयम्।

फोलकः-लिका, फोलकः-लिका, पुफुलिषकः-षिका, पोफुलकः-लिका; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**कुटति**वत् (204) ज्ञेयानि।

1. कर्तरि, लिटः क्वसौ, '**तृफल**भजत्रपश्च' (6-4-122) इत्येत्वाभ्यासलोपे, 'वस्वेकाजाद्घसाम्' (7-2-67) इतीडागमे च रूपम्।
2. यङन्तात् यकि, 'हलो यमां यमि लोपः' (8-4-64) इति यङो यकारस्य विकल्पेन लोपः। लोपाभावपक्षे तु '**फम्फुल्य्यमानः**' इत्यपि साधुः। एवं यङन्तात् ल्यप्यपि ज्ञेयम्।
3. क्तिनि, इण्निषेधे, 'ति च' (7-4-89) इत्युत्वे रूपमेवम्।
4. '**फलि**पाटि–' (द. उ.1-103) इत्युप्रत्यये गुगागमे च रूपम्। **फल्गुः**=असारः।



## (1092) "फुल्ल विकसने" (I-भ्वादिः-532. अक. सेट्. पर.)

फुल्लकः-ल्लिका, फुल्लकः-ल्लिका, पुफुल्लिषकः-षिका, पोफुल्लकः-ल्लिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**चिल्लति**वत् (528) ज्ञेयानि। पचाद्यचि—[A]प्रफुल्लः।

## (1093) "फेलृ गतौ" (I-भ्वादिः-542. सक. सेट्. पर.)

फेलकः-लिका, फेलकः-लिका, [1]पिफेलिषकः-षिका, [2]पेफेलकः-लिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**केलति**वत् (262) ज्ञेयानि। [3]फेला, [B]फेलनम्।

## (1094) "बण शब्दार्थः" (I-भ्वादिः-459. अक. सेट्. पर.) [अ]

बाणकः-णिका, बाणकः-णिका, बिबणिषकः-षिका, बम्बणकः-णिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कणति**वत् (157) ज्ञेयानि। [4]उल्बणः[C]। [5]बाणः, [6]गीर्बाणाः।

1. सन्नन्ते द्वित्वे, अभ्यासे, 'ह्रस्वः' (7-4-59) इति ह्रस्वः; स च, 'एच इग्घ्रस्वादेशे' (1-1-48) इति शास्त्रात् एकारस्य इकाररूपः।
2. यङन्ताण्ण्वुलि, अभ्यासस्य ह्रस्वे इकारे, 'गुणो यङ्लुकोः' (7-4-82) इति इकारस्य गुणेन एकार इति ज्ञेयम्।
3. 'गुरोश्च हलः' (3-3-103) इति स्त्रियां भावादौ अकारप्रत्ययः। **फेला**=भुक्तसमुज्झितम्। '**पेला**' इति **धातुवृत्तौ** पाठः।
4. पचाद्यचि, पृषोदरादित्वात् उलूखलशब्दवत् 'उत्' इत्युपसर्गस्य लत्वे रूपमेवम्।
5. बणति=शब्दं करोत्यस्मिन् **बाणः**=ज्या। अधिकरणे 'हलश्च' (3-3-121) इति संज्ञायां घञ्।
6. गीरेव बाणः येषां ते **गीर्बाणाः**= देवाः, भूदेवाश्च।

[अ] धातुरयं **माधवधातुवृत्त्यादिषु** न दृश्यते। '**भ्रण—**' इत्यस्य पाठभेदोऽयम्, इति **सि. कौमुदी**। **क्षीरतरङ्गिण्यां** तु धातुरयमुपात्तः। परं तु तत्र **वण** इति मुद्रणाशुद्धिः। उत्तरत्र **बाण**शब्दस्यास्मादेव धातोर्निष्पादनात्।

A. 'अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः **प्रफुल्लम्**॥' रघु. 2.29.

B. 'फणीश्वरक्ष्वेलरुधं प्रवेल्लितस्रजं मुहुः पेलववात**फेलनात्**॥' धा. का. 1.69.

C 'प्रश्लोणितान् प्रैणनविभ्रणक्षितीननु**ल्बणान्** धेनुगणान् कनत्स्तनान्॥' धा. का, 1. 59.

(1095) **" बद स्थैर्ये "** (I-भ्वादि:-51. सक. सेट्. पर.)

बादकः-दिका, बादकः-दिका, बिबदिषकः-षिका, बाबदकः-दिका, [1]बदरम्-बदरी, [A]बदन्-न्ती, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक-**खदति**वत् (338) बोध्यानि ।

(1096) **" बध बन्धने "** (I-भ्वादि:-973. सक. सेट्. आत्म.)

'यत्तु **बीभत्सते** तत् स्याद् वैरूप्येऽर्थे बधेः सनि ॥' (श्लो. 120) इति **देवः** ।

[2]बीभत्सकः-त्सिका, [3]बीभत्सकः-त्सिका, [4]बीभत्सिषकः-षिका, [5]बाधकः-धिका;

बीभत्सिता-त्री, बीभत्सयिता-त्री, बीभत्सिषिता-त्री, बाधयिता-त्री ;

— बीभत्सयन्-न्ती, बीभत्सयिष्यन्-न्ती-ती ;

बीभत्समानः, बीभत्सयमानः, बीभत्सिषमाणः ;

बीभत्सिष्यमाणः, बीभत्सयिष्यमाणः, बीभत्सिषिष्यमाणः ;

[B]बीभत्सितम्-तः-तवान् , बीभत्सितः, बीभत्सिषितः-तवान् ;

बीभत्सुः, [6]बीभत्सनः, बीभत्सयिषुः, बीभत्सिषुः ;

बीभत्सितव्यम् , बीभत्सयितव्यम् , बीभत्सिषितव्यम् ;

---

1. बाहुलकादरन्प्रत्ययः । ' षिद्गौरादिभ्यश्च ' (4-1-41) इति गौरादिपाठात् स्त्रियां ङीष् ।
2. ' मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ' (3-1-6) इत्यत्र ' बधेर्वैरूप्ये ' इति वचनात् वैरूप्यार्थे स्वार्थे नित्यसनि, अभ्यासस्य इत्वे दीर्घे च, ' एकाचो बशो भष्— ' (8-2-37) इति भष्भावेन भकारे, धकारस्य चर्त्वे च रूपम् । एवं सर्वत्र प्रक्रिया ज्ञेया ।
3. स्वार्थसन्नन्तात् ण्यन्ते ण्वुलि, ' णेरनिटि ' (6-4-51) इति णिलोपे रूपमेवम् ।
4. स्वार्थसन्नन्तादिच्छासनि रूपमेवम् । असरूपप्रत्ययत्वात् इच्छासन्नन्तस्यापि प्रयोग इष्टः । तदुक्तं **भाष्ये** (3-1-7)' सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥ 'इति ।
5. ' अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति ।' (भाष्यम्. 3-1-7) इति वचनात् **बध** इत्यत्रोक्तस्यानुदात्तेत्त्वस्य स्वार्थसनोऽभावे अर्थान्तरे बन्धनादिरूपे चुरादित्वमिति, तत्पक्षे ण्यन्तात् क्रमेण रूपाणि यथायथमूह्यानि ।
6. **' अनुदात्तेतश्च हलादेः '** (3-2-149) इति ताच्छीलिको युच् ।

A 'पलान्यखाद्यानि खदन् **बदद्वपुः** गदन्नवाच्यानि रदन् सतां मनः ॥' धा. का. 1.8.

B. ' स खल्व**बीभत्सित**वृत्तिरर्चां तवारभेतापि कृपां लभेत ॥ ' धा. का. 2. 38.



बीभत्सनीयम् , बीभत्सनीयम् , बीभत्सिषणीयम् ;

बीभत्स्यम् , बीभत्स्यम् , बीभत्सिष्यम् ;

ईषद्बीभत्सः-दुर्बीभत्सः-सुबीभत्सः ; — —

बीभत्स्यमानः, बीभत्स्यमानः, बीभत्सिष्यमाणः ;

बीभत्सः, बीभत्सः, बीभत्सिषः ;

बीभत्सितुम् , बीभत्सयितुम् , बीभत्सिषितुम् ;

बीभत्सा, बीभत्सयिषा, बीभत्सिषा ;

बीभत्सनम् , बीभत्सनम् , बीभत्सिषणम् ;

बीभत्सित्वा, बीभत्सयित्वा , बीभत्सिषित्वा ;

प्रबीभत्स्य, प्रबीभत्स्य, प्रबीभत्सिष्य ;

बीभत्सम् २, बीभत्सित्वा २, } बीभत्सम २, बीभत्सयित्वा २, } बीभत्सिषम् २ ; बीभत्सिषित्वा २. }

(1097) **" बध संयमने "** (X-चुरादि:-1547. सक. सेट्. उभ.)

' **बन्धे—** ' इति **चन्द्रः** ।

' बध्नाति बन्धने बन्धेर्बाधयेदिति संयमे ।' (श्लो. 120) इति **देवः** ।

बाधकः-धिका, बिबाधयिषकः-षिका ; इत्यादीनि सर्वाणि रूपाणि चौरादिक-**चाटयति**वत् (488) बोध्यानि । [A]बाधयन्-न्ती ।

(1098) **" बन्ध बन्धने "** (IX-क्र्यादि:-1508. अक. अनि. पर.)

' **बध्नाति** बन्धने बन्धेर्बाधयेदिति संयमे ।' (श्लो. 120) इति **देवः** ।

बन्धकः-न्धिका, बन्धकः-न्धिका, [1]बिभन्त्सकः-त्सिका, [2]बाबधकः-धिका ;

[3]बन्द्धा-बन्द्ध्री, बन्धयिता-त्री, बिभन्त्सिता-त्री, बाबधिता-त्री ;

---

1. सन्नन्ताण्ण्वुलि, भष्भावचर्त्वादिकेषु रूपमेवम् । सर्वत्र सन्नन्तेषु एवमेव प्रक्रियेति ज्ञेयम् ।
2. यङन्ते सर्वत्र यङ्निमित्तके नकारलोपे, अभ्यासदीर्घे च रूपनिष्पत्तिरिति ज्ञेयम् ।
3. तृचि, ' झषस्तथोः— ' (8-2-40) इति धत्वम् । ' झलां जश् झशि ' (8-4-53) इति धातुधकारस्य दकारः । तस्य, ' झरो झरि— ' (8-4-65) इति पाक्षिको लोपः । एवं तव्यदादिष्वपि प्रक्रिया ज्ञेया ।

A. ' स्वर्गं प्रियंभविष्णुश्च कृत्स्नं शक्तोऽप्य**बाधयन्** ॥ ' भ. का. 6. 116.

[1]बध्नन्-ती, [2]बन्धयन्-न्ती, बिभन्त्सन्-न्ती ; —

[3]भन्त्स्यन्-न्ती-ती, बन्धयिषयन्-न्ती-ती, बिभन्त्सिष्यन्-न्ती-ती ; —

— बन्धयमानः, बन्धयिष्यमाणः, — बाबध्यमानः, बाबधिष्यमाणः ;

[4]भत्-भध्-बधौ-बधः ; — — —

बद्धः-बद्धम्-बद्धवान्, [5]चक्रबद्धः-दृषद्बद्धः, बन्धितः, बिभन्त्सितः, बाबधितः-तवान् ;

बन्धः, [6]सुतानुबन्धः,[A] बन्धः, बिभन्त्सुः, बाबन्धः ;

बन्द्धव्यम्, बन्धयितव्यम्, बिभन्त्सितव्यम्, बाबधितव्यम् ;

बन्धनीयम् बन्धनीयम्, बिभन्त्सनीयम्, बाबधनीयम्,

बन्ध्यम्, बन्ध्यम्, बिभन्त्स्यम्, बाबध्यम् ;

ईषद्बन्धः-दुर्बन्धः-सुबन्धः ; — —

बध्यमानः, बन्ध्यमानः, बिभन्त्स्यमानः, बाबध्यमानः ;

बन्धः, [7]पर्यङ्कबन्धः, चक्रबन्धः, दृषद्बन्धः, [8]अनूबन्धः, बन्धः, बिभन्त्सः, बाबधः ;

बन्द्धुम्, बन्धयितुम्, बिभन्त्सितुम्, बाबधितुम् ;

---

1. शतरि, क्र्यादित्वात् श्नाप्रत्यये, 'अनिदिताम्—' (6-4-24) इति धातुनकारलोपे, 'श्नाऽभ्यस्तयोः—' (6-4-112) इत्याकारलोपे च रूपमेवम्।
2. चित्तवत्कर्तृकत्वविवक्षायाम् ण्यन्तेऽत्र परस्मैपदमेव। अचित्तवत्कर्तृकत्वविवक्षायां तु आत्मनेपदमपि भवतीति ज्ञेयम्।
3. स्यप्रत्ययेऽपि भष्भावचर्त्वादिकं यथायथमूह्यम्।
4. क्विपि, उपधानकारलोपे, भष्भावचर्त्वविकल्पयो रूपम्।
5. क्तप्रत्ययान्तात्, 'सप्तमी—' ( 2-3-36) इति योगविभागात् समासः।
6. सुतमनुबध्नातीति **सुतानुबन्धः**। 'कर्मण्यण्' (3-2-1) इत्यण्।
7. पर्यङ्के बन्धः **पर्यङ्कबन्धः**। 'सिद्धशुष्कपक्वबन्धैश्च' (2-1-41) इति सप्तमीतत्पुरुषः। 'तत्पुरुषे कृति—' (6-3-14) इति प्राप्तस्यालुकः 'नेन्सिद्ध**बद्ध्नाति**षु च' (6-3-19) इति निषेधः।
8. अनु बध्यते इत्य**नूबन्धः**= प्रत्ययगतः कित्त्वङित्त्वादिर्विशेषः। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (6-3-122) इति दीर्घः।

A. 'ज्ञाताशयस्तस्य ततो व्यतानीत् स कर्मठः कर्म **सुतानुबन्धम्**॥' भ. का. 1.11. (अत्र कर्मण्यणि **सुतानुबन्धम्** इति नपुंसकलिङ्गश्रवणासम्भवात् **व्याख्यातृभिः** **सुतानुबन्धि** इति पाठमाश्रित्य, तस्य च सुतमनुबन्धुं शीलमस्येति व्युत्पत्त्या ताच्छील्येऽर्थे णिनिप्रत्ययान्तत्वमिति समर्थितम्। तदेव च साध्विति प्रतिभाति।



[1]बन्धा, बद्धिः, बन्धना, बिभन्त्सा, बाबधा ;

बन्धनम्, बन्धनम्, बिभन्त्सनम्, बाबधनम् ;

बद्ध्वा, बन्धयित्वा, बिभन्त्सित्वा, बाबधित्वा ;

अनुबध्य, प्रबन्ध्य, प्रबिभन्त्स्य, प्रबाबध्य ;

[2]चक्रबन्धं बद्धः, [3]अट्टालिकाबन्धं बद्धः ;

बन्धम् २, बद्ध्वा २, } बन्धम् २, बन्धयित्वा २, } बिभन्त्सम् २, बिभन्त्सित्वा २, } बाबधम् २ ; बाबधित्वा २; }

[4]बन्धुः, [5]बधिरः, [6]ब्रध्नः-बुध्नः, [7]बन्धुरः, [8]बन्धूकः।

## (1099) "बर्ब गतौ" (I-भ्वादिः-418. सक. सेट्. पर.)

'अयं बन्ब इति नोपधः। इति **कौशिकः**।' इति **मा. धा. वृत्तिः**।

बर्बकः-र्बिका, बर्बकः-र्बिका, बिबर्बिषकः-षिका, बाबर्बकः-र्बिका ;

इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कर्बति**वत् (173) ज्ञेयानि।

[9]बर्बरः-बर्बरी, [A]प्रबर्व्य।

---

1. धातोः संयोगान्तत्वेन गुरुत्वात्, 'गुरोश्च हलः' (3-3-103) इत्यकारप्रत्यये रूपमेवम्। क्तिनि विवक्षिते तु कित्त्वेनोपधानकारलोपे **बद्धिः** इत्यपि साधुरिति ज्ञेयम्।
2. 'अधिकरणे **बन्धः**' (3-4-41) इति णमुल्। चक्रे बद्ध इत्यर्थः। कषादित्वात् यथाविध्यनुप्रयोगः।
3. 'संज्ञायाम्' (3-4-42) इति णमुल्। **अट्टालिकाबन्ध** इति बन्धविशेषस्य संज्ञा। एवं **क्रौञ्चबन्धं बद्धः**, **पद्मबन्धं बद्धः**, **शरबन्धं बद्धः**, इत्यादिषु सर्वत्र णमुलुपपत्तिर्ज्ञेया। अत्र सर्वत्र **बन्धः** इत्यनेन व्यूहविशेषस्य, काव्यगतस्य बन्धविशेषस्य च तन्त्रेण ग्रहणमिति ज्ञेयम्।
4. औणादिके [द. उ. 1.95] उप्रत्यये रूपमेवम्।
5. औणादिके [द. उ. 8.26] किरच्प्रत्यये, प्रत्ययस्य कित्त्वेनोपधानकारलोपे च रूपमेवम्। बद्धमस्य श्रवणेन्द्रियमिति **बधिरः**=श्रोत्रेन्द्रियहीनः।
6. '**बन्धेर्ब्रधिबुधि च**' (द. उ. 5-38) इति नक्प्रत्यये **ब्रधि-बुधि**-इत्यादेशयोश्च रूपे सिद्ध्यतः। कित्त्वादुपधानकारलोपः। **ब्रध्नः**=सूर्यः। **बुध्नः**=सङ्कल्पो मनः, देवो वा।
7. बाहुलकादौणादिके उरच्प्रत्यये रूपम्। '**बन्धूर बन्धुरौ** स्यातां नम्रसुन्दरयोस्त्रिषु।' इति **रन्तिदेव**वचनाद् दीर्घमध्यमोऽप्यस्तीति विज्ञायते।
8. औणादिके (द.उ. 3-46) ऊकप्रत्यये रूपम्। **बन्धूकम्**=पुष्पविशेषः। [**बर्बरी** इति।
9. बाहुलकादौणादिकेऽरप्रत्यये रूपम्। **बर्बरः**= शिथिलः, प्राणिविशेषश्च। स्त्रियां ङीषि

A. '**प्रबर्व्य** शैलानुपमर्व्य पद्मिनीं प्रकर्व्य चाशाः श्रमशोणितैरिव॥' धा. का. 1.54.

(1100) "**बर्ह प्राधान्ये**" (I-भ्वादिः-638. सक. सेट्. आत्म.)

बर्हकः-र्हिका, बर्हकः-र्हिका, बिबर्हिषकः-षिका, बाबर्हकः-र्हिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**गर्हति**वत् (385) ज्ञेयानि। [1]बर्हः, [2]बर्हिणः, [3]बर्हकः इमानि रूपाण्यधिकान्यत्रेति विशेषः।

(1101) "**बर्ह हिंसायाम्**" (X-चुरादिः-1665. सक. सेट्. उभ.)

बर्हकः-र्हिका, बिबर्हयिषकः-षिका, बर्हयिता-त्री, बिबर्हयिषिता-त्री; इत्यादीनि सर्वाणि रूपाणि चौरादिक**गर्जयति**वत् (378) बोध्यानि। क्विपि [4]बट्-बड्-बर्हौ-बर्हः; [A]अनिबर्हणीयम्।

(1102) "**बर्ह भाषार्थः**" (X-चुरादिः-1770. सक. सेट्. उभ.)

**आस्वदीयः।**

'वृद्धौ भाषार्थविषये बृंहयेद् बर्हयेदिति ॥' (श्लो. 198) इति **देवः**।

बर्हकः-र्हिका, बिबर्हयिषकः-षिका, बर्हयिता-त्री, बिबर्हयिषिता-त्री; इत्यादीनि सर्वाणि रूपाणि चौरादिक**ग्रासयति**वत् (439) बोध्यानि।

(1103) "**बल प्राणने धान्यावरोधने च**"

(I-भ्वादिः-840. सक. सेट्. पर.) **ज्वलादिः**।

**प्राणनम्**=जीवनम्। **धान्यावरोधनम्**=कुसूलादिव्यापारः। प्राणनेऽकर्मकः, धान्यावरोधने सकर्मकः।

बालकः-लिका, बालकः-लिका, बिबलिषकः-षिका, बाबलकः-लिका;

---

1. बर्हते=प्राधान्येन सर्वेष्ववयवेषु वर्तते इति **बर्हः**=मयूरादीनां शिखण्डकः। पचाद्यचि रूपमेवम्।
2. 'फल**बर्हा**भ्यामिनच् वक्तव्यः' (वा. 5-2-122) इति मत्वर्थीय **इनच्**प्रत्ययः। **बर्हिणः**=मयूरः।
3. आशिषि गम्यमानायाम् 'आशिषि च' (3-1-150) इति वुन्। बर्हताम् इत्याशिषि गम्यमानायामयं प्रत्ययो भवतीति ज्ञेयम्।
4. 'रात् सस्य' (8-2-24) इति नियमात् हकारस्य संयोगान्तलोपो न। हकारस्य पदान्तनिमित्तके ढत्वे, चर्त्वविकल्पे च रूपमेवम्।

A. 'अम्लेच्छलोकसहिते सदसीह तस्मात्
को भ्रूसयिष्यति शिशून**निबर्हणीयम्**॥' धा. का. 3. 30.



इत्यादीनि सर्वाण्यपि रूपाणि तद्धातूपात्तविशेषरूपाणि विना भौवादिक**कलति**वत् (174) ज्ञेयानि। [1]बालः-बलः, [2]बाला, [3]बाहुबली-ऊरुबली, सर्वबली, [4]बलिः, [5]बलवान्-बली, [6]बलूलः, इमानि रूपाण्यधिकान्यत्रेति विशेषः।

(1104) "**बल प्राणने**" (X-चुरादिः-1629. सक. सेट्. उभ.) **ज्ञपादिः**।

बलकः-लिका, बिबलयिषकः-षिका; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चहयति**वत् (515) ज्ञेयानि। [A]बलयन्-न्ती।

(1105) "**बल्ह प्राधान्ये**" (I-भ्वादिः-639. अक. सेट्. आत्म.)

बल्हकः-ल्हिका, बल्हकः-ल्हिका, बिबल्हिषकः-षिका, बाबल्हकः-ल्हिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**गर्हति**वत् (385) ज्ञेयानि। [B]प्रबल्हः, [7]बाह्लीकः।

(1106) "**बल्ह भाषार्थः**" (X-चुरादिः-1771. सक. सेट्. उभ.)

**आस्वदीयः।**

बल्हकः-ल्हिका, बिबल्हयिषकः-षिका; इत्यादीनि सर्वाण्यपि रूपाणि

---

1. '**ज्वलितिकसन्तेभ्यो णः**' (3-1-140) इति कर्तरि वा णप्रत्ययः। तदभावपक्षे पचाद्यचि **बलः** इति रूपम्।
2. **बालशब्दस्याजादिषु** (4-1-4) पाठात् 'वयसि प्रथमे' (4-1-20) इति ङीष् न, टाबेव भवति।
3. '**बलाद्** बाहूरुपूर्वपदात्, सर्वादेश्च' (वा. 5-2-135) इति वचनात् मत्वर्थीय इनिप्रत्यये रूपाण्येतानि साधूनि।
4. 'इन्' [द. उ. 1-46] इतीन्प्रत्यये रूपम्।
5 मत्वर्थीये इनिप्रत्यये, मतुपि मतोर्वकारे च एते रूपे भवतः।
6. 'वातदन्त**बल**ललाटानामूङ् च' (ग. सू. 5-2-97) इति सिध्मादिषु पाठात् मत्वर्थीये लच्प्रत्यये ऊङागमे च रूपमेवम्।
7. 'ईकक् च' (वा. 4-1-85) इत्यनेन बह्लिस्-बह्लिशब्दाभ्यामीकक्प्रत्यये टिलोपे च **बाह्लीकः** इति रूपसिद्धिः। वेदबाह्यदेशजात इत्यर्थः। '**गोर्वाह्लीकः**' इत्यादिषु **बाह्लीकः** इत्येव ओष्ठ्यादिः प्रयोगः साधुः, न तु दन्त्योष्ठ्यादिरिति बोध्यम्।

A. 'युध्यस्व भीतिरहितो **बलयन्** खलु त्वं
कीर्तिं चयस्व चपयापि नृपप्रसादम् ॥' धा. का. 3.25.

B. '**बर्हप्रबल्ह**समलङ्कृतिरालिलिङ्ग
प्रोत्थाप्य वर्हकनिवल्हहुतं तमीशः।' धा. का. 1.81.

चौरादिकग्रासयतिवत् (439) ज्ञेयानि । [A]अबल्ह्यः ।

(1107) “**बष्क दर्शने**” (X-चुरादिः-1916. सक. सेट्. उभ.) [अ]

बष्ककः-ष्किका, बिबष्कयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**गन्धयति**वत् (375) ज्ञेयानि । [B]बष्कयन्, [1]बष्कयणी ।

(1108) “**बस्त अर्दने**” (X-चुरादिः-1683. सक. सेट्. आत्म.)

**आकुस्मीयः ।**

‘बस्तु—’ इति **मैत्रेयः** । तस्य मते उदित्त्वाण्णिचो वैकल्पिकत्वम् । ‘वस्त—’ इति **केचिद्** दन्तोष्ठ्यादिं पठन्ति ।

बस्तकः-स्तिका, बिबस्तयिषकः-षिका, बस्तयिता-त्री, बिबस्तयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**गन्धयति**वत् (375) ज्ञेयानि । णिचो वैकल्पिकत्वात् पक्षे शुद्धात्, शुद्धप्रकृतिकसन्नन्तात्, यङन्ताच्च इमानि रूपाणीति विशेषः । यथा—बस्तकः-स्तिका, बिबस्तिषकः-**षिका**, बाबस्तकः-स्तिका ; इति यथायथमूह्यानि । [C]बिबस्तयिषुः, [2]बस्तिः ।

(1109) “**बहि वृद्धौ**” (I-भ्वादिः-633. अक. सेट्. आत्म.) [आ]

---

1. बाहुलकात् औणादिकेऽयप्रत्यये **बष्कयः** = तरुणवत्सः । सोऽस्य अस्तीति पामादित्वात् (5-2-100) नप्रत्यये णत्वे ङीषि च **बष्कयणी**=चिरप्रसूता गौः ।
2. ‘इक् कृष्यादिभ्यः’ (वा. 3-3-108) इति णिजभावपक्षे इक्प्रत्यये रूपम् । **बस्तिः**=मूत्रकोशः ।

A. ‘नाहं बर्हयितास्म्य**बल्ह्य**मपि भोः सर्वैरिदं गोप्यते........॥’ धा. का. 3.44.

B. ‘लोके **बष्कयतीह** चित्रितमहामञ्चे स्वयं चित्रयन्
दोष्णा खड्गमुदस्य तस्य वटयन् हस्तादगृह्णादमुम् ।’ धा. का. 3. 61.

C. ‘प्रस्पाश्य मुष्टिमभितर्जयते प्रमत्स्यो
मल्लो **बिबस्तयिषु**रेनमगन्धनीयम् ।’ धा. का. 3.34.

[अ] ‘कर्तृकरणाद् धात्वर्थे (ग. सू. चुरादिः) इत्यत्र तद्गणसूत्रनिदर्शनार्थमुपात्तेषु धातुष्वयमेकः । क्वचित् ‘बल्क दर्शने’ इत्युपात्तम् । ‘पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्**बष्कयणी**प्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः’ (2-1-65) इत्यत्र **बष्कयणी**शब्दस्योपादानात्, **माधव-धातुकाव्यकार**प्रभृतिभिरुपादानाच्चास्माभिः बष्क इति पाठमादृत्यैवमत्र लिखितम् ।

[आ] **क्षीरस्वामी** चुरादिषु (आस्वदीयेषु) भाषार्थकदण्डकेऽपि **बहि**धातुं पठित्वा **बंहयती**त्युदाहृतवान् । **अन्ये** केऽपि नामुं धातुं पठन्ति । अनतिप्रयोजनकत्वात् बहुत्र तस्यानुपलम्भात् **बहि**धातोः **बहि** इति मुद्रणसम्भवाच्चास्माभिरयं परित्यक्तः ।



बंहकः-हिका, बंहकः-हिका, बिबंहिषकः-षिका, बाबंहकः-हिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कण्ठति**वत् (149) ज्ञेयानि [1]बहु । **शानचि**-बंहमानः इति रूपमस्येति ज्ञेयम् ।

(1110) “**बाडृ आप्लाव्ये**” (I-भ्वादिः-286. सक. सेट्. आत्म.)

**आप्लाव्यम्**=वेगेनोत्क्षिप्य गमनम् । ओष्ठ्यादिरयं धातुः । **औत्तराः** सर्वेऽपि ग्रन्थकाराः वबयोः प्रयोगं बहुधा विपर्यस्य कुर्वन्ति ।

बाडकः-डिका, बाडकः-डिका, बिबाडिषकः-षिका, बाबाडकः-डिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**गाधति**वत् (394) ज्ञेयानि । [A]बाडितम्, [2]बाडः ।

(1111) “**बाधृ लोडने**” (I-भ्वादिः-5. सक. सेट्. आत्म.)

‘—**रोटने** । **रोटनम्**=प्रतिघातः ।’ इति **क्षीरस्वामी** । **लोडनम्**=हिंसनमिति यावत् ।

बाधकः-धिका, बाधकः-धिका, बिबाधिषकः-षिका, बाबाधकः-धिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**गाधति**वत् (394) ज्ञेयानि । [3]कार्यबाधी[B] ।

(1112) “**बाहृ प्रयत्ने**” (I-भ्वादिः-645. अक. सेट्. आत्म.)

बाहकः-हिका, बाहकः-हिका, बिबाहिषकः-षिका, बाबाहकः-हिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**द्राखति**वत् (879) ज्ञेयानि । [4]बाहः-[C]बाहा, [5]बाढम्[D]-बाहितम्, [6]बाहुः ।

---

1. ‘लङ्घिबंह्योर्नलोपश्च’ (द. उ. 1-114) इति कुप्रत्यये नकारलोपे च **बहु** इति रूपम् ।
2. बाडते=वेगेनोत्क्षिप्य गच्छतीति **बाडः**= अश्वः । पचाद्यचि रूपम् ।
3. ‘सुप्यजातौ णिनिस्ताच्छील्ये’ (3-2-78) इति णिनिप्रत्ययः ।
4. पचाद्यचि, रूपमेवम् । स्त्रियामजादिपाठात् टाप् ।
5. ‘क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्ट**बाढानि** मन्थमनस्तमस्सक्ताविस्पष्टस्वरानायास**भृशेषु**’ (7-2-18) इत्यनेनास्माद् धातोर्निष्ठायां भृशार्थे इडभावनिपातनात्, धातुहकारस्य ढत्वे धत्व-ष्टुत्व-ढलोप-दीर्घेषु च **बाढम्** इति रूपम् । अन्यत्र **बाहितम्** इत्येव ।
6. बाहते=प्रयतते इति **बाहुः**=करः । औणादिके उप्रत्यये रूपमेवम् ।

A. ‘अहोडनीयान् पशुपालयानसौ अपश्यदानन्दपयोधि**बाडितः** ।’ धा. का. 1.38.

B. ‘स गान्दिनीभूरथ गोकुलैधितं स्पर्धालुधीगाधित**कार्यबाधिनम्** ।’ धा.का. 1.2.

C. ‘प्लीहायितासुरभरक्षतिवेहितोर्वीभैषज्यजेहपरया निज**बाहयैव** ॥’ धा. का. 1.81.

D. ‘प्रमेदिताः सपुत्रास्ते सुस्वान्ता **बाढ**विक्रमाः ।’ भ. का. 9.17.

(1113) **“ बिट आक्रोशे ”** (I-भ्वादिः-317. अक. सेट्. पर.)

‘ विट—’ इति **क्षीरस्वामी** पपाठ । ‘ बिड —’ इति **नन्दी** । ‘ पिट—’ इति **मल्लः** ।

[A]बेटकः-टिका, बेटकः-टिका, बिबेटिषकः-बिबिटिषकः-षिका, बेबिटकः-टिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**किटति**वत् (190) ज्ञेयानि । [1]बिडालः ।

(1114) **“ बिदि अवयवे ”** (I-भ्वादिः-64. अक. सेट्. पर.)

‘ अवयवे=एकदेशगतक्रियायाम् ।’ इति **क्षीरस्वामी** । ‘ भिदि— ’ इति **सम्मताकारः** ।

बिन्दकः-न्दिका, बिन्दकः-न्दिका, बिबिन्दिषकः-षिका, बेबिन्दकः-न्दिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कन्दति**वत् (163) ज्ञेयानि । [2]बिन्दुः[B] ।

(1115) **“ बिल भेदने ”** (VI-तुदादिः-1359. सक. सेट्. पर.) [अ]

बेललः--लिका, बेलकः-लिका, बिबेलिषकः-बिबिलिषकः-षिका, बेबिलकः-

---

1. ‘ तमि**बिडि**—’ [द. उ. 8.115.] इत्यादिना कालच्प्रत्यये पृषोदरादित्वात् टकारस्य डकारे च रूपमेवम्। **दशपाद्युणादिवृत्ता**वत्र ‘ **विड** —’ इति सौत्रो धातुर्ण्यन्तः ।’ इति प्रोक्तम् । तच्चिन्त्यम् । तादृशस्य धातोः सूत्रेष्वनुपलम्भात् । दन्त्यौष्ठ्यादिं बशन्तं च येऽपि पठन्ति, तेषामपि वबयोरभेदोच्चारणमेव निदानमिति ज्ञेयम् ।

2. बाहुलकादौणादिके उप्रत्यये रूपम् । **मैत्रेय**स्तु ‘ बिन्दुरिच्छुः’ (3-2-169) इति सूत्रे निपातनादुकारप्रत्ययान्तत्वं मेने । तदप्रामाणिकम् । यतः, **काशिकादिषु** “ वेत्तेर्नुमि उप्रत्यये निपातनम् **विन्दुः** वेदनशीलः ” इत्युक्तत्वात् । एतेन, ‘ यद्यभिधानमस्ति—**भिन्दु**रिति दृश्यते ।’ इति **भिदि**धातुमत्रावयवार्थे पठन्, तस्योप्रत्ययान्ते **भिन्दु**रिति साधयंश्च **सम्मताकारो**ऽपि प्रतिबोधित इति ज्ञेयम् ।

A. ‘ चेटैर्विटैश्चानुगतान**बेटकै**रेटत्पशूत्केटिरजः कटन् मलान् ।’ धा. का. 1.42.

B. ‘ श्रुतान्दुकैश्चित्तगजेन्द्ररोधिनस्तुष्यन्तु सन्तो गुण**बिन्दु**लोलुपाः ॥’ धा. का. 1.9.

[अ] ‘ **बेलति** इति शपि, अयं चुरादौ च ।’ इति **मा. धा. वृत्तौ आत्रेय**वाक्योपादानात् भ्वादिष्वपि कश्चन **बिल**धातुरस्तीति ज्ञायते । **क्षीरस्वामि**-प्रभृतिभिरनुपादानादस्माभिर्न लिखितः ।



लिका ; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**किलति**वत् (193) ज्ञेयानि । [1]बिलम्, [2]बिल्वम्, [3]बिल्मम् ।

(1116) **“ बिल भेदने** (X-चुरादिः-1606. सक. सेट्. उभ.)

“ **भिल** —’ इति **कौशिकः** । भेलयति, भेलः, भिल्मम् । ” इति **क्षीरस्वामी** । ‘ बिल्मं **भिल्मं** भासनमिति वा ।’ इति **निरुक्ते** (1-20) प्रयोगोपलम्भात् ‘ भिल–’ इत्येतस्यापि धातुपाठेषु पाठ उन्नीयते, इति **युधिष्ठिरमीमांसक**-मतम् ।

बेलकः-लिका, बिबेलयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चेतयति**वत् (522) ज्ञेयानि । बेलयन्-न्ती, बेलयिष्यन्-न्ती-ती, इति शतरि रूपाणीति विशेषः ।

(1117) **“ बिस प्रेरणे ”** (IV-दिवादिः-1217. अक. अनि. पर.)

‘ विस—’ इति कुत्रचिद् दृष्टः पाठोऽप्रामाणिकः ।

बेसकः-सिका, बेसकः-सिका, बिबेसिषकः-बिबिसिषकः-षिका, बेबिसकः-सिका ; इत्यादीनि सर्वाण्यपि रूपाणि दैवादिक**कुस्यति**वत् (234) ज्ञेयानि । [4]बिस्तः, बिसम् । [A]बिसितम् ।

(1118) **“ बुक्क भषणे ”** (I-भ्वादिः-119. अक. सेट्. पर.)

**भषणम्**=श्वरवः । **क्षीरस्वामी** तु ‘ —भाषणे ’ इति पठित्वा, ‘ भषणे इत्येके ।’ इत्याह । ‘—आभाषणे ।’ इति **शाकटायनः** ।

‘ णिचि बुक्कयतीति स्यात् , **भाषणे शपि बुक्कति** ।’ (श्लो. 42) इति **देवः** । अत्र **देव**मतेऽपि भाषणमेवार्थ इति ज्ञायते ।

---

1. ‘ इगुपधज्ञा—’ (3-1-135) इति कर्तरि कप्रत्यये रूपमेवम् ।
2. बाहुलकात् औणादिके वक्प्रत्यये रूपमेवम् । प्रत्ययस्य कित्त्वान्न गुणः ।
3. बाहुलकात् औणादिके मक्प्रत्यये रूपमेवम् ।
4. औणादिके (द. उ. 6-7) तन्प्रत्यये, ‘ तितुत्रतथ—’ (7-2-9) इत्यादिना इण्निषेधे च रूपमेवम् । **केचित्तु** धातोरस्य सेट्त्वेऽपि, ‘ अपरिमाण**बिस्ता**चित—’ (4-1-22) इत्यत्र **बिस्त** इति निपातनान्निष्ठायामनिट्त्वमिति साधयन्ति । शास्त्रस्य सङ्कोचे प्रमाणाभावात् तच्चिन्त्यम् ।

A. ‘ ......वेदव्योषकृदग्लुशो **बिसि**तधीकुस्यज्जनान्होबुसम् ।’ धा. का. 2. 66.

बुक्कक:-क्किका, बुक्कक:-क्किका, बुबुक्किषक:-षिका, बोबुक्कक:-क्किका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कखति**वत् (141) ज्ञेयानि । अप्रत्यये— बुक्का[A] इति ।

**(1119) " बुक्क भाषणे "** (X-चुरादि:-1714. अक. सेट्. उभ.)

'—भषणे' इति **धा. का.** (3-38) व्याख्यादृष्टः पाठः ।

'**णिचि बुक्कयतीति स्यात्**, भाषणे शपि बुक्कति ।' (श्लो. 42) इति **देवः** ।

बुक्कक:-क्किका, बुबुक्कयिषक:-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि **चौरादिक-कुट्टयति**वत् (207) ज्ञेयानि । [1]बुक्कयिष्णुः[B] ।

**(1120) " बुगि वर्जने "** (I-भ्वादि:-158. सक. सेट्. पर.)

'वुगि–' इत्यस्य पाठभेदोऽयम् । 'भुगि भर्जने **इत्येके** ।' इति **क्षीरस्वामी** ।

बुङ्गक:-ङ्गिका, बुङ्गक:-ङ्गिका, बुबुङ्गिषक:-षिका, बोबुङ्गक:-ङ्गिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कुण्ठति**वत् (209) ज्ञेयानि । ण्यति— [C]बुङ्ग्यम् ।

**(1121) " बुध अवगमने "** (I-भ्वादि:-858. सक. सेट्. पर.)

**ज्वलादिः** ।

'बुध्यते **बोधती**त्येवं बुधेरवगमे द्वयम् ।
बुधिरो बोधनार्थस्य बोधते बोधतीत्यपि ॥' (श्लो. 119) इति देवः ।

**अवगमनम्**=उद्बोधः, ज्ञानं च । आद्ये-अकर्मकः, द्वितीये-सकर्मकः ।

बोधक:-धिका, बोधक:-धिका, बुबोधिषक:-बुबुधिषक:-षिका, बोबुधक:-धिका इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कोलति**वत् (231) ज्ञेयानि ।

---

1. छान्दसा अपि प्रत्ययाः क्वचिद् भाषायां क्त्वादिवत् भवन्तीति, 'णेश्छन्दसि' (3-2-137) इति ताच्छीलिक इष्णुच्प्रत्यये णेरयादेशे च रूपमेवमिति ज्ञेयम् ।

A. 'अफक्कताऽतक्यगुणेन तक्कता खलश्च**बुक्का**परुषे पुरेऽमुना ।' धा. का. 1.17.

B. 'सञ्चर्चयन् अपनयानथ **बुक्कयिष्णुः**
श्वेवोग्रशब्दनपरः कररुद्धकाणः ।' धा. का. 3-38

C. 'विजुङ्गय **बुङ्ग्यं** गुणसंघदङ्कका अलङ्घितानन्दरसात्तघर्घनाः ।' धा. का. 1.22.



[1]बोधयन् शिष्यं धर्मम् । [2]प्रबोधी-प्रतिबोधी । राज्ञां [3]बोधितः-बुधितो वा । [4]विबुधः[A]-बोधः, [B]अविबोधयन् ।

**(1122) " बुध अवगमने "**

(IV-दिवादि:-1172. अक. अनि. आत्म.) [अ]

'**बुध्यते** बोधतीत्येवं बुधेरवगमे द्वयम् ।' (श्लो. 119) इति **देवः** ।

---

1. '**बुध**युधनशजनेङ्प्रुद्रुस्रुभ्यो णेः' (1-3-86) इति ण्यन्तादस्मात् परस्मैपदमेव । यदाऽयं चित्तवत्कर्तृकः, तदाऽपि, '**अणावकर्मकात्** चित्तवत्कर्तृकात्' (1-3-88) इति ण्यन्तात् परस्मैपदमेवेति ज्ञेयम् । अत्र, 'गति**बुद्धि**प्रत्यवसानार्थ—' (1-4-52) इत्यनेन बुध्यर्थत्वात् अण्यन्तावस्थायां कर्तुः, ण्यन्तावस्थायां **कर्मसंज्ञे**त्यपि ज्ञेयम् ।

2. 'भविष्यति गम्यादयः' (3-3-3) इति सूत्रे, प्र—प्रतिपूर्वकस्यास्य णिनिप्रत्ययान्तत्वेन गणपाठात् भविष्यत्यर्थे णिनिः ।

3. 'मति**बुद्धि**पूजार्थेभ्यश्च' (3-2-188) इति वर्तमाने आदिकर्मणि च क्तप्रत्ययः । 'उदुपधाद् भावादिकर्मणोः—' (1-2-21) इति कित्त्वविकल्पः । 'क्तस्य च वर्तमाने' (2-3-67) इति षष्ठी । अत्र **क्षीरतरङ्गिण्यां बोद्धा, बुद्धः** इति इड्रहितप्रयोगौ प्रदर्शितौ । अनिट्कारिकासु (7-2-10) **बुध्याति** इति श्यना निर्देशात् दैवादिकस्यैवानिट्त्वमिति, अस्य भौवादिकत्वेन सेड्रूपाण्येव भवन्तीति च युक्तमुत्पश्यामः ।

4. '**ज्वलिति**कसन्तेभ्यो णः ।' (3-1-140) इति कर्तरि णप्रत्ययविकल्पः । तस्य वैकल्पिकत्वात्, कर्तरि पक्षे इगुपधलक्षणकप्रत्यये **बुधः, विबुधः** इत्यादीनां सिद्धिः । 'अभिधानलक्षणाः कृत्तद्धितसमासान्ताः, (भाष्यम्-3-3-1) इति वचनात् सामान्येन विहितानामपि कृतां क्वचित् संज्ञायामपि सम्भव इति, अत्र कप्रत्ययः संज्ञायामपि । तेन **बुधः** इति ग्रहविशेषस्य, जातिविशेषस्य च संज्ञा ।

A. '........तमहमितो विलोक्य **विबुधैः** कृतोत्तमायोधनम् ।' भ. का. 10.37.

B. 'ततः प्राकारमारोहत् क्षपाटान**विबोधयन्** ।' भ. का. 8.56.

[अ] 'तत्त्वं **बुध्यते**' इति **धर्मकीर्त्ति** प्रयोगात्, 'क्रमादमुं नारद इत्य**बोधि** सः ॥' (शि. व. 1.3) इति **माघ**प्रयोगाच्च सकर्मकत्वमप्यस्यास्तीति ज्ञायते । परं तु 'अत्र **बुधादीनां** चतुर्णाम्, 'अणावकर्मकात्—' (1-3-88) इत्येव सिद्धे, वचनमिदम् अचित्तवत्कर्तृकार्थम् ।' इति प्रतिपादयतो **वृत्तिकारादे**रेतदनभिमतमिति ज्ञायते । **मा. धा. वृत्तौ** तु 'अयमर्थभेदेन सकर्मकोऽकर्मकश्च ।' इति समाहितम् ।

बोधकः-धिका, बोधकः-धिका, [1]बुभुत्सकः-त्सिका, बोबुधकः-धिका ; इत्यादीनि सर्वाण्यपि रूपाणि दैवादिकक्षुध्यतिवत् (315) ज्ञेयानि। [2]बुद्धः, [3]बुधानः, [4]बुबुधानः।

**(1123) "बुधिर् बोधने"** (I-भ्वादिः-875. सक. सेट्. उभ.)

'बुधिरो बोधनार्थस्य **बोधते बोधती**त्यपि ॥' (श्लो. 119) इति **देवः**। **चान्द्राः, क्षीरस्वामी** च 'बुध—' इत्यनिरितं पठन्ति।

बोधकः-धिका, बोधकः-धिका, बुबोधिषकः-बुबुधिषकः-षिका, बोबुधकः-धिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कोलति**वत् (231) ज्ञेयानि। [5]बोधयमानः, [A]विबोध्यः, [6]तत्त्वबोधः-[7]तत्त्वबोधिनी।

**(1124) "उ बुन्दिर् निशामने"**

(I-भ्वादिः-876. सक. सेट्. उभ.)

'उ बुन्धिर्[8]—' इति **नन्दी**। 'उ बेदिर्—' इत्यन्ये।' इति **क्षीरस्वामी**। 'उ चुन्दिर्—' इति **काशकृत्स्नचन्द्रौ** पेठतुरिति **क्षीरतरङ्गिणीटीका**।

---

1. सन्नन्ताण्ण्वुलि, 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वे, भष्भावे चर्त्वे च रूपम्।
2. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायाम् क्तप्रत्ययः। बुध्यतीति **बुद्धः**=सिद्धार्थः।
3. 'युधिबुधिदृशेः किच्च' (द. उ. 5-33) इत्यानच्प्रत्ययः, किच्च। कित्त्वान्न गुणः। **बुधानः**= आचार्यः।
4. 'मुचिबुधिभ्यां सन्वच्च' इति **मा. धा. वृत्त्यु**पात्तेन औणादिकसूत्रेण आनच्प्रत्यये, तस्य सन्वद्भावात् द्वित्वे, कित्त्वे च रूपम्। **बुबुधानः**= बोद्धुमिच्छुः।
5. '**बुधयुध—**' (1-3-86) इत्यत्र, अकर्मकैः युध-नश-जनैः साहचर्यात् तादृशस्याकर्मकस्यैव ग्रहणमिति, सकर्मकोऽयं न तत्र विवक्षितः। तेनास्मात् '**णिचश्च**' (1-3-74) इत्यस्य प्रवृत्त्या यथासम्भवं ण्यन्तात् शता शानच्च भवतीति विशेषः।
6. 'कर्मण्यण्' (3-2-1) इत्यणि रूपमेवम्।
7. ताच्छील्ये णिनिप्रत्यये रूपमेवम्। स्त्रियां ङीप्।
8. "...**आचार्य**प्रवृत्तिर्ज्ञापयति—'नैवंजातीयकानामिदिद्विधिर्भवति' इति; यदयमिरितः कांश्चिन्नुमनुषक्तान् पठति—'**उ बुन्दिर् निशामने**' ...।" इति **भाष्य**-(1-3-7) वचनप्रामाण्यात् धकारपाठोऽप्रामाणिक इति ज्ञेयम्। अनेनैव **भाष्य**वाक्येन कुत्रचिद्धातुषु अर्थनिर्देशः **पाणिनीय** एवेत्यपि बोध्यम्।

A. 'या नेदितोर्वीपरिशर्धिवीचीविमृद्वृक्षादि**विबोध्य**शैत्या ॥' धा. का. 2.26.



बुन्दकः-न्दिका, बुन्दकः-न्दिका, बुबुन्दिषकः-षिका, बोबुदकः-दिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**तुम्पति**वत् (742) ज्ञेयानि। [1]बुन्दमानः-बुन्दिष्यमाणः, [2]बुन्नम्-बुन्नः-बुन्नवान्, [3]बुन्दित्वा-बुत्त्वा, [4]बुद्बुदः इत्यादीनि रूपाण्यस्य धातोः विशेषेण सम्भवन्तीति विशेषः। [A]प्रबुन्द्यः।

**(1125) "बुल निमज्जने"** (X-चुरादिः-1602. अक. सेट्. उभ.)

'चुल समुच्छ्राये' (547) इति चुरादिधातोः **क्षीरस्वामि**सम्मतः पाठ एवम्। **इतरे** सर्वेऽप्यमुं न पठन्ति। बोलकः-लिका, बुबोलयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चोरयति**वत् (546) ज्ञेयानि।

**(1126) "बुस उत्सर्गे"** (IV-दिवादिः-1219. सक. सेट्. पर.)

बोसकः-सिका, बोसकः-सिका, बुबुसिषकः-बुबोसिषकः-षिका, बोबुसकः-सिका ; इत्यादीनि सर्वाण्यपि रूपाणि दैवादिक**कुस्यति**वत् (234) ज्ञेयानि। [5]बुसम्,[B] [6]खलेबुसम्, [7]बुस्तः।

---

1. अस्य धातोरुभयपदित्वात् शानजपि भवतीति विशेषः।
2. उदित्त्वेन क्त्वायामिड्विकल्पनात् 'यस्य विभाषा' (7-2-15) इति निष्ठायामिण्निषेधे, उपधानकारलोपे, निष्ठातकार-धातुदकारयोर्नत्वे च रूपमेवम्।
3. '**उदितो** वा' (7-2-56) इति क्त्वायामिड्विकल्पः। इट्पक्षे 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधादुपधानकारलोपो न। इडभावपक्षे तु नकारलोपे, धातुदकारस्य चर्त्वे च **बुत्त्वा** इति द्वितकारकं रूपमिति ज्ञेयम्।
4. घञर्थे कप्रत्यये, 'कृञादीनां के द्वे भवतः' (वा. 6-1-12) इति द्विर्वचने, पृषोदरादित्वात् (6-3-109) हलादिशेषाभावे च रूपमेवम्।
5. इगुपधलक्षणे कप्रत्यये रूपमेवम्। **बुसम्** = धान्यादीनां निस्सारो भागः।
6. यस्मिन् काले खले बुसं वर्तते स कालः = **खलेबुसम्**। तिष्ठद्गुप्रभृतिषु (2-1-17) पाठात् अव्ययीभावसमासः, सप्तम्या अलुक् च।
7. औणादिके (द. उ. 6-7) तन्प्रत्यये, 'तितुत्रत—' (7-2-9) इत्यादिना इण्निषेधे च रूपमेवम्। यद्वा, अर्धर्चादिषु (2-4-31) **बुस्त** इति पाठान्निष्ठायामनिट्त्वमिति बोध्यम्।

A. '**प्रबुन्द्य**वेणीजववेनमाना खातान्तिका चीवरिभिर्निषादैः।' धा. का. 2.27.

B. '......वेदव्योषकृदप्लुषो बिसितधीकुस्यज्जनांहोबु**सम्**।' धा. का. 2.66.

## (1127) "बुस्त आदरानादरयोः"

(X-चुरादिः-1591. सक. सेट्. उभ.)

'—बन्धने।' इति **क्षीरस्वाम्युद्धृतश्चान्द्र**सम्मतपाठः। 'मुद्रित**चान्द्र**-धातुपाठे तु '—वञ्चने' इत्येव दृश्यते।' इति **क्षी. टीका**। '—दानादरयोः' इति **धा. का. व्याख्यायां** (3-20) दृष्टः पाठः।

बुस्तकः-स्तिका, बुबुस्तयिषकः-षिका; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कुस्मयति**वत् (236) ज्ञेयानि। अस्योभयपदित्वात् शताऽपि भवतीति विशेषः। [A]सम्बुस्तितः।

## (1128) "बृह वृद्धौ" (I-भ्वादिः-735. अक. सेट्. पर.)

'...........बृंहति बर्हति।

वृद्धौ, भाषार्थविषये बृंहयेद् बर्हयेदिति॥' (श्लो. 198) इति **देवः**।

बर्हकः-र्हिका, बर्हकः-र्हिका, बिबर्हिषकः-षिका, बरीबृहकः-हिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**दर्हति**वत् (866) ज्ञेयानि। [1]परिबृढः[B], परिबृहितः, [2]बृहत्।

## (1129) "बृहि वृद्धौ शब्दे च" (I-भ्वादिः-736. अक. सेट्. पर.)

---

1. परिपूर्वादस्मान्निष्ठायाम्, इडभावः, तकारस्य ढत्वम्, हकारस्य लोपः इति, 'प्रभौ **परिबृढः**' (7-2-21) इत्यनेन प्रभावभिधेये निपातितः। अन्यत्र **परिबृहितः**। अत्र बृंहतेरेव सानुषङ्गस्येदं निपातनमिति **वार्तिककार**पक्ष इति **पदमञ्जर्य**-नुसारेण **मा. धा. वृत्तावु**क्तम्। **भाष्ये** दर्हतिदृंहति विषय एव प्रकृत्यन्तरसद्भावे प्रमाणं प्रदर्शितमिति बोध्यम्। किञ्च, अत्र सर्वत्र **भाष्य**कोशेषु 'प्रभौ **परिवृढः**' (7-2-21) इत्युपादाय **परिवृढः** इत्येव रूपसम्पादनं कृतमिति ज्ञायते। अतश्च दन्तोष्ठ्यादिः वर्हतिर्लिलिखिषमाणैव **भाष्यो**पात्तेत्यपि ज्ञायते। अत्र तत्त्वं विद्वांसो विभावयन्तु।
2. 'वर्तमाने पृषद्**बृहत्**—' (द. उ. 6.5) इति कतिप्रत्ययः, तस्य शतृवद्भावश्च।

A. '**संबुस्तिते** गिरिमखे परिचोद्य गोपान्
प्रानक्षयद्धरिमखं मदधक्कनार्थी॥' धा. का. 3.20.

B. 'तान् दृष्ट्वाऽतिदृढान् धृष्टान् प्राप्तान् **परिबृढा**ज्ञया।' भ. का. 9.18.



अत्र शब्दः-गजशब्द एव, लोके तथैव प्रयोगात्। 'बृहिर्—' इति **चन्द्रदुर्गौ**। '.................बृंहति बर्हति।

वृद्धौ, भाषार्थविषये बृंहयेत् बर्हयेदिति॥' (श्लो. 198) इति **देवः**।

बृंहकः-बृंहिका, बृंहकः-बृंहिका, बिबृंहिषकः-षिका, बरीबृंहकः-हिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**दर्हति**वत् (866) ज्ञेयानि। [1]परिबृढः-[A]उपबृंहितः, [2]बर्हिः, [3]ब्रह्म।

## (1130) "बृहि भाषार्थः" (X-चुरादिः-1769. सक. सेट्. उभ.)

**आस्वदीयः**। '—भासार्थः' इति **क्षीरस्वामी**।

'वृद्धौ, भाषार्थविषये **बृंहयेद्** बर्हयेदिति॥' (श्लो. 198) इति **देवः**।

बृंहकः-हिका, बिबृंहयिषकः-षिका, बृंहयिता-त्री, बिबृंहयिषिता-त्री; बृंहयन्-न्ती, बिबृंहयिषन्-न्ती, बृंहयिष्यन्-न्ती-ती, बिबृंहयिषिष्यन्-न्ती-ती; बृंहयमाणः, बिबृंहयिषमाणः, बृंहयिष्यमाणः, बिबृंहयिषिष्यमाणः; **सुबृट्**-सुबृड्-सुबृहौ-सुबृहः; — — —

बृंहितम्-तः-तवान्, बिबृंहयिषितः-तवान्, बृंहः, बिबृंहयिषुः; बृंहयितव्यम्, बिबृंहयिषितव्यम्; बृंहणीयम्, बिबृंहयिषणीयम्; बृंह्यम्, बिबृंहयिष्यम्, ईषद्बृंहः-दुर्बृंहः-सुबृंहः; बृंह्यमाणः, बिबृंहयिष्यमाणः, बृंहः, बिबृंहयिषः, बृंहयितुम्, बिबृंहयिषितुम्; बृंहणा, बिबृंहयिषा, बृंहणम्, बिबृंहयिषणम्; बृंहयित्वा, बिबृंहयिषित्वा; प्रबृंह्य, प्रबिबृंहयिष्य; बृंहम् २, बृंहयित्वा २, बिबृंहयिषम् २, बिबृंहयिषित्वा २.

---

1. अत्रापि प्रभावभिधेये, 'प्रभौ **परिबृढः**' (7-2-21) इति क्तप्रत्ययस्यानिट्त्वं तकारस्य ढत्वं नकारहकारयोर्लोपश्च निपात्यते। अन्यत्र **बृंहितम्** इत्येव। '**बृंहितं**= करिगर्जितम्।' इति **अमरः** (2-8-107)।
2. '**बृंहेर्न**लोपश्च' (द. उ. 9-31) इतीसिप्रत्यये नलोपे च रूपम्। पश्चात् गुणः। **बर्हिः**= वेद्यास्तरणम्।
3. '**बृंहेर्नो**ऽच्च' (द. उ. 6-74) इति मनिन्प्रत्यये धातूपधानकारस्य अकारे, पश्चाद् यणि च रूपम्। **ब्रह्म**= परं तेजः, वेदश्च।

A. 'यानैरप्युप**बृंहितो** विहितवान् प्रातः प्रयातुं मनः।' धा. का. 1.92.

(1131) "**बृहू उद्यमने**" (VI-तुदादिः-1347. अक. वेट्. पर.)

**क्षीरतरङ्गिणी-धातुकाव्यादिषु** दृष्टः पाठ एवम्। **अन्ये सर्वे** दन्तोष्ठ्यादिं '**वृहू**—' इत्येव पठन्ति। तत्र **क्षीरस्वामी** '**बृहु**—' इति उदितं पपाठ। बर्हकः-र्हिका, बर्हकः-र्हिका, बिबर्हिषकः-बिबृक्षकः-क्षिका, बरीबृहकः-हिका ; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिकतर्हतिवत् (777) ज्ञेयानि। णिनिप्रत्यये—[A]जनजीवबर्ही इति।

## (1132) "ब्रूञ् व्यक्तायां वाचि"

(II-अदादिः-1044. अक. [अनि.] सेट्. उभ.)

[1]वाचकः-चिका, वाचकः-चिका, [2]विवक्षकः-क्षिका, वावचकः-चिका ;
वक्ता-वक्त्री, वाचयिता-त्री, विवक्षिता-त्री, वावचिता-त्री ;
[3]ब्रुवन्-ती, वाचयन्-न्ती, विवक्षन्-न्ती ; —
वक्ष्यन्-न्ती-ती, वाचयिष्यन्-न्ती-ती, विवक्षिष्यन्-न्ती-ती ; —
ब्रुवाणः, वाचयमानः, विवक्षमाणः, वावच्यमानः ;
वक्ष्यमाणः, वाचयिष्यमाणः, विवक्षिष्यमाणः, वावचिष्यमाणः ;
[4]सुवाक्-सुवाग्-सुवाचौ-सुवाचः ; — —
[5]उक्तम्-उक्तः-उक्तवान् , वाचितम्-तः, विवक्षितः, वावचितः-तवान् ;

---

1. आर्धधातुके विवक्षिते '**ब्रुवो वचिः**' (2-4-53) इति वच्यादेशे रूपमेवम्। एवमेव तृजादिषु सर्वत्र शुद्धे, ण्वुलादिषु ण्यन्ते च वच्यादेशे रूपं ज्ञेयम्।
2. सन्नन्ताण्ण्वुलि वच्यादेशे रूपम्। तत्र वच्यादेशस्य 'पचिं **वचिं**—' इत्यनिट्कारिकासु (भाष्ये-7-2-10) वचनादनिट्त्वम्। कुत्वषत्वयोः रूपमेवम्। एवमेव सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया।
3. शतरि, अदादित्वात् शपो लुकि, शतुः सार्वधातुकत्वेन ङित्त्वात्, 'अचि श्नुधातु—' (6-4-77) इत्यादिनोवङि रूपमेवम्।
4. ताच्छीलिके क्विपि,'क्विब् **वचि**प्रच्छि—' (वा. 3-2-178) इति दीर्घोऽसंप्रसारणं च भवति।
5. निष्ठायाम्, '**वचि**स्वपियजादीनां किति' (6-1-15) इति वकारस्य संप्रसारणे, 'सम्प्रसारणाच्च' (6-1-108) इति पूर्वरूपे च रूपमेवम्। एवमेव क्तिनि, क्त्वायां च रूपनिष्पत्तिर्बोध्या।

A. 'मुरादिबन्धुः क्षुरघोरचेताः पुरन् खलानां **जनजीववर्ही**।' धा. का. 2.77.



[1]ब्रुवः, ब्राह्मणिब्रुवा, [2]विदुषिब्रुवा-विदुषीब्रुवा, श्रेयसिब्रुवा-श्रेयसीब्रुवा, [3]विद्वद्ब्रुवा, श्रेयोब्रुवा, वाक्-[4]वाचा, [5]अनूचानः,[A] [6]वाग्मी, वाचालः-वाचाटः, [7]प्रवचनीयः (ब्राह्मणः, अनुवाको वा), [8]गुणवचनः, वाचः विवक्षुः, वावचः;
वक्तव्यम्, वाचयितव्यम् , विवक्षितव्यम् , वावचितव्यम् ;
प्रवचनीयम् , वाचनीयम् , विवक्षणीयम्, वावचनीयम् ;

---

1. ब्रवीति इति **ब्रुवः**। कर्तरि पचाद्यचि रूपम्। 'घरूपकल्पचेलड्**ब्रुव**—' (6-3-43) इति सूत्रे '**ब्रुव**' इति निपातनात् गुणाभावे, वच्यादेशाभावे च रूपम्। अनेनैव सूत्रेण भाषितपुंस्कात् परस्य ङीप्प्रत्ययान्तस्यानेकाचो ह्रस्वः। **काशिकायामेव** (8-1-27) सूत्रे '**ब्रुव** इति **ब्रुवः** कन्, निपातनात् **वच्या**देशाभावश्च।' इत्युक्तमप्यत्रानुसन्धेयम्।
2. 'उगितश्च' (6-3-45) इति **ब्रुव**शब्दे परे ह्रस्वविकल्पः।
3. 'पुंवद्भावोऽप्यत्र पक्षे वक्तव्यः' (काशिका. 6-3-45) इति **वृत्तिकार**वचनादत्र पुंवद्भावे **विद्वद्ब्रुवा, श्रेयोब्रुवा** इति रूपे भवतः। परंतु **भाष्ये** नैतादृशं वचनं दृश्यते।
4. क्विबन्तात् स्त्रियां टापि रूपमेवम्। 'आपं चैव हलन्तानां यथा **वाचा** निशा दिशा।' इति **भागुरि**वचनात् टाप् इति **सि. कौमुदी**। **भाष्ये** तु नैतादृशं वचनं दृश्यते।
5. 'उपेयिवाननाश्वा**ननूचान**श्च' (3-2-109) इत्यनेन, 'अनु' इत्युपसर्गपूर्वकादस्मात् लिटः कर्तरि कानचि, सम्प्रसारणे पूर्वरूपे द्वित्वे सवर्णदीर्घे च '**अनूचानः**' इति सिद्ध्यति। **अनूचानः**= साङ्गवेदाध्येता।
6. वाक्छब्दात् '**वाचो** ग्मिनिः' (5-2-124) इति मत्वर्थीये ग्मिनिप्रत्यये रूपमेवम्। प्रशस्तवाग्वति प्रत्ययोऽयम्। अत्रैव प्रकरणे 'आलजाटचौ बहुभाषिणि' (5-2-125) इति कुत्सितार्थे मत्वर्थीये आलच्-आटच्प्रत्यययोः **वाचालः, वाचाटः** इति रूपे इत्यपि ज्ञेयम्।
7. 'भव्यगेय**प्रवचनीय**—' (3-4-68) इत्यादिना कर्तरि अनीयर् प्रत्ययः। **प्रवचनीयः**=ब्राह्मणः। अत्र कर्मण्येव प्रत्ययो निपात्यते इति मते तु **प्रवचनीयः**=अनुवाकः।
8. गुणम् उक्तवान् इति **गुणवचनः**। 'कृत्यल्युटो बहुलम्' (3-3-113) इति भूते कर्तरि ल्युट्प्रत्ययः। अत्र च निदानम्, '**गुणवचन**ब्राह्मणादिभ्यः—' (5-1-124) इत्यत्र '**गुणवचन**—' इति निर्देश एवेति ज्ञेयम्।

A. '**इदमूचुरनूचानाः** प्रीतिकण्टकितत्वचः॥' कुमारसम्भवे 6.15.

[1]वाच्यम्-वाक्यम् , [2]प्रवाच्यम् , अविवाक्यम् , वाच्यम् , वाकोवाक्यम् ,
विवक्ष्यम् , वावच्यम् ;

ईषद्वचः-दुर्वचः-सुवचः ; — —

उच्यमानः, वाच्यमानः, विवक्ष्यमाणः, वावच्यमानः ;

वाचः, [3]अनुवाकः-प्राड्विवाकः, वाचः, विवक्षः, वावचः ;

वक्तुम् , वाचयितुम् , विवक्षितुम् , वावचितुम् ;

उक्तिः, [4]निरुक्तम्-पुनरुक्तिः, वाचना, विवक्षा, वावचा ;

वचनम् , वाचनम् , विवक्षणम् , वावचनम् ;

उक्त्वा, वाचयित्वा, विवक्षित्वा, वावचित्वा ;

प्रोच्य, संवाच्य, प्रविवक्ष्य, प्रवावच्य ;

वाचम् २, } वाचम् २, } विवक्षम् २, } वावचम् २ ; }
उक्त्वा २, } वाचयित्वा २, } विवक्षित्वा २, } वावचित्वा २; }

---

1. 'आर्धधातुके' (2-4-35) इत्यत्र विषयसप्तमीत्वाश्रयणात् प्रत्ययोत्पत्तेः प्रागेव वच्यादेशे हलन्तलक्षणे ण्यति 'वचोऽशब्दसंज्ञायाम्' (7-3-67) इति कुत्वनिषेधे **वाच्यम्** इति रूपम् । शब्दसंज्ञायां तु कुत्वे **वाक्यम्** इत्येव । **वाक्यम्=वार्तिकादि**रूपः शाब्दिकसंज्ञासिद्धः ग्रन्थः ।

2. 'यजयाचरुचप्रवचर्चश्च' (7-3-66) इत्यनेन कुत्वनिषेधे **प्रवाच्यम्** इति रूपम् । '**प्रवाच्यम्**=ग्रन्थविशेषः' इति **वृत्त्यादिषु** प्रोक्तम् । परं तु **भाष्ये** (7-3-66) **प्रवचि**ग्रहणप्रत्याख्यानप्रकरणे 'प्रपूर्वश्च **वचि**रशब्दसंज्ञायां वर्तते ।' इत्युक्तत्वात् ग्रन्थविशेषस्य **प्रवाच्य**मिति संज्ञेति पक्षः चिन्त्य इति **उद्द्योते** प्रकृतसूत्रे स्फुटम् । **अविवाक्यम्** इत्यत्र तु पृषोदरादित्वात् (6-3-109), न्यङ्क्वादित्वात् (7-3-53) वा अहर्विशेषे कुत्वम् । द्वादशाहे दशरात्रस्य यज्ञविशेषस्य दशममहः **अविवाक्यम्**, यस्मिन्नहनि याज्ञिकाः न विब्रुवते=न नानावाक्यान्युच्चारयन्ति । अन्यत्र **अविवाच्यम्** इत्येव ।

3. शब्दसंज्ञात्वात् कुत्वमत्रेति ज्ञेयम् । **अनुवाकः**=श्रुतौ विभागविशेषः । पृच्छतीति प्राट् । विशेषेण सूक्ष्मेक्षिकया न्यायादिकं ब्रवीति-इति **विवाकः** । प्राट् चासौ विवाकश्च **प्राड्विवाकः**=नीतिस्थले न्यायवादी । अत्रापि 'हलश्च' (3-3-121) इति संज्ञायां घञि कुत्वमिति ज्ञेयम् ।

4. **पुनरुक्तिः, निरुक्तम्** इत्यत्र 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इत्यनेन क्तिच् क्तश्च संज्ञायां भवतः । **पुनरुक्ति**रिति असकृदाम्नानस्य संज्ञा । एवं **निरुक्त**मिति ग्रन्थविशेषस्य संज्ञा ।



[1]कृकवाकुः[A], [2]उक्थम् , [3]वक्त्रम् , [4]वचः, [5]वचक्नुः ।

(1133) "**ब्रूस हिंसायाम्**" (X-चुरादिः-1664. सक. सेट्. उभ.)

ब्रूसकः-सिका, बुब्रूसयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कुत्सयति**वत् (217) ज्ञेयानि । अस्योभयपदित्वात् ब्रूसयन्-न्ती, बुब्रूसयिषन्-न्ती, ब्रूसयिष्यन्-न्ती-ती, बुब्रूसयिषिष्यन्-न्ती-ती ; इति शतरि रूपाणि भवन्तीति विशेषः ।

(1134) "**व्लेष्क दर्शने**" (X-चुरादिः-1916. सक. सेट्. उभ.) [अ]

व्लेष्ककः-ष्किका, विव्लेष्कयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**गन्धयति**वत् (375) ज्ञेयानि ।

(1135) "**भक्ष अदने**" (I-भ्वादिः-893. सक. सेट्. उभ.) [आ]

---

1. '**कृके वचः** कश्च' [द. उ. 1.91.] इति ञुण्प्रत्यये ककारस्यान्तादेशे च रूपमेवम् । कृकेण=गलेन ब्रवीतीति **कृकवाकुः**=कुक्कुटः ।

2. औणादिके (द. उ. 6.32) थक्प्रत्यये सम्प्रसारणे च रूपमेवम् । **उक्थम्**=सामविशेषः ।

3. 'गुधृवीपचिवचि—' (द. उ. 8.89) इत्यादिना कर्तरि त्रप्रत्यये रूपम् । ब्रवीत्यनेनेति **वक्त्रम्**=आस्यम् ।

4. 'असुन्' (द. उ. 9.49) इत्यनेनासुन्प्रत्यये **वच्या**देशे च रूपमेवम् ।

5. 'सृ यु **वचिभ्यो**ऽन्यज् आक्रूज् **अक्नुचः**' (द. उ. 10. 4) इत्यनेन यथासंख्यमक्नुच्प्रत्यये रूपमेवम् । ब्रवीति इति **वचक्नुः**=वाग्मी ।

A. 'अनुनयमगृहीत्वा व्याजसुप्ता पराची
रुतमथ **कृकवाको**स्तारमाकर्ण्य कल्ये । ' शि. व. 11.9.

[अ] '**वष्क** दर्शने' इति पूर्वलिखितस्य (1107) धातोः **क्षीरस्वामि**सम्मतः पाठ एवम् । अत्र **क्षीरतरङ्गिण्याम्**, 'कर्तुरगाढत्वेऽपि **व्लेष्को** वर्तना इत्येके ।' इत्युक्तम् । एतेन ज्ञायते—'**व्लेष्क** दर्शने कर्तृशैथिल्ये' इति संहितापाठे द्वावपि धातू मेलयित्वा **केचित्** पठन्ति ; तदानीं कर्तुः अगाढत्वे=शैथिल्ये **व्लेष्क**धातोर्वृत्तिं **केचि**दिच्छन्ति—इति । एवञ्च दर्शने, कर्त्रगाढार्थे च **केचि**दमुं धातुं पठन्तीति बोध्यम् ।

[आ] 'भक्ष अदने' इत्यत्र भ्वादौ **मैत्रेयादयः** '**भक्ष**' इति पठन्ति । तदनुसारेण **देवेना**पि '**शपि भक्षति भक्षते** ।' (श्लो. 177) इत्युक्तम् । **धातुकाव्ये**ऽपि '—प्रभक्ष्य **भक्षन्ति** यदम्बु नीचाः ।' (2-28) इति शब्विकरणकः प्रयोगः कृतः । परं तु '**भक्षे**रहिंसार्थस्य' (वा. 1-4-52) इत्यत्र '**भक्षयति** पिण्डीं

'भक्षयत्यदने भक्षेः, शपि **भक्षति भक्षते** ।' (श्लो. 177) इति **देवः** ।
भक्षकः-क्षिका, भक्षकः-क्षिका, बिभक्षिषकः-षिका, बाभक्षकः-क्षिका ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**तक्षति**वत् (691) ज्ञेयानि ।

(1136) " **भक्ष अदने** " (X-चुरादिः-1557. सक. सेट्. उभ.)

'**भक्षय**त्यदने भक्षेः, शपि भक्षति भक्षते ।' (श्लो. 177) इति **देवः** ।
भक्षकः-क्षिका, बिभक्षयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**पक्षयति**वत (956) ज्ञेयानि । [1]मांसभक्षः-मांसभक्षा, [2]भक्षयन् पिण्डीं देवदत्तेन याति । [3]इक्षुभक्षिका, [4]भक्-भग्-भक्षौ-भक्षः, भक्षणम्, इत्यादीनि रूपाण्यस्य संभवन्तीति विशेषः ।

(1137) " **भज सेवायाम्** " (I-भ्वादिः-998. सक. अनि. उभ )

'–विभागसेवयोः' इति **द्रुमे** (श्लो. 123) ।
'सेवायां **भजते** भजेदिति भजेः, विश्राणने भाजयेद्
आमर्दे तु भनक्ति, भाजयति णौ भाजेः पृथक्कर्मणि ॥ (श्लो. 66) इति **देवः** ।

---

देवदत्तः । भक्षयति पिण्डीं देवदत्तेन ।' इति ण्यन्ताद्धेतुमण्णिचि प्रयोज्यस्य कर्मसंज्ञाभावप्रतिपादक**भाष्येण भक्षतेः** शब्विकरणपाठोऽनभिसंहितः । 'शीलिकामि**भक्ष्या**चरिभ्यो णः' (वा. 3-2-1) इत्यत्रापि **वार्तिक-भाष्य-कैयटोद्द्योतादिषु** चौरादिकस्य भक्षयतेरेव प्रत्ययविधानप्रदर्शनादपि भ्वादौ पाठोऽस्याप्रामाणिक एवेति ज्ञेयम् । स्पष्टमिदं **माधवधातुवृत्तौ** प्रकृतधातुप्रकरणे इति ज्ञेयम् ।

1. 'शीलिकामि**भक्ष्या**चरिभ्यो णः' (वा. 3-2-1) इति कर्मण्युपपदे णप्रत्ययः । मांसं भक्षयतीति **मांसभक्षः** । स्त्रियां णप्रत्ययान्तत्वेन टापि **मांसभक्षा** इति रूपम् । 'स्तुतिशीला हरिकामा **फलभक्षा** कानने व्रताचारा ' इति **प्र. सर्वस्वे** ।
2. '**निगरण**चलनार्थेभ्यः—' (1-3-87) इति ण्यन्तादस्य नित्यं परस्मैपदमेव। अत्रास्य पुनः हेतुमण्णिचि, 'गतिबुद्धिप्रत्य**वसानार्थ**—' (1-4-52) इति प्रयोज्यस्य कर्मत्वम्, '**भक्षे**रहिंसार्थस्य' (वा. 1-4-52) इति **वार्तिकेन** निषिध्यते । हिंसायां तु '**भक्षयति** यवान् बलीवर्दान् ।' इति **भाष्यम्** । अत्र **भक्षयतिः** 'सर्वे सचेतना भावाः' इति न्यायेन हिंसायां वर्तते । यवानां सचेतनत्वात् हिंस्यत्वम् ।
3. 'पर्यायार्हर्णोत्पत्तिषु—' (3-3-111) इत्यनेन अर्हार्थे ण्वुच् प्रत्ययः । इक्षुभक्षणमर्हति इति **इक्षुभक्षिका** ।
4. ण्यन्तादस्मात् क्विपि, संयोगान्तलोपे जश्त्वचर्त्वयो रूपमेवम् ।



भाजकः-जिका, भाजकः-जिका, [1]बिभक्षकः-क्षिका, [2]बाभजकः-जिका ;
[3]भक्ता-भक्त्री, भाजयिता-त्री, बिभक्षिता-त्री ; बाभजिता-त्री ;
भजन्-न्ती, भाजयन्-न्ती, बिभक्षन्-न्ती ; —
भक्ष्यन्-न्ती, भाजयिष्यन्-न्ती-ती, बिभक्षिष्यन्-न्ती-ती ; —
भजमानः, भाजयमानः, बिभक्षमाणः, बाभज्यमानः ;
भक्ष्यमाणः, भाजयिष्यमाणः, बिभक्षिष्यमाणः, बाभजिष्यमाणः ;
[4]देहभाक्[A]-देहभाग्-देहभाजौ-देहभाजः ; — —
विभक्तम्-भक्तवान्, भाजितः, बिभक्षितः, बाभजितः-तवान् ;
भजः, [5]भागी, [6]भक्तम्-भक्तः, [7]राज्यभाक्-प्रभाक्, [8]भेजिवान्[B], [9]भ्राता,

---

1. सन्नन्ताण्वुलि, धातोरनिट्त्वादिडागमाभावे, चर्त्वषत्वयोश्च रूपम् । एवं सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया ।
2. यङन्ते सर्वत्र, अभ्यासे दीर्घः, जश्त्वं चेति ज्ञेयम् ।
3. धातोरनिट्त्वात्, चर्त्वे रूपमेवम् । एवं तव्यदादिष्वपि ज्ञेयम् ।
4. '**भजो** ण्विः' (3-2-62) इति कर्तरि ण्विप्रत्ययः । प्रत्ययस्य णित्वादुपधावृद्धिः । क्विबादिवदयं प्रत्ययः सर्वलोपी । कर्तरि क्विपोऽपवादोऽयम् ।
5. तच्छीलादिषु कर्तृषु, 'सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरज**भज**–' (3-2-142) इत्यादिना घिनुण्प्रत्ययः । णित्वादुपधावृद्धिः । घित्वात्, 'चजोः कु घिण्यतोः' (7-3-52) इति कुत्वमिति च ज्ञेयम् ।
6. आशीरर्थे, 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां क्तप्रत्ययः । **भक्तम्**= अन्नम् । भजतादिति **भक्तः**= उपासकः ।
7. '**भजो** ण्विः' (3-2-62) इत्यत्र उपसर्गे सुपि च उपपदे प्रत्ययविधानाश्रयणादत्र, **प्रभाक्** इत्यत्र च कर्तरि ण्विप्रत्यय इति ज्ञेयम् ।
8. कर्तरि भूतसामान्ये लिटः क्वसौ, 'तॄफल**भज**त्रपश्च' (6-4-122) इति एत्वाभ्यासलोपयोः, 'वस्वेकाजाद्घसाम्' (7-2-67) इतीडागमे च रूपमेवम् ।
9. 'तृन्' (3-2-135) इति ताच्छीलिके तृन्प्रत्यये, 'नप्तृनेष्टृ—' (द. उ. 2.3) इत्यत्र निपातनात् भ्रादेशे च **भ्राता** इति सिद्ध्यतीति **मा. धा. वृत्ता**वुक्तम् । **द. उ. वृत्त्यादिषु** भ्राजतेर्जकारलोपे रूपनिष्पादनं कृतम् । 'श्वशुरः श्वश्र्वा' (1-2-71) इत्यत्र **भाष्ये** तु 'यदि तावद् बिभर्तीति **भ्राता**—' इत्युक्तत्वात् भृञ्धातोरेव **भ्रातृ**शब्दनिष्पत्तिर्ध्येयेति प्रतिभाति ।

A. '**देहभाजि** ततः केशान् लुलुञ्च लुलुठे मुहुः ॥' भ. का. 14.59.
B. 'आज्ञानुग्रहभीमकोमलपुरीपाला फलं **भेजुषां**
याऽयोध्येत्यपराजितेति विदिता नाकं परेण स्थिता ।' श्रीगुणरत्नकोशे 23.

[1]घनभाजी, [2]विभक्तिः, [3]भजमानः, भाजः, बिभक्षुः, बाभजः ;
भक्तव्यम् , भाजयितव्यम् , बिभक्षितव्यम् , बाभजितव्यम् ;
भजनीयम् , भाजनीयम् , बिभक्षणीयम् , बाभजनीयम् ;
[4]विभज्यम् , [5]विभाग्यम् , भाज्यम् , बिभक्ष्यम् , बाभज्यम् ;
ईषद्भजः-दुर्भजः-सुभजः ; — —
भज्यमानः, भाज्यमानः, बिभक्ष्यमाणः, बाभज्यमानः ;
भागः, [6]भगः, भाजः, बिभक्षः, बाभजः ;
भक्तुम् , भाजयितुम् , बिभक्षितुम् , बाभजितुम् ;
[7]भक्तिः-[A]दृढभक्तिः, भाजना, बिभक्षा, बाभजा ;
[8]भजनम् , भाजनम् , बिभक्षणम् , बाभजनम् ;

---

1. ताच्छीलिके णिनिप्रत्यये रूपमेवम् ।
2. 'क्तिच्क्तौ च—' (3-3-174) इत्यनेन संज्ञायां क्तिचि रूपम् । **विभक्तिः**=प्रथमाद्या विभक्तिः । अत्र सूत्रे (3-3-174) आशिषि गम्यमान एव प्रत्यय इत्युक्तमविवक्षितमिति **केचित्** ।
3. '**ताच्छील्य**वयोवचनशक्तिषु—' (3-2-129) इत्यनेन ताच्छील्ये गम्ये चानश्प्रत्ययः । शित्त्वाच्छबादिकं भवति ।
4. 'द्विवचन**विभज्यो**पपदे—' (5-3-57) इति सूत्रे **विभज्य** इति निर्देशात् हलन्तलक्षणण्यदपवादो यत्प्रत्ययोऽत्रेति ज्ञेयम् ।
5. 'अबाधकान्यपि निपातनानि' (परिभाषा-120) इति दर्शने ण्यत्प्रत्यये कुत्वे च रूपमेवम् । **विभाज्यम्** इति कुत्वाभावरूपं तु सर्वथा अप्रामाणिकमेव । स्पष्टमिदं प्रकृतसूत्रे (5-3-57) **पदमञ्जर्याम्** , **उद्द्योते** च ।
6. 'खनो घ च' (3-3-125) इत्यत्र चकाराद् धात्वन्तरेभ्योऽपि घप्रत्ययो भवतीत्यतोऽत्र घप्रत्यये, घित्त्वेन कुत्वे च रूपमेवम् । 'हृद्**भग**—' (7-3-19) इत्यत्र '**भग**—' इति निर्देश एवात्र निदानम् ।
7. भजनम्=**भक्तिः** । भावे क्तिन् । **दृढभक्ति**रित्यत्र दृढा भक्तिरस्येति विग्रहे 'स्त्रियाः पुंवत्—' (6-3-34) इति पूर्वपदस्य पुंवद्भावे रूपमेवम् । प्रियादिषु (6-3-34) कर्मसाधनस्यैव **भक्ति**शब्दस्य पाठः, न तु भावसाधनस्य । अतः पुंवद्भावः कथमत्रेति न शङ्क्यम् ।
8. ल्युटि, अनादेशे रूपमेवम् । स्त्रियां टित्त्वेन ङीपि **भजनी** इत्येव भवति । **भजना** इति टाबन्तप्रयोगो लोके दृश्यते । तस्य शास्त्रं मृग्यमेव । ण्यन्तात् स्त्र्यधिकारीये युच्प्रत्ययेऽपि **भाजना** इत्येव स्यात्, न तु **भजना** इति ।

A. '**दृढभक्ति**रिति ज्येष्ठे राज्यतृष्णापराङ्मुखः ।' रघुवंशे 12-19.



भक्त्वा, भाजयित्वा, बिभक्षित्वा , बाभजित्वा ;
विभज्य, विभाज्य, प्रबिभक्ष्य, प्रबाभज्य ;
भाजम् २, भक्त्वा २, } भाजम् २, भाजयित्वा २, } बिभक्षम् २, बिभक्षित्वा २, } बाभजम् २ ; बाभजित्वा २. }

## (1138) "भज विश्राणने" (X-चुरादिः-1734. सक. सेट्. उभ.)

**विश्राणनम्**=दानम् ।

'सेवायां भजते भजेदिति भजेः, विश्राणने **भाजयेद्**...' (श्लो. 65) इति **देवः** ।
भाजकः-जिका, बिभाजयिषकः-षिका ; भाजयिता-त्री, बिभाजयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**गर्जयति**वत् (378) ज्ञेयानि । [A]विभाज्य ।

## (1139) "भजि भाषार्थः" (X-चुरादिः-1760. अक. सेट्. उभ.)

आस्वदीयः ।

'भाषार्थे णिचि **भञ्जयेद्**.... ।' (श्लो. 66) इति **देवः** ।

भञ्जकः-ञ्जिका, बिभञ्जयिषकः-षिका, भञ्जकः-ञ्जिका, बिभञ्जिषकः-षिका, बाभञ्जकः-ञ्जिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कुंशयति**वत् (232) ज्ञेयानि ।

## (1140) "भट भृतौ" (I-भ्वादिः-307-780. अक. सेट्. पर.) घटादिः ।

**भृतिः**=वेतनम् । '**भृतिः**=वेतनप्राप्तिः ।' इति **धा. का. व्याख्यायाम्** (1-41) । भाटकः-टिका, भाटकः-टिका, [1]भटकः-टिका, बिभटिषकः-षिका, बाभटकः-टिका, इत्यादीनि सर्वाणि रूपाणि भौवादिक**कठति**वत् (148) बोध्यानि । [2]भटित्रम् ।

---

1. '**भट परिभाषणे**' इति घटादिषु पठ्यते । अस्यैव भृत्यर्थकस्य धातोः परिभाषणार्थे मित्त्वार्थोऽनुवादः । ततश्च परिभाषणार्थे घटादित्वेन मित्त्वात् णौ, 'मितां ह्रस्वः' (6-4-92) इति उपधाह्रस्वे रूपमेवम् । एवं तृजादिष्वपि **भटयिता-त्री** इत्यादीनि रूपाणि यथायथमूह्यानि ।
2. औणादिके [द. उ. 8.93] इत्रप्रत्यये रूपमेवम् । **भटित्रम्**=शूलपक्वमांसम्-'वेतनमित्युणादि**वृत्तौ**—' इति **मा. धा. वृत्तिः** ।

A. 'आज्ञापनामिह **विभाज्य** नृपेण दृष्टौ......॥' धा. का. 3. 40,

(1141) "**भडि परिभाषणे**" (I-भ्वादि:-273. सक. सेट्. आत्म.)

'परितो भाषणम्=**परिभाषणम्**।' इति **स्वाम्यादयः**। "—'यः सनिन्द उपालम्भस्तत्र स्यात् **परिभाषणम्**।' (अमरकोशे 1-6-14) इति **निघण्टुः**।" इति **मा. धा. वृत्तिः**।

'कल्याणे भण्डयेद् भण्डेः, परिहासे तु **भण्डते**।' (श्लो. 89) इति **देवः**। [अ]

भण्डकः-ण्डिका, भण्डकः-ण्डिका, बिभण्डिषकः-षिका, बाभण्डकः-ण्डिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कण्ठति**वत् (149) ज्ञेयानि। [1]भण्डनः, [2]भाण्डम्, [3]भण्डिलः[A]।

(1142) "**भडि कल्याणे**" (X-चुरादि:-1588. सक. सेट्. उभ.)

इदित्करणात् णिचो वैकल्पिकत्वम्।

'कल्याणे **भण्डयेद्** भण्डेः परिहासे तु भण्डते।' (श्लो. 89) इति **देवः**।

भण्डकः-ण्डिका, बिभण्डयिषकः-षिका, भण्डकः-ण्डिका, बिभण्डिषकः-षिका, बाभण्डकः-ण्डिका; इत्यादीनि सर्वाणि रूपाणि चौरादिक**कुण्ठयति**वत् (210) ज्ञेयानि। कर्तरि क्तप्रत्यये [B]सुभण्डितः इति भवति।

(1143) "**भण शब्दे**" (I-भ्वादि:-447. अक. सेट्. पर.)

भाणकः-णिका, भाणकः-णिका, बिभणिषकः-षिका, बम्भणकः-बंभणकः-

---

1. '**अनुदात्ते**तश्च हलादेः' (3-2-149) इति ताच्छीलिके युचि रूपमेवम्।
2. भण्डते इति **भण्डः**। पचाद्यच्। भण्ड एव **भाण्डम्**=पात्रादिकम्। स्वार्थिकेऽणि रूपमेवम्।
3. बाहुलकात् औणादिके इलच्प्रत्यये रूपमेवम्। **भण्डिलः**=दूतः।

A. 'स **भण्डिलो** भोजनृपालपिण्डभुक् प्रमुण्डितांस्तत्र जनानतुण्डकान्॥' धा.का.1.36.

B. 'बर्हादिमण्डित**सुभण्डित**विग्रहोऽसौ
प्रच्छर्दितः किल बकेन च पुस्तितार्तिः।' धा. का. 3. 20.

[अ] यद्यपि, 'कल्याणे भण्डयेद् भण्डेः, **परिहासे तु भण्डते**।' इति **देव**श्लोकः क्वचित् **दैव**कोशेषु नोपलभ्यते, **पुरुषकारे**ऽपि न व्याख्यातः। तथापि, '—परिहासे' इति देवः।' इति **माधवधातुवृत्ति**वाक्यात्, क्वचित् कोशे मुद्रितत्वाच्चास्माभिरपीहोपात्तः इति ज्ञेयम्।



णिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कणति**वत् (157) ज्ञेयानि। [1]भाणः, [2]भणितिः, [3]भाण्डम्, [A]भणन्-न्ती इतीमानि रूपाण्यधिकान्यत्रेति विशेषः।

(1144) "**भदि कल्याणे सुखे च**"

(I-भ्वादि:-12. अक. सेट्. आत्म.) [अ]

**कल्याणम्**=मङ्गलम्, **सुखम्**=आत्मगुणः, आत्मगुणोदयो वा।

भन्दकः-न्दिका, भन्दकः-न्दिका, बिभन्दिषकः-षिका, बाभन्दकः-न्दिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कन्दति**वत् (163) ज्ञेयानि। [4]भद्रम्, [B]नतभन्दिनी। [5]भदाकः, [6]भदन्तः।

(1145) "**भन्जो आमर्दने**" (VII-रुधादि:-1453. सक. अनि. पर.)

'—आमर्दे तु **भनक्ति**........॥' (श्लो. 65) इति **देवः**।

[7]भञ्जकः-ञ्जिका, भञ्जकः-ञ्जिका, [8]बिभङ्क्षकः-क्षिका, [9]बम्भजकः-बंभजकः-जिका;

---

1. भण्यते इति कर्मणि संज्ञायां घञ्प्रत्यये रूपम्। **भाणः** दशसु रूपकेष्वेकः।
2. 'तितुत्रेष्वग्रहादीनाम् —' (वा. 7-2-9) इति वचनात् इड् भवति।
3. भणतीति **भाण्डम्**। 'पुच्छभाण्ड—' (3-1-20) इति निर्देशाद्दीर्घः। अथवा 'ञमन्ताड्डः' (द. उ. 5-7) इति डप्रत्यये ततः प्रज्ञादित्वात् (5-4-38) अणि रूपमेवम्। भण्यते इति वा **भाण्डम्**=पात्रम्।
4. औणादिके (द. उ. 8-46) रन्प्रत्यये रूपमेवम्। बाहुलकाद्धातुनकारस्य लोपः।
5. पिनाकादिषु (द. उ. 3-34) दर्शनादाकप्रत्यये नकारलोपे च रूपमेवम्। **भदाकः**=अकुटिलः।
6. '**भन्दे**र्नलोपश्च' (पञ्चपाद्युणादि: 3-130) इति झच्प्रत्यये, 'झोऽन्तः' (7-1-3) इत्यन्तादेशे नकारलोपे च रूपमेवम्। **भदन्तः**=प्रव्रजितः।
7. 'नकारजावनुस्वारपञ्चमौ झलि धातुषु।' इति **अभियुक्त**वचनात् उपदेशे नोपधोऽयं धातुः। नकारस्य 'नश्चापदान्तस्य झलि' (8-3-24) इत्यनुस्वारे परसवर्णे च रूपमेवम्। एवमेवोत्तरत्र तृजादिष्वपि रूपनिष्पत्तिर्ज्ञेया।
8. सन्नन्ताण्वुलि धातुजकारस्य कुत्वे, सनः षत्वे च रूपमेवम्। एवं सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया।
9. यङन्ताण्वुलि, द्विर्वचनादिकेषु 'जपजभदहदशभञ्जपशां च' (7-4-86) इति अभ्यासे नुगागमः। नुकः पदान्तवद्भाववचनात् परसवर्णविकल्पः। तेन रूपद्वयम्।

A. 'अणद्दिशः केलिरणैर्मनोज्ञया वाण्या **भणन्तो** मणिभूषणोत्कणाः।' धा. का. 1.58.

B. 'प्रश्विन्दितांशं यशसा पुराऽप्यसौ विवन्दिषुस्तं **नतभन्दिनं** विभुम्।' धा.का.1.3.

[अ] '**भदि** कल्याणे' इति चुरादावपि **दुर्गः** पठतीति **क्षीरतरङ्गिण्या**मुक्तम्। **दुर्गा**तिरिक्तेन केनापि तस्य धातोः चुरादिष्वपठितत्वादस्माभिर्न लिखित इति ज्ञेयम्।

भङ्क्ता-भङ्क्त्री, भञ्जयिता-त्री, बिभङ्क्षिता-त्री, बम्भजिता-त्री ;

[1]भञ्जन्-भञ्जती, भञ्जयन्-न्ती, बिभङ्क्षन्-न्ती ; —

भङ्क्ष्यन्-न्ती-ती, भञ्जयिष्यन्-न्ती-ती, बिभङ्क्षिष्यन्-न्ती-ती ; —

— भञ्जयमानः, — बम्भज्यमानः ;

— भञ्जयिष्यमाणः, — बम्भजिष्यमाणः ;

[2]विभक्-विभग्-विभजौ-विभजः ; — —

[3]भग्नम्-भग्नः-भग्नवान्, भञ्जितः, बिभङ्क्षितः, बम्भजितः-तवान् ;

भञ्जः, [4]प्रभञ्जनः,[A] [5]भङ्गुरः,[B] [शत्रुं] [6]भञ्जानः, भञ्जः, बिभङ्क्षुः, [7]बम्भञ्जः ;

भङ्क्तव्यम्, भञ्जयितव्यम्, बिभङ्क्षितव्यम्, बम्भजितव्यम् ;

भञ्जनीयम्, [8]भजेलिमाः[शालयः], भञ्जनीयम्, बिभङ्क्षणीयम्, बम्भजनीयम् ;

[9]भङ्ग्यम्, भञ्ज्यम्, बिभङ्क्ष्यम्, बम्भज्यम् ;

---

1. शतरि, '**रुधादिभ्यः—**' (3-1-78) इति श्नमि, 'श्नान्नलोपः' (6-4-23) इति धातुनकारलोपे, 'श्नसोरल्लोपः' (6-4-111) इति श्नमोऽकारस्य लोपे च रूपमेवम्।
2. विशेषेण भनक्तीति **विभक्**। क्विपि नकारलोपे कुत्वे च रूपम्।
3. '**ओदितश्च**' (8-2-45) इति निष्ठानत्वे, तस्यासिद्धत्वात् पूर्वमेव 'चोः कुः' (8-2-30) इति कुत्वे च रूपमेवम्।
4. प्रभञ्जयतीति **प्रभञ्जनः**=वायुः। नन्द्यादित्वात् (3-1-134) ण्यन्तात् कर्तरि ल्युः।
5. '**भञ्ज**भासमिदो घुरच्' (3-2-161) इति तच्छीलादिषु कर्तृषु घुरच्प्रत्यये, घित्त्वेन 'चजोः कु घिण्ण्यतोः' (7-3-52) इति कुत्वे च रूपमेवम्।
**प्रक्रियाकौमुदीव्याख्याने** तु "**भञ्जेः** कर्मकर्तरि (प्रत्ययः) तथोक्तम् **पाणिनीयमतदर्पणे—** 'कर्मकर्तारमेवास्मादभिधत्ते स्वभावतः।
न कर्ममात्रमित्येष प्रत्ययः कर्मकर्तरि ॥' इति।" इत्युक्तम्।
6. 'ताच्छील्यवयोवचनशक्तिषु—' (3-2-129) इति चानश्प्रत्यये रूपमेवम्। न तु शानच्प्रत्ययः। अत्र ताच्छील्ये शक्तौ वा चानश्।
7. यङन्तात् पचाद्यचि यङो लुकि उपधानकारलोपस्य निमित्ताभावात् तस्यानुस्वारपरसवर्णयो रूपमेवम्।
8. 'केलिमर उपसंख्यानम्' (वा. 3-1-96) इति केलिमर्प्रत्यये, तस्य कित्त्वेनोपधानकारलोपे च रूपमेवम्। कर्मकर्तर्ययं प्रत्यय इति **वृत्तिः**। **भाष्ये** तु कर्मण्येवायं प्रत्यय इति ज्ञायते।
9. ण्यति, 'चजोः—' (7-3-52) इति कुत्वम्।

A. 'व्यत्ययगच्छन् न च गतं प्रचण्डोऽपि **प्रभञ्जनः** ॥' भ. का. 8. 4.

B. 'सुनरोऽ**भङ्गुर**प्रज्ञो गृहीत्वा भासुरं धनुः।' भ. का. 7.22.



ईषद्भञ्जः-दुर्भञ्जः-सुभञ्जः ; — —

भज्यमानः, भञ्ज्यमानः, बिभङ्क्ष्यमाणः, बम्भज्यमानः ;

[1]भङ्गः-भङ्गा, भञ्जः, बिभङ्क्षः, बम्भजः ;

भङ्क्तुम्, भञ्जयितुम्, बिभङ्क्षितुम्, बम्भजितुम् ;

भक्तिः, [2]सालभञ्जिका,[A] उद्दालकपुष्पभञ्जिका, भञ्जना, बिभङ्क्षा, बम्भजा ;

भञ्जनम्, भञ्जनम्, बिभङ्क्षणम्, बम्भजनम् ;

[3]भङ्क्त्वा[B]-भक्त्वा, भञ्जयित्वा, बिभङ्क्षित्वा, बम्भजित्वा ;

विभज्य, विभञ्ज्य, विबिभङ्क्ष्य, विबम्भज्य ;

[4]इक्षुभञ्जं, गजभञ्जं, [C]वल्लीभञ्जं [वा बभञ्ज।]

भञ्जम् २, भङ्क्त्वा २, भक्त्वा २, } भञ्जम् २, भञ्जयित्वा २, } बिभङ्क्षम् २, बिभङ्क्षित्वा २, } बम्भजम् २ ; बम्भजित्वा २. }

## (1146) "भर्त्स तर्जने" (X-चुरादिः-1683. सक. सेट्. आत्म.)

### आकुस्मीयः।

भर्त्सकः-र्त्सिका, बिभर्त्सयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादि-

---

1. कर्मणि घञि कुत्वे च रूपमेवम्। स्त्रियां टाप्। **भङ्गा**=कुसुम्भम्।
2. 'संज्ञायाम्' (3-3-109) इति स्त्रियामधिकरणे भावादौ ण्वुल्। एवमेव **उद्दालकपुष्पभञ्जिका** इत्यत्रापि ण्वुल्। उद्दालकपुष्पाणि=श्लेष्मातकपुष्पाणि भज्यन्ते यस्यां क्रियायां सेति विवरणम्। 'नित्यं क्रीडाजीविकयोः' (2-2-17) इति समासः।
3. क्त्वायाम्, '**जान्तनशां** विभाषा' (6-4-32) इत्यनुनासिकलोपविकल्पः, तेन रूपद्वयम्।
4. 'उपमाने कर्मणि च' (3-4-45) इति कर्मणि, कर्तरि च णमुल्। 'कषादिषु यथाविध्यनुप्रयोगः' (3-4-46) इति णमुल्प्रयोजकधातोरेव अनुप्रयोगः।
'**इक्षुभञ्जं बभञ्जासौ गजभञ्जं बभञ्ज** तम्।
अत्र हीक्षुमिवेत्यर्थस्तथा गज इवेत्यपि ॥' इति **प्र. सर्वस्वे**।

A. 'धिक् **सालभञ्जिका**प्रख्यान् विषयान् कल्पनारुचीन् ॥' भ. का. 7. 74.

B. '**भङ्क्त्वा** भुजौ विराधाख्यं तं तौ भुवि निचख्नतुः ॥' भ. का. 4. 3.

C. 'अधिशयितवानब्धिं नाथो ममन्थ बबन्ध तं
हरधनुरसौ **वल्लीभञ्जं बभञ्ज** च मैथिलि।' श्रीगुणरत्नकोशे 54.

कक्कुत्सयतिवत् (217) ज्ञेयानि। ण्यति-[A]प्रभर्त्स्यः इति। [1]भर्त्सयमानः।

(1147) "**भर्व हिंसायाम्**" (I-भ्वादिः-580. सक. सेट्. पर.)-

अयमीदिदपि क्वचित् पठ्यते इति **मा. धा. वृत्तिः**।

[B]भर्वकः-र्विका, भर्वकः-र्विका, बिभर्विषकः-षिका, बाभर्वकः-र्विका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कर्वति**वत् (173-A) बोध्यानि।

(1148) "**भल परिभाषणहिंसादानेषु**"

(I-भ्वादिः-495. सक. सेट्. आत्म.)

भालकः-लिका, भालकः-लिका, बिभलिषकः-षिका, बाभलकः-लिका; इत्यादीनि सर्वाण्यपि रूपाणि विशेषरूपाणि विना भौवादिक**कलति**वत् (174) ज्ञेयानि। [2]भालः, ण्यति-[C]आभाल्यः इति विशेषः।

(1149) "**भल आभण्डने**" (X-चुरादिः-1701. अक. सेट्. आत्म.)

**आकुस्मीयः। आभण्डनम्**=निरूपणम्। 'मार्जनम्' इति **धा. का.** (3-36)। भालकः-लिका, बिभालयिषकः-षिका, भालयिता-त्री, बिभालयिषिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**गालयति**वत् (388) ज्ञेयानि। ल्युटि-[D]भालनम्।

(1150) "**भल्ल परिभाषणहिंसादानेषु**"

(I-भ्वादिः-496. सक. सेट्. आत्म.)

भल्लकः-ल्लिका, भल्लकः-ल्लिका, बिभल्लिषकः-षिका, बाभल्लकः-ल्लिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कड्ड्ति**वत् (156) ज्ञेयानि।

---

1. 'आकुस्मादात्मनेपदिनः' (ग.सू. चुरादौ) इति ण्यन्तेऽप्यात्मनेपदमेव; तेन शानच्। **क्षीरस्वामी तु** 'लक्ष्ये **भर्त्सयति**.......इति दृश्यते।' इत्याह। तेनास्य धातोः परस्मैपदमपि भवतीति ज्ञेयम्।
2. 'अकर्तरि च कारके संज्ञायाम्' (3-3-19) इति संज्ञायां घञ्। **भालः**=ललाटः।

A. 'प्रस्पाश्य मुष्टिमभितर्जयते **प्रभर्त्स्यो**
मल्लो बिबस्तयिषुरेनमगन्धनीयम्।' धा. का. 3. 34.

B. 'अफर्विताकाङ्क्षितमर्वकं सतां मांसादिसंचर्वकदुष्ट**भर्वकम्**।' धा. का. 1.74.

C. 'मामल्यमानं स्मितमल्लिकावलीमाभाल्यदैत्याधिपभल्लनोद्धुरम्।' धा. का. 1.64.

D. '..........दुष्कीर्ति**भालन**पराः खलु कूटवृत्त्या।' धा. का. 3.36.



[1]भल्लः-भल्ली, [2]भल्लूकः, [3]भल्लनः, [4]भल्लटः, इमानि रूपाण्यधिकान्यत्रेति विशेषः। ल्युटि-[A]भल्लनम्।

(1151) "**भष भर्त्सने**" (I-भ्वादिः-695. अक. सेट्. पर.)

'**भर्त्सनम्**=श्वरवः, यतस्तत्रैवायं (धातुः) प्रसिद्धः।' इति **मा. धा. वृत्तिः**। **क्षीरस्वामी** तु कुत्सितशब्दकरणार्थकत्वमस्याह। 'भष् बुक्के पिशुनोक्तौ .... .... ....॥' **क. क. द्रुमे** (श्लो. 320) भाषकः-षिका, भाषकः-षिका, बिभषिषकः-षिका; बाभषकः-षिका; इत्यादीनि सर्वाणि रूपाणि भौवादिक**कषति**वत्, (179) ज्ञेयानि। [5]भषः-भषी, [6]भषकः-भषिका, इमानि रूपाण्यधिकान्यत्रेति विशेषः। [B]भषन्।

(1152) "**भस भर्त्सनदीप्त्योः**"

(III-जुहोत्यादिः-1100. अक. सेट्. पर.) **छान्दसः**। [अ]

---

1. भल्यते हिंस्यतेऽनेनेति, 'पुंसि संज्ञायाम्—' (3-3-118) इति घः। 'हलश्च' (3-3-121) इति वा घञ् प्रत्यये रूपमेवम्। **भल्लः**=आयुधविशेषः। 'जातेरस्त्रीविषयादयोपधात्' (4-1-63) इति स्त्रियां ङीष्प्रत्यये **भल्ली** इति रूपम्।
2. 'उलूकादयश्च' (द. उ. 3-16) इति ऊकप्रत्यये रूपमेवम्। भल्लूकः=ऋक्षः।
3. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति ताच्छीलिको युच्प्रत्ययः।
4. बाहुलकादौणादिके अटप्रत्यये रूपमेवम्। भल्लते=परितो भाषतेऽयमिति **भल्लटः**=कविविशेषः।
5. पचादिषु (3-1-134) **भषट्** इति पाठात् टित्त्वेन स्त्रियां 'टिड्ढाणञ्—' (4-1-15) इति ङीपि **भषी** इति रूपम्।
6. 'कुन् शिल्पिसंज्ञयोः—' (द. उ. 3-5) इति क्वुन्। स्त्रियां टापि 'प्रत्ययस्थात्—' (7-3-44) इतीत्वम्।

A. 'मामल्यमानं स्मितमल्लिकावलीमाभाल्यदैत्याधिप**भल्लनो**द्धुरम्।' धा. का. 1.64

B. '....रेषोऽन्यान् **भषतो** नमोऽस्तु कमलाकोष्णस्तनं जोषते॥' धा. का. 1.87.

(अ) धातुपाठेषु सर्वत्र '—भर्त्सनदीप्त्योः' इत्येवास्य धातोरर्थनिर्देशो दृश्यते। परं तु **निरुक्ते** (5-46) '**बभस्तिः** रत्तिकर्मा।' इत्युक्तत्वात्; तथा, 'हरी इवान्धांसि बप्सता।' (ऋ. वे. 1-6-28-7) इत्यत्र **यास्केन** 'हरी इवान्नानि **भुञ्जाने**।' इति व्याख्यानात्, **सायणभाष्येऽपि** '**भस भक्षणदीप्त्योः**।' इत्येवात्र (ऋ. वे. 1-6-28-7) धातुस्वरूपोपादानाच्च '**भक्षणदीप्त्योः**' इत्येव पाठः प्रामाणिक इति, भर्त्सन-भक्षणशब्दयोः प्रायस्तुल्यश्रुत्या पाठभेद इति वा प्रतिभाति।

भासकः-सिका, भासकः-सिका, बिभसिषकः-षिका, बाभसकः-सिका ;
भसिता-त्री, भासयिता-त्री, बिभसिषिता-त्री, बाभसिता-त्री ;
[1]बप्सत्-बप्सतौ-बप्सतः, [2]भासयन्-न्ती-ती, बिभसिषन्-न्ती-ती ; —
भसिष्यन्-न्ती-ती, भासयिष्यन्-न्ती-ती, बिभसिषिष्यन्-न्ती-ती ;—
इत्यादीनि सर्वाण्यपि रूपाणि आदादिककशतिवत (178) ज्ञेयानि।
[3]नभः, [4]भस्म, [5]भस्त्रम्, [6]भसत् इतीमानि रूपाण्यस्माद् भवन्तीति विशेषः।

(1153) "**भा दीप्तौ**" (II-अदादिः-1051. अक. अनि. पर.)

[7]भायकः-यिका, [8]भापकः-पिका, बिभासकः-सिका, बाभायकः-यिका ;
भाता-भात्री, भापयिता-त्री, बिभासिता-त्री, बाभायिता-त्री ;

---

1. शतरि, शपि, तस्य '**जुहोत्यादिभ्यः—**' (2-4-75) इति श्लुः। 'श्लौ' (6-1-10) इति द्विर्वचनम्। 'घसि**भसो**र्हलि च' (6-4-100) इति उपधाऽकारलोपः। 'खरि च' (8-4-55) इति भकारस्य चर्त्वेन पकारः। अभ्यासे हलादिशेषजश्त्वादिकम्।
2. भक्षणार्थकत्वे, '**निगरण**चलनार्थेभ्यः—' (1-3-87) इति ण्यन्तात् कर्तृगामिन्यपि क्रियाफले परस्मैपदमेव। दीप्त्याद्यर्थकत्वे, छान्दसत्वात् दृष्टानुविध्याश्रयणे वा शानजन्तेऽपि **भासयमानः** इति रूपं साध्वेवेत्यपि बोध्यम्।
3. न बभस्ति इति **नभः**=आकाशः। नञ्पूर्वादस्मात् 'अन्येभ्योऽपि दृश्यते' (3-2-178) इति क्विपि सकारस्य रुत्वे विसर्गे च रूपमिति **आत्रेयादयः** साधयन्तीति **माधवधातुवृत्तौ** दृश्यते। अत्र बाहुलकात् नञ्समासे नलोपाभाव इति बोध्यम्।
4. भाषायामपि, 'अन्येभ्योऽपि दृश्यन्ते' (3-2-75) इति मनिन्प्रत्यये 'नेड् वशि कृति' (7-2-8) इतीण्निषेधे रूपमेवम्। 'भूतेऽपि दृश्यन्ते' (3-3-2) इति भूतेऽर्थे प्रत्ययः। भसितम्=**भस्म**।
5. 'हुयामाश्रु**भसिभ्यस्त्रन्**' (द. उ. 8-84) इति त्रन्प्रत्यये रूपमेवम्। 'तितुत्रत—' (7-2-9) इतीण्निषेधः। बभस्तीति **भस्त्रम्**=चर्म, उदरं च।
6. 'शृदृ**भसो**ऽदिः' (द. उ. 6-42) इत्यदिप्रत्यये रूपमेवम्। बभस्ति, भस्यते वा तस्मिन् आहार इति **भसत्**=आमाशयस्थानम्।
7. '**आतो** युक्चिण्कृतोः' (7-3-33) इति युगागमः। एवं घञि, णमुल्यपि ज्ञेयम्।
8. ण्यन्ते सर्वत्र, आदन्तलक्षणः पुगागमो ज्ञेयः।



[1]भान्-भान्ती-भाती, [2]भापयन्-न्ती, बिभासन्-न्ती ; —
भास्यन्-न्ती-ती, भापयिष्यन्-न्ती-ती, बिभासिष्यन्-न्ती-ती ; —
[A]व्यतिप्रभानः, भापयमानः, भापयिष्यमाणः, – बाभायमानः, बाभायिष्यमाणः ;
भाः-भौ-भाः ; — —
सुप्रभातम्-तः, भापितः, बिभासितः, बाभायितः-तवान् ;
[3]निभः, [B]आभः, [4]भम्, [5]विभावरी, [6]भायः, बिभासुः, [7]बाभाः ;
भातव्यम्, भापयितव्यम्, बिभासितव्यम्, बाभायितव्यम् ;
[8]प्रभानीयम्, [9]प्रभापनीयम्, बिभासनीयम्, बाभायनीयम् ;
भेयम्, भाप्यम्, बिभास्यम्, बाभाय्यम् ;
ईषद्भानः-[10]दुर्भानः-सुभानः ; — —
भायमानः, भापयमानः, बिभास्यमानः, बाभाय्यमानः ;

---

1. शतरि शपि, '**अदिप्रभृतिभ्यः—**' (2-4-72) इति शपो लुकि रूपमेवम्। स्त्रियाम्, 'आच्छीनद्योः—' (7-1-80) इति नुम्विकल्पः।
2. दीप्तेः चित्तवत्कर्तृकत्वे, 'अणावकर्मकात् चित्तवत्कर्तृकात्' (1-3-88) इति ण्यन्तात् परस्मैपदमेव। अचित्तवत्कर्तृकत्वे तु शानजपि भवतीति विशेषः।
3. 'आतश्चोपसर्गे, (3-1-136) इति कर्तरि कप्रत्ययः। '**आतो** लोप इटि च' (6-4-64) इति आकारलोपः। **निभः**=तुल्यः। अत्र धात्वर्थानुगमाभावस्तु उपसर्गवशात् धातोरर्थान्तरे वृत्तेरिति ज्ञेयम्।
4. 'अन्येभ्योऽपि दृश्यत इति वाच्यम्' (वा. 3-2-101) इति वचनादत्र डप्रत्यये, डित्त्वसामर्थ्यात् भसंज्ञाभावेऽपि टिलोपे रूपमेवम्। भातीति **भम्**= नक्षत्रम्।
5. विपूर्वकादस्मात्, 'अन्येभ्योऽपि दृश्यन्ते' (3-2-75) इति वनिप्प्रत्यये, स्त्रियाम्, 'वनो र च' (4-1-7) इति ङीब्रेफौ भवतः। **विभावरी**=रात्रिः।
6. 'श्याऽऽद्व्यध—' (3-1-141) इत्यादिना कर्तरि णप्रत्यये युगागमे च रूपम्।
7. यङन्तात् पचाद्यचि यङो लोपे, रूपमेवम्।
8. '**न भाभूपू—**' (8-4-34) इत्यनेन, उपसर्गस्थान्निमित्तात् परस्याच उत्तरस्य कृत्नकारस्य णत्वनिषेधः।
9. 'ण्यन्त**भादीना**मुपसंख्यानम्' (वा. 8-4-34) इति वचनात् ण्यन्तेऽपि कृन्नकारस्य णत्वनिषेधः।
10. ईषदाद्युपपदेषु खलपवादः, आदन्तलक्षणो युच्प्रत्ययः। 'दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वाच्यः। (वा. 1-4-60)' इति वचनान्न णत्वं षत्वं वाऽत्रेति ज्ञेयम्।

A. '**व्यतिप्रभानो** विविधस्तदोच्चकैः तत्रैधते माङ्गलिकः स्म निस्वनः।' वा. वि. 1.35
B. 'मरुत्प्रयुक्ताश्च मरुत्सखा**भं** तमर्च्यमारादभिवर्तमानम्।' रघुवंशे 2.10.

भायः, भापः, बिभासः, बाभायः ;
भातुम्, भापयितुम्, बिभासितुम्, बाभायितुम् ;-
भातिः, [1]प्रतिभा, प्रभा, विभा, आभा, भाः भापना, बिभासा, बाभाया ;
[A]प्रभानम्, भापनम्, बिभासनम्, बाभायनम् ;
भात्वा, भापयित्या, बिभासित्वा, बाभायित्वा ;
प्रभाय, प्रभाप्य, प्रबिभास्य, प्रबाभाय्य ;
भायम् २, भापम् २, बिभासम २, बाभायम् २ ;
भात्वा २, भापयित्वा २, बिभासित्वा २, बाभायित्वा २;
[2]भातुः, [3]भानुः, [4]भामः.

(1154) " **भाज पृथक्कर्मणि** " (X-चुरादिः-1857. अक. सेट्. उभ.)

**अदन्तः।**

'आमर्दे तु भनक्ति **भाजयति** णौ भाजेः पृथक्कर्मणि ॥' (श्लो. 65) इति **देवः**। भाजकः- जिका, बिभाजयिषकः-षिका, भाजयिता-त्री, बिभाजयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कालयति**वत् (185) ज्ञेयानि। यत्प्रत्यये—[B]विभाज्यः इति।

(1155) " **भाम क्रोधे** " (I-भ्वादिः-441. अक. सेट्. आत्म.)

'भामेर्भामयति क्रोधे तत्रैव शपि **भामते** ॥' (श्लो. 149) इति **देवः**।
भामकः-मिका, भामकः-मिका, विभामिषकः-षिका, बाभामकः-मिका ;
भामिता-त्री, भामयिता-त्री, बिभामिषिता-त्री, बाभामिता-त्री ;

---

1. स्त्रियाम्, 'आतश्चोपसर्गे' (3-3-106) इति **भावाद्**ावङ् प्रत्ययः। सम्पदादित्वात् (वा. 3-3-94) भावे क्विपि तु **भाः** इत्यपि भवति।
2. 'कमिमनिजनिगाभा—' (द. उ. 1-125) इत्यादिना तुप्रत्ययः। भातीति **भातुः**= प्रकाशः।
3. 'दाभाभ्यां नुः' (द. उ. 1-143) इति नुप्रत्ययः। **भानुः**=आदित्यः, किरणश्च।
4. 'अर्तिस्तु—' (द. उ. 7-26) इति मन्प्रत्ययः। **भामः**= क्रोधः।

A. 'हरेः प्रगमनं नास्ति न **प्रभानं** हिमद्रुहः।' भ. का. 9.107.
B. '…… ……ये ते निर्वासितधियो ह्यसुभि**र्विभाज्याः** ॥' धा. का. 3.56.



[1]भामयन्-न्ती, भामयिष्यन्-न्ती-ती ; —
[2]देवदत्ताय भाममानः, — बिभामिषमाणः, बाभाम्यमानः ;
भामिष्यमाणः, — बिभामिषिष्यमाणः, बाभामिष्यमाणः ;
[3]भान्-भामौ-भामः ; — — —
भामितम्-तः, भामितः, बिभामिषितः, बाभामितः-तवान् ;
भामः, [4]भामनः, भामः, बिभामिषुः, बाभाम ;
भामितव्यम्, भामयितव्यम्, बिभामिषितव्यम्, बाभामितव्यम् ;
भामनीयम्, भामनीयम्, बिभामिषणीयम्, बाभामनीयम् ;
भाम्यम्, भाम्यम्, बिभामिष्यम्, बाभाम्यम् ;
ईषद्भामः-दुर्भामः-सुभामः; — —
भाम्यमानः, भाम्यमानः, बिभामिष्यमाणः, बाभाम्यमानः ;
भामः, [5]भामिनी[A], भामः ; बिभामिषः, बाभामः ;
भामितुम्, भामयितुम्, बिभामिषितुम्, बाभामितुम् ;
भामा, भामना, बिभामिषा, बाभामा ;
भामनम्, भामनम्, बिभामिषणम्, बाभामनम् ;
भामित्वा, भामयित्वा, बिभामिषित्वा, बाभामित्वा ;
प्रभाम्य, प्रभाम्य, प्रबिभामिष्य, प्रबाभाम्य ;
भामम् २. भामम् २, बिभामिषम् २, बाभामम् २;
भामित्वा २, भामयित्वा २, बिभामिषित्वा २, बाभामित्वा २.

---

1. 'अणावकर्मकात् चित्तवत्कर्तृकात्' (1-3-88) इति ण्यन्तात् परस्मैपदमेव।
2. 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' (1-4-37) इति देवदत्तस्य सम्प्रदानता।
3. 'मो नो धातोः' (8-2-64) इति पदान्ते नकारादेशो भवति। नत्वस्यासिद्धत्वात् नलोपो न।
4. तच्छीलादिषु कर्तृषु 'अनुदात्तेतश्च हलादेः' (3-2-149) इति युच्।
5. **भामः**= क्रोधः। सोऽस्याऽस्तीति **भामिनी**=स्त्री। मत्वर्थीय इनिप्रत्यये, 'ऋन्नेभ्यः—' (4-1-5) इति ङीपि रूपमेवम्।

A. 'पणाय्यरूपाः पनिताकृतीन्ययुः **भामिन्य** एवाक्षमया स्वकामुकान् ॥' धा. का. 1. 57.

**(1156) " भाम क्रोधे "** (X-चुरादिः-1873. अक. सेट्. उभ.)

अदन्तः।

' भामेर्भामयति क्रोधे तत्रैव शपि भामते॥' (श्लो. 149) इति देवः। भामकः-मिका, बिभामयिषकः-षिका ; भामयिता-त्री, बिभामयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कालयति**वत् (185) ज्ञेयानि। कर्तरि क्तप्रत्यये-[A]भामितः इति रूपम्।

**(1157) " भाष व्यक्तायां वाचि "**

(I-भ्वादिः-612. सक. सेट्. आत्म.)

भाषकः-षिका, भाषकः-षिका, बिभाषिषकः-षिका, बाभाषकः-षिका ; भाषिता-त्री, भाषयिता-त्री, बिभाषिषिता-त्री, बाभाषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**भामति**वत् (1155) ज्ञेयानि। [1]व्याभाषकः, [2]सुभाषी, सुभाषितम्, भाषा, [3]आत्मनेभाषा-परस्मैभाषा, भाष्यम् इतीमानि रूपाणि अस्य धातोः भवन्तीति विशेषः। [B]भाषितुम्।

**(1158) " भासृ दीप्तौ "** (I-भ्वादिः-624.अक. सेट्. आत्म.)

भासकः-सिका, भासकः-सिका, बिभासिषकः-षिका, बाभासकः-सिका; इत्यादीनि सर्वाणि रूपाणि भौवादिक**कासति**वत् (188) बोध्यानि।

---

1. ' निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादि**व्याभाषा**सूयो वुञ् ' (3-2-146) इत्यादिना तच्छीलादिषु कर्तृषु वुञ् प्रत्यये रूपमेवम्।
2. ' सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः।
3. स्त्रियाम् ' गुरोश्च हलः' (3-3-103) इत्यकारप्रत्यये **भाषा** इति सिद्ध्यति। **आत्मनेभाषा, परस्मैभाषा** इत्यत्र ' वैयाकरणाख्यायां चतुर्थ्याः ' (6-3-7) 'परस्य च' (6-3-8) इत्यलुक्। **आत्मनेभाषा**=आत्मनेपदम्। **परस्मैभाषा**= परस्मैपदम्। धातुपाठेषु वैयाकरणाख्यायामेते प्रसिद्धे। **भाष्ये** तु (6-3-7) प्रकृतस्थले **आत्मनेभाषः, परस्मैभाषः** इति घञन्त एव प्रयुक्तो लक्ष्यते।

A. ' यो मत्क्षयं स्पृहयते मयि **भामिते**ऽपि संसूचयत्यरिगुणांश्च मदन्नखेटी। ' धा. का. 3.55.

B. ' **भाषितुं** स खलु हर्षतर्षितो गेषितुं समुचितं च नाशकत्। ' धा. का. 1.78.



[1]भासुरः[A], [2]भास्वरः[B], [3]भाः-भासौ-भासः, [4]भासा, ण्यन्तात् शतरि [C]उद्भासयन्, [5]उद्भासी, इमानि रूपाण्यधिकान्यत्रेति विशेषः।

**(1159) " भिक्ष भिक्षायाम् अलाभे लाभे च "**

(I-भ्वादिः-606. सक. सेट्. आत्म.) [अ]

**'—याच्ञायाम्......'** इति सर्वेषु कोशेषु दृष्टः पाठः।

भिक्षकः-क्षिका, भिक्षकः-क्षिका, बिभिक्षिषकः-षिका, बेभिक्षकः-क्षिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**धिक्षति**वत् (898) ज्ञेयानि। [6]भिक्षाकः, [7]भिक्षुः[E], [8]तण्डुलभिक्षः, इत्यादीनि रूपाणि अस्य धातोः

---

1. ' भञ्ज**भास**—' (3-2-161) इति घुरच्प्रत्ययः तच्छीलादिषु कर्तृषु भवति।
2. ' स्थेश**भास**—' (3-2-175) इति तच्छीलादिषु कर्तृषु वरच्प्रत्ययः। ' अनुदात्तेतश्च हलादेः' (3-2-149) इति प्राप्तस्य युचोऽपवादोऽयम्। 'नेड्वशि-कृति ' (7-2-8) इतीण्निषेधः।
3. तच्छीलादिषु कर्तृषु ' भ्राज**भास**—' (3-2-177) इत्यादिना क्विप्प्रत्ययः। ' ताच्छीलिकेषु ताच्छीलिकाः वाऽसरूपेण न भवन्ति, (भाष्यम् . 3-2-150) इति न्यायेनात्र क्विप्प्रत्ययोऽप्यस्य धातोः ताच्छीलिकेष्वेवार्थेषु भवतीति बोध्यम्।
4. 'गुरोश्च हलः' (3-3-103) इति स्त्रियामकारप्रत्यये रूपमेवम्।
5. ग्रह्यादित्वात् (3-1-134) णिनिप्रत्यये रूपमेवम्।
6. ' जल्प**भिक्ष**—' (3-2-155) इत्यनेन तच्छीलादिषु कर्तृषु षाकन्प्रत्यये रूपमेवम्। षित्त्वात् स्त्रियां ङीषि **भिक्षाकी** इति भवति। ' अनुदात्तेतश्च—' (3-2-149) इति प्राप्तस्य युचोऽपवादोऽयम्।
7. तच्छीलादिषु कर्तृषु 'सनाशंस**भिक्ष** उः' (3-2-168) इति उप्रत्ययः। ताच्छी-लिकेषु वाऽसरूपविधिर्नास्ति।' इति, अत्रैव सूत्रे (3-2-168) भिक्षधातोः ' ताच्छी-लिकप्रत्ययविधायकस्थले पुनरुपादानात् ज्ञाप्यते इति बोध्यम्।
8. ' कर्मण्यण् ' (3-2-1) इति कर्मण्युपपदे अण्प्रत्ययः।

A. ' स्मरोभङ्गुरप्रज्ञो गृहीत्वा **भासुरं** धनुः। ' भ. का. 7. 22.

B. ' अभीरुरवसं स्त्रीभि**र्भास्वरा**भिरिहेश्वरः॥' भ. का. 7.25. [शि. व. 3.60.

C. ' कला दधानः सकलाः स्वभाभिः **उद्भासयन्** सौधसिताभिराशाः।'

D. ' वज्रप्रभो**द्भासि**सुरायुधश्रीः या देवसेनेव परैरलङ्घ्या॥ ' शि. व. 3.64.

E. '..........संत्रक्ष्यवेदमतशिक्षक**भिक्षु**गम्यम्।' धा. का. 1.77.

[अ] **क्षीरस्वामी** तु **' भिक्ष याच्ञायाम्, अलाभे लाभे च, क्लेशे च, व्यक्तायां वाचि'** इत्युपादाय, 'तत्तद्देशादिप्रसिद्धार्थानां पृथङ्निर्देशः।' इति तत्रोपपत्तिमप्याह। प्रसिद्धेषु धातुपाठकोशेषु क्लेशधातुः पृथगेव पठ्यते, न तु **भिक्ष-धातोरर्थ**त्वेन। स्पष्टमिदं **माधवधातुवृत्त्यादिषु** प्रकृतस्थले। अतोऽत्रास्मा-भिरपि क्लेशार्थकत्वमस्य नोपक्षिप्तमिति ज्ञेयम्।

विशेषेण भवन्तीति विशेषः । [A]भिक्षमाणः ।

(1160) "**भिदिर् विदारणे**" (VII-रुधादिः-1439. सक. अनि. उभ.)

भेदकः-दिका, भेदकः-दिका, [1]बिभित्सकः-त्सिका, [2]बेभिदकः-दिका ;
भेत्ता-भेत्री, भेदयिता-त्री, बिभित्सिता-त्री, बेभिदिता-[B]त्री ;
[3]भिन्दन्-[C]ती, भेदयन्-न्ती, बिभित्सन्-न्ती ; —
भेत्स्यन्-न्ती, भेदयिष्यन्-न्ती-ती, बिभित्सिष्यन्-न्ती-ती ; —
भिन्दानः, भेदयमानः, बिभित्समानः, बेभिद्यमानः ;
भेत्स्यमानः, भेदयिष्यमाणः, बिभित्सिष्यमाणः, बेभिदिष्यमाणः ;
[4]गोत्रभिद्, काष्ठभिद्, उद्भित्, प्रभित्-प्रभिदौ-प्रभिदः ;
[5]भित्तम् [शकलम्], भित्तः, [6]भिन्नम्-भिन्नवान्, भेदितम्-तः,
बिभित्सितः, बेभिदितः-तवान् ;

---

1. सन्नन्ताण्ण्वुलि, 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वे, द्विर्वचनादिषु कृतेषु धातुदकारस्य चर्त्वेन तकारः । एवमुत्तरत्रापि प्रक्रिया ज्ञेया ।
2. यङन्ते द्विर्वचनादिकेषु कृतेषु, 'गुणो यङ्लुकोः' (7-4-82) इत्यभ्यासे गुणः सर्वत्र बोध्यः ।
3. शतरि, 'रुधादिभ्यः—' (3-1-78) इति श्नम् विकरणप्रत्ययः । स च अन्त्यादचः परो भवति । 'श्नसोरल्लोपः' (6-4-111) इति श्नमोऽकारस्य लोपः । एवमेव शानजन्तेऽपि प्रक्रिया ज्ञेया ।
4. 'सत्सूद्विषद्रुहदुहयुजविद**भिद**—' (3-2-61) इत्यादिना कर्मण्युपपदे, उपसर्गे उपपदेऽपि क्विप्प्रत्ययः । गोत्रं भिनत्तीति **गोत्रभित्**=इन्द्रः । **उद्भित्**=लतागुल्मादिः ।
5. क्तप्रत्यये शकलेऽभिधेये '**भित्तं** शकलम्' (8-2-59) इत्यनेन निष्ठानत्वाभावो निपात्यते । **भित्त**मिति शकलपर्यायो रूढिशब्दः । अत्र भिदिक्रिया शब्दव्युत्पत्ति-निमित्तम् । स्पष्टमिदं प्रकृतसूत्रे **भाष्यादिषु** ।
6. शकलादन्यत्र, 'रदाभ्यां निष्ठातो नः, पूर्वस्य च दः' (8-2-42) इत्यनेन निष्ठात-कार-धातुदकारयोर्नत्वे रूपमेवम् ।

A. 'संदृश्य शरणं शून्यं **भिक्षमाणो** वने प्रियाम् ।' भ. का. 6.9.
B. 'आत्तायुधाहितजनैः सह संयतित्री शत्रोर्मनोरथशतान्यथ **बेभिदित्री** ।' वा. वि. 3.51.
C. 'निहतश्च स्थितिं **भिन्दन्** दानवोऽसौ बलद्विषा ।' भ. का. 7.68.



[1]उद्भिदः, [2]भिदेलिमाः, [3]भिदुरम्,[A] [4]भिद्यः[B] [नदः], [5]कर्णभेदी,[C]
[6]काष्ठभेदः, [7]बिभिद्वान्, [8]भेदनः-भेदः, बिभित्सुः, बेभिदः ;
भेत्तव्यम्, भेदयितव्यम्, बिभित्सितव्यम्, बेभिदितव्यम् ;
भेदनीयम्, भेदनीयम्, बिभित्सनीयम्, बेभिदनीयम् ;
भेद्यम्, भेद्यम्, बिभित्स्यम्, बेभिद्यम् ;
भिद्यमानः, भेद्यमानः, बिभित्स्यमानः, बेभिद्यमानः ;
ईषद्भेदः-दुर्भेदः-सुभेदः ; — —
भेदः, उद्भेदः, भेदः, बिभित्सः, बेभिदः ;
भेत्तुम्, भेदयितुम्, बिभित्सितुम्, बेभिदितुम् ;

---

1. '**इगुपध**—' (3-1-135) इत्यादिना कर्तरि कप्रत्ययः । कित्त्वान्न गुणः ।
2. 'केलिमर उपसंख्यानम्' (वा. 3-1-96) इत्यनेन केलिमर्प्रत्ययः । धातोरस्य सकर्मकत्वादयं कर्मणि सम्पद्यते । **वृत्त्यादिषु** तु 'कर्मकर्तरि चायमिष्यते' (काशिका. 3-1-96) इत्युक्तम् । '**भिदेलिमाः** सरलाः—भेत्तव्याः ।' इति **भाष्ये** (3-1-96) कर्मार्थकेन तव्यप्रत्ययेन विवरणात् कर्मार्थकत्वमेवास्य प्रत्ययस्येति बोध्यम् ।
3. 'विदि**भिदि**च्छिदेः कुरच्' (3-2-162) इति ताच्छीलिकः कुरच्प्रत्ययः । कर्म-कर्तरि प्रत्ययोऽयमिति **वृत्तौ** लक्ष्यते । भेदनकर्तुः वज्रायुधस्य '**भिदुरम्**' इत्य-भिधानात् शुद्धकर्तर्येवायं प्रत्यय इति प्रतिभाति ।
4. भिनत्ति कूलमित्यर्थे नदेऽभिधेये कर्तरि '**भिद्यो**द्ध्यौ नदे' (3-1-115) इति क्यप् निपात्यते । **भिद्यः**=नदः; अधुना 'जम्मू' राज्ये 'बई' इति देशभाषया व्यवह्रियते ।
5. कर्णं भिनत्तीति **कर्णभेदी**=रूक्षध्वनिः, पिशुनश्च । ताच्छील्ये णिनिप्रत्यये रूपमेवम् ।
6. कर्मण्युपपदेऽणि रूपमेवम् । 'कर्मण्यण्' (3-2-1) इत्यत्र **भाष्ये** एवं प्रयुक्तम् ।
7. लिटः क्वसौ द्विर्वचनादिकेषु कृतेषु रूपमेवम् । 'वस्वेकाजाद्घसाम्' (7-2-67) इत्यत्र कृतद्विर्वचनस्य एकाच एव ग्रहणादत्र नेडिति ज्ञेयम् ।
8. नन्द्यादेराकृतिगणत्वात्, 'कृत्यल्युटो बहुलम्' (3-3-113) इति बहुलग्रहणाद्वा कर्तरि ल्युः ल्युट् वा प्रत्ययः । **भेदनः**=रोगविशेषः, वराहश्च ।

A. 'अयशो **भिदुरा**लोके कोपधामरणादृते ।' शि. व. 19. 58.
B. 'तोयदागम इवोद्ध्य**भिद्ययो**र्नामधेयसदृशं विचेष्टितम् ॥' रघुवंशे 11. 8.
C. 'तेषां निहन्यमानानां संघुष्टैः **कर्णभेदिभिः** ।' भ. का. 9. 21.

[1]भिदा, भित्तिः-भिदिः, भेदना, बिभित्सा, बेभिदा ;
भेदनम्, भेदनम्, बिभित्सनम्, बेभिदनम् ;
भित्त्वा, भेदयित्वा, बिभित्सित्वा, बेभिदित्वा ;
संभिद्य, संभेद्य, प्रबिभित्स्य, प्रबेभिद्य, [2]प्रबेभिदय्य गतः ;
भेदम् २, भित्त्वा २, } भेदम् २, भेदयित्वा २, } बिभित्सम् २, बिभित्सित्वा २, } बेभिदम् २ ; बेभिदित्वा २ ; }
[3]भिदुः, [4]भिदिरम्, [5]भिद्रः ।

(1161) " **ञि भी भये** " (III-जुहोत्यादिः-1084. अक. अनि. पर.)

भायकः-यिका, [6]भापकः-[7]भीषकः-षिका, [8]भायकः-यिका, [9]बिभीषकः-षिका, बेभीयकः-यिका ;
भेता-भेत्री, [A]भापयिता-भीषयिता-भाययिता-त्री, बिभीषिता-त्री, बेभीयिता-त्री ;
[10](चोरात्) बिभ्यत्-बिभ्यतौ-बिभ्यतः, [कुञ्जिकया एनं] [11]भाययन्-न्ती, बिभीषन्-न्ती ; —

1. स्त्रियाम्, '**भिदा** विदारणे' (ग. सू. 3-3-104) इति **भिदादि**पाठाद् भावादौ अङ् । अन्यत्र **भित्तिः** इत्येव । **भित्तिः**=कुड्यम् । स्वार्थे कन्प्रत्यये **भित्तिका** इति भवति । 'इक् कृष्यादिभ्यः' (वा. 3-3-108) इतीक्प्रत्यये **भिदिः** इत्यपि भवति ।
2. यङन्तात् णिचि ल्यपि, 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः। **काशिकायाम्** (6-4-56) उदाहृतोऽयम् ।
3. 'पृ**भिदि**—' (द. उ. 1-108) इति कुप्रत्ययः। **भिदुः**=वज्रम् ।
4. 'इषिमदिमुदिखिदिच्छिदि**भिदि**—' (द. उ. 8-26) इति किरच्प्रत्यये रूपमेवम्। **भिदिरम्**=भेदः ।
5. औणादिके (द. उ. 8-31) रक्प्रत्यये रूपमेवम् । **भिद्रः**=शरः ।
6. '**बिभेतेर्हेतुभये**' (6-1-56) इति विकल्पेन णावात्वे, आदन्तलक्षणः पुगागमः।
7. आत्वाभावपक्षे, '**भियो हेतुभये षुक्**' (7-3-40) इति षुगागमः।
8. अहेतुभये तु (करणादिजन्ये भये तु) णिज्निमित्तकवृद्धौ, आयादेशे च रूपमेवम् । एवमेव ण्यन्ते रूपत्रयस्योपपत्तिर्ज्ञेया ।
9. सन्नन्तात् ण्वुलि, 'इको झल्' (1-2-9) इति सनः कित्त्वान्न गुणः। एवमुत्तरत्रापि सन्नन्तेषु ज्ञेयम् ।
10. शतरि शपो जुहोत्यादित्वात् श्लौ, द्विर्वचने, अभ्यासह्रस्वे, उत्तरखण्डे यणि 'नाभ्यस्ताच्छतुः' (7-1-78) इति नुमो निषेधः।
11. हेतुभये एवात्मनेपदविधानादत्र च अहेतु (करण) भयत्वात् ण्यन्ताच्छतैव ।

A. '**कि**मापयित्री जनमुग्रसेनजं द्राग् भा**पयित्री** भृशमस्य पक्षताम् ।' वा, वि.1. 38.



भेष्यन्-न्ती-ती, भाययिष्यन्-न्ती-ती, बिभीषिष्यन्-न्ती-ती ; —
— (जटिलो)[1]भापयमानः, (मुण्डो)[A]भीषयमाणः, — बेभीयमानः ;
— भापयिष्यमाणः-भीषयिष्यमाणः — बेभीयिष्यमाणः ;
भीः-भियौ-भियः ; — — — —
भीतः-भीतवान्, भापितः-भीषितः-भायितः, बिभीषितः, बेभीयितः-तवान् ;
[2]भीतः, वृकभीतः, [3]भीरुः[B]-भीलुकः, [4]भीरुकः, [5]विभीषणः,[C] भापः-भीषः-भायः, बिभीषुः, बेभ्यः ;
भेतव्यम्, भापयितव्यम्-भीषयितव्यम्-भाययितव्यम्, बिभीषितव्यम्, बेभीयितव्यम् ;
[6]प्रनिभयनीयम्-प्रणिभयनीयम्, भापनीयम्-भीषणीयम्-भायनीयम्, बिभीषणीयम्, बेभीयनीयम् ;
भेयम्, भाप्यम्-भीष्यम्-भाय्यम्, बिभीष्यम्, बेभीय्यम् ;
भायमानः, भाप्यमानः-भीष्यमाणः-भाय्यमानः, बिभीष्यमाणः, बेभीय्यमानः ;
ईषद्भयः-दुर्भयः-सुभयः ; — — —

1. '**भीस्म्योर्हेतुभये**' (1-3-68) इति ण्यन्तादात्मनेपदम् ।
2. '**ञीतः** क्तः' (3-2-187) इति वर्तमाने कर्तरि क्तप्रत्ययः। **वृकभीतः** इत्यत्र 'भय**भीत**भीतिभीभिरिति वक्तव्यम्' (वा. 2-1-37) इति वचनात् समासो बोध्यः ।
3. तच्छीलादिषु कर्तृषु '**भियः** क्रुक्लुकनौ' (3-2-174) इति क्रुः क्लुकन् च प्रत्ययौ भवतः । क्रमेण **भीरुः**, **भीलुकः** इति रूपे सिद्ध्यतः ।
4. 'क्रुकन्नपि वक्तव्यः' (वा. 3-2-174) इति वचनात् क्रुकन्प्रत्यये रूपमेवम्। अयमपि ताच्छीलिकप्रत्ययः ।
5. विशेषेण भीषयत इति **विभीषणः**। ण्यन्तात् नन्द्यादित्वात् (3-1-134) कर्तरि ल्युः । षुगागमः ।
6. 'शेषे विभाषाऽकखादावषान्त उपदेशे' (8-4-18) इति उपसर्गस्थान्निमित्तात् परस्य नेः णत्वविकल्पः ।

A. 'शत्रून् **भीषयमाणं** तं रामं विस्मापयेत कः ।' भ. का. 5-58.
B. '**अभीरु**रवसं स्त्रीभिर्भास्वराभिरिहेश्वरः ॥' भ. का. 7-25.
C. '**बिभ्युर्**बिडालेक्षण**भीषणाभ्यो** वैदूर्यकुड्येषु शशिद्युतिभ्यः ॥' शि. व. 3-45.

[1]भयम्-वृकभयम् , भाप:-भीष:-भाय:, बिभीष:, बेभीय: ;

भेतुम् , भापयितुम्-भीषयितुम्-भाययितुम् , बिभीषितुम् , बेभीयितुम् ;

भीति:, वृकभीति:, [2]भी:, भापना-भीषणा-भायना, [3]भीषा-[A]जातभीषा, बिभीषा, बेभीया ;

— भापनम्-भीषणम्-भायनम् , बिभीषणम् , बेभीयनम् ;

भीत्वा, भापयित्वा-भीषयित्वा-भाययित्वा, बिभीषित्वा, बेभीयित्वा ;

प्रभीय, प्रभाप्य-प्रभीष्य-प्रभाय्य, प्रबिभीष्य, प्रबेभीय्य ;

भायम् २, भीत्वा २, } भापम् २-भीषम् २-भायम् २, भापयित्वा २-भीषयित्वा २-भाययित्वा २, } बिभीषम् २, बिभीषित्वा २, } बेभीयम् २ ; बेभीयित्वा २ ; }

[4]भेक:, [5]भयानक:, [6]भीम:-भीष्म: ।

## (1162) “ भुज पालनाभ्यवहारयो: ”

(VII-रुधादि:-1454. सक. अनि. पर.) अभ्यवहार:=भोजनम् ।

‘ भुजेद् भुनक्ति भुंक्ते स्यु:, कौटिल्ये पालनेऽदने ।’ (श्लो. 65) इति देव: ।

---

1. ‘ अज्विधौ-**भयादीना**मुपसंख्यानम्, नपुंसके क्तादिनिवृत्त्यर्थम् ’ (वा. 3-3-56) इति वचनादत्र ‘ एरच् ’ (3-3-56) इति भावेऽच्प्रत्यय: । अच्प्रत्ययान्तस्य पुंलिङ्गत्वं तु प्रायिकम् । अतोऽत्र नपुंसकत्वम् । **वार्तिके**ऽत्र ‘ क्तादिनिवृत्त्यर्थम् ’ इत्युक्तत्वात् नपुंसके भावे विहित: ल्युट्प्रत्ययोऽप्यस्य धातोर्नेति ज्ञेयम् । **वृकभयम्** इत्यत्र ‘ पञ्चमी **भयेन** ’ (2-1-37) इति समास: ।
2. स्त्रियां भावे सम्पदादित्वात् (वा. 3-3-94) क्विप् ।
3. हेतुमण्ण्यन्तात् बाहुलकेन ‘ अ प्रत्ययात् ’ (3-3-102) इत्यकारप्रत्यय:, युजपवाद: ।
4. ‘इण्**भी**का—’ (द. उ. 3-21) इति कन्प्रत्यये रूपमेवम् । बिभेतीति **भेक:** ।
5. ‘आनक: शीङ्**भिय:**’ (द. उ. 3-26) इत्यानकप्रत्यय: । बिभेति तस्मादिति **भयानक:**=भीषण: । ‘**भीमादयो**ऽपादाने’ (3-4-74) इति अपादानेऽयं प्रत्यय: ।
6. ‘**भिय: षुग् वा**’ (द. उ. 7-35) इति मक्प्रत्यय:, पक्षे षुगागमश्च । बिभेत्यस्माज्जन इति **भीम:, भीष्मो** वा । ‘**भीमादयो**ऽपादाने’ (3-4-74) इत्यपादानेऽयं प्रत्ययो ज्ञेय: ।

A. ‘ जगत्पतौ पश्यति **जातभीषा** प्रायस्तदालिङ्गनमभ्यनैषीत् ॥’ या. अ. 13-57.



भोजक:-जिका, भोजक:-जिका, [1]बुभुक्षक:-क्षिका, बोभुजक:-जिका ;

भोक्ता-भोक्त्री, भोजयिता-त्री, बुभुक्षिता-त्री, बोभुजिता-त्री ;

[2]भुञ्जन्-ती, देवदत्तं यज्ञदत्त:-[3]भोजयन्-न्ती, बुभुक्षन्-न्ती ; —

भोक्ष्यन्-न्ती-ती, भोजयिष्यन्-न्ती-ती, बुभुक्षिष्यन्-न्ती-ती ; —

[4]भुञ्जान:, भोजयमान:, बुभुक्षमाण:, बोभुज्यमान: ;

भोक्ष्यमाण:, भोजयिष्यमाण:, बुभुक्षिष्यमाण:, बोभुजिष्यमाण: ;

हुतभुक् , हव्यभुक् , [5]बलिभुक्-बलिभुजौ-[A]बलिभुज: ; — —

भुक्तम्-भुक्तवान् , [6]प्रभुक्त:, भोजित:, बुभुक्षित:, बोभुजित:-तवान् ;

---

1. सन्नन्ते सर्वत्र ‘ इको झल् ’ (1-2-9) इति सन: कित्त्वे, धातुजकारस्य षकारे, तस्य ‘ षढो: क: सि ’ (8-2-41) इति ककारे च रूपनिष्पत्तिर्ज्ञेया ।
2. शतरि, शपो रुधादित्वेन श्नमि, ‘ श्नसोरल्लोप: ’ (6-4-111) इति श्नमोऽकारस्य लोपे नकारस्य श्चुत्वेन ञकारे च रूपमेवम् ।
3. अभ्यवहारार्थे धातोरस्य ण्यन्तात्, ‘ **निगरण**चलनार्थेभ्य: ’ (1-3-87) इति शतैव । ‘ गतिबुद्धि**प्रत्यवसानार्थ**—’ (1-4-52) इत्यादिना अणौ कर्तु: णौ कर्मसंज्ञाऽत्रेति विशेष: ।
4. ‘ **भुजोऽनवने** ’ (1-3-66) इत्यनेन अवनभिन्नार्थे आत्मनेपदं शानच् । ण्यन्तेऽपि पालनार्थे शानज्ज्ञेय: । सन्नन्तेऽपि पालनार्थे ‘ पूर्ववत् सन: ’ (1-3-62) इति शानज्भवतीति बोध्यम् । धातूनामनेकार्थत्वात्, ‘ **भुञ्जाना** मानुषान् **भोगान्** सर्वकामसमृद्धिनी ।’ (रामा-अर. 47-4), ‘ **बुभुजे** पृथिवीपाल: पृथिवीमेव केवलाम् ॥’ (रघुवंशे. 15-1) इत्यादिषु, अनुभवार्थेऽपि आत्मनेपदं भवतीति बोध्यम् । स्पष्टमिदं **माधवधातुवृत्तौ** ।
5. कर्मण्युपपदे ‘ क्विप् च ’ (3-2-76) इति कर्तरि क्विप् । **बलिभुक्**=वायस: ।
6. ‘ आदिकर्मणि क्त: कर्तरि च ’ (3-4-71) इति कर्तरि क्त: ।’ ‘**प्रभुक्तो** गोरसं कृष्ण: **प्रभुक्तो**ऽनेन गोरस: ।’ इति **प्र. सर्वस्वे** । अस्य धातोर्भक्षणार्थकत्वात् ‘ क्तोऽधिकरणे च ध्रौव्यगति**प्रत्यवसानार्थेभ्य:** ’ (3-4-76) इति अधिकरणेऽपि क्तप्रत्ययो बोध्य: । **प्रत्यवसानार्थका:**= भक्षणार्थका धातव: ।

A. ‘ तूष्णीं प्रत्यभिजानते **बलिभुजो** भीता: स्वयूथ्यस्वरान् ॥’ अनर्घराघवे 4.1.

[1]भोजः, [2]विश्वभोजः, [3]उष्णभोजी-शीतभोजी, [A]कलहभोजी, [4]अश्राद्धभोजी,
कांस्यभोजी, (भोगं) [5]भुञ्जानः, भोजः, [B]बुभुक्षुः, बोभुजः ;
भोक्तव्यम्, भोजयितव्यम्, बुभुक्षितव्यम्, बोभुजितव्यम् ;
प्रनिभोजनीयम्-प्रणिभोजनीयम्, भोजनीयम्, बुभुक्षणीयम्, बोभुजनीयम् ;
[6]भोज्यम्-भोग्यम्, भोज्यम्, बुभुक्ष्यम्, बोभुज्यम् ;
ईषद्भोजः-दुर्भोजः-सुभोजः ; — —
भुज्यमानः, भोज्यमानः, बुभुक्ष्यमाणः, बोभुज्यमानः ;
[7]भुजः-भोगः, [8]भोगः, भोजः, बुभुक्षः, बोभुजः ;
भोक्तुम्, [9]भोक्तुं शक्नोति, भोजयितुम्, बुभुक्षितुम्, बोभुजितुम् ;

---

1. इगुपधलक्षणं कप्रत्ययं बाधित्वा 'अज्विधिः सर्वधातुभ्यः पठचन्ते च पचादयः।' (का. 3-1-134) इति वचनात् कर्तरि अच्प्रत्ययः।
2. विश्वं भुनक्ति इति **विश्वभोजः**। 'कर्मण्यण्' (3-2-1) इत्यण्प्रत्ययः।
3. 'सुप्यजातौ णिनिस्ताच्छील्ये' (3-2-78) इति ताच्छील्ये णिनिप्रत्ययः। एवं **शीतभोजी, कलहभोजी** इत्यत्रापि ज्ञेयम्। कलहं भुनक्ति=पालयति इति **कलहभोजी**=नारदः।
4. 'व्रते' (3-2-80) इति णिनिप्रत्ययः। सति भोजनेऽश्राद्धमेव भुङ्क्ते इत्यत्र व्रतं गम्यते। एव **कांस्यभोजी** इत्यत्रापि व्रते गम्ये णिनिप्रत्यय इति ज्ञेयम्।
5. 'ताच्छील्यवयोवचनशक्तिषु चानश्' (3-2-129) इति चानश्प्रत्ययः। ताच्छीलिकोऽयं प्रत्ययः।
6. '**भोज्यं** भक्ष्ये' (7-3-69) इति ण्यति कुत्वाभावो निपात्यते। 'भक्ष्ये' इत्यत्रोपलक्षणं खादनसामान्यधर्मस्य। तेन '**भोज्या** यवागूः' इत्यत्र पानार्थकस्यापि **भोज्या** इति सिद्धचति। भक्षणादिभिन्नार्थे तु 'चजोः कु घिण्ण्यतोः' (7-3-52) इति कुत्वे **भोग्यः**=कम्बलः इति सिद्धयति।
7. '**भुज**न्युब्जौ पाण्युपतापयोः' (7-3-61) इति पाणावभिधेये घञि कुत्वाभावः, गुणाभावश्च निपात्यते। भुज्यतेऽनेनेति **भुजः**=पाणिः। 'बाहावभिधेये **भुज** इति प्रयोगो लाक्षणिकः।' इति **बृहच्छब्देन्दुशेखरे** स्फुटम्। भुजादन्यत्र घञि कुत्वे **भोगः**= शरीरम्।
8. 'हलश्च' (3-3-121) इति संज्ञायां घञ्। **भोगः**= स्त्रीभोगाज्जातोऽक्षिरोगविशेषः। कारणे कार्योपचारोऽत्र। **भोगः**= सर्पकायश्च।
9. पूर्वकालत्वाभावेऽपि शक्नोत्यर्थे '**शक**धृषज्ञा—' (3-4-65) इति तुमुन्प्रत्ययः।

A. '...........पुरतोऽभवत् **कलहभोजिनो** मुनेः॥' च. भा. 5.53.
B. 'बलात् **बुभुक्षुणो**त्क्षिप्य जह्रे भीमेन रक्षसा॥' भ. का. 4.2.



भुक्तिः, [1]भुजिः, अन्नभोजिका, भोजना, [A]बुभुक्षा, बोभुजा ;
भोजनम्, भोजनम्, बुभुक्षणम्, बोभुजनम् ;
भुक्त्वा, भोजयित्वा, बुभुक्षित्वा, बोभुजित्वा ;
उपभुज्य, उपभोज्य, प्रबुभुक्ष्य, प्रबोभुज्य ;
[2]अग्रेभोजम्-भुक्त्वा, प्रथमं भोजं-भुक्त्वा, पूर्वं भोजं-भुक्त्वा वा व्रजति ।
भोजम् २, भोजम् २, बुभुक्षम् २, बोभुजम् २ ;
भुक्त्वा २, भोजयित्वा २, बुभुक्षित्वा २, बोभुजित्वा २;
[3]भुज्युः, [4]भुजिष्यम्-भुजिष्या.

## (1163) "भुजो कौटिल्ये"

(VI-तुदादिः-1417. अक. अनि. पर.)

'**भुजेद्** भुनक्ति भुङ्क्ते स्युः कौटिल्ये पालनेऽदने।' (श्लो.65) इति **देवः**।
भोजकः-जिका, भोजकः-जिका, बुभुक्षकः-क्षिका, बोभुजकः-जिका ;
इत्यादीनि सर्वाण्यपि रूपाणि प्रातिस्विकरूपाणि विना रौधादिक**भुज**धातुवत् (1162) ज्ञेयानि। [5]भुग्नः[B]-भुग्नवान्, [6]विभुजन्-न्ती-ती, [7]मूलविभुजः,

---

1. 'इक् कृष्यादिभ्यः' (वा. 3-3-108) इति भावे इक्प्रत्ययः। **अन्नभोजिका** इत्यत्र उत्पत्तिरूपार्थे 'पर्यायार्हर्णोत्पत्तिषु ण्वुच्' (3-3-111) इति स्त्रियां ण्वुच्। 'पाचिका मे त्वया देया प्रोत्पन्ना मेऽन्नभोजिका॥' इति **प्र. सर्वस्वे**।
2. 'विभाषाऽग्रेप्रथमपूर्वेषु' (3-4-24) इति अग्रेप्रथमपूर्वशब्देषूपपदेषु समानकर्तृकयोः पूर्वकाले क्त्वाणमुलौ विकल्पेन भवतः।
3. '**भुजि**मृङ्भ्याम्—' (द. उ. 1-135) इति युक्प्रत्ययः। **भुज्युः**= गन्धर्वः।
4. 'रुचि**भुजिभ्यां** किष्यन्' (द. उ. 8-15) इति किष्यन्प्रत्ययः। **भुजिष्यम्**= भोग्यम्। **भुजिष्या**=दासी।
5. धातोरस्य, ओदित्त्वेन, 'ओदितश्च' (8-2-44) इति निष्ठानत्वम्।
6. शतरि, तुदादित्वाच्छप्रत्यये तस्य ङिद्वद्भावेनाङ्गस्य गुणो न। स्त्रियां नुम्विकल्प इति विशेषः।
7. मूलानि विभुजतीति **मूलविभुजः**=रथः। 'कप्रकरणे—**मूलविभुजादिभ्य** उपसंख्यानम्' (वा. 3-2-5) इति कर्मण्यणोऽपवादः कप्रत्ययः।

A. 'अस्मानत्तुमितोऽभ्येति परिग्लानो **बुभुक्षया**॥' भ. का. 7.84.
B 'महाभराभुग्नशिरः सहस्रसाहाय्यकव्यग्र**भुजं** प्रसक्ते॥' शि. व. 3.25.

[1]भुजः, [2]भोगः; इमानि रूपाण्यधिकान्यत्रेति विशेषः ।

## (1164) " भुवोऽवकल्कने " (X-चुरादिः-1748. सक. सेट्. उभ.)

" अवकल्कनम्=मिश्रीकरणम् । भावयति दध्नौदनम् । अनित्यण्यन्तत्वार्था पञ्चमी । ' विकल्कने ' इति **नन्दी** । ' भावयेद् ब्राह्मणं तपः ।'—" इति **क्षीरस्वामी** । " **अवकल्कनं=चिन्तनम्** । इति **काश्यपः** । क्वचित् **स्वामिग्रन्थे**ऽनुकल्कनम्-इति पठित्वा, ' अनुकल्कनम्=मिश्रीकरणम् । ' इति दृश्यते । .... .... ....**विकल्कनम्**=विपाचनम् (=[3]विपक्वीकरणम् ।) तथा च प्रयुज्यते—' तपो **भावित**मात्मानम्—' इति । ' —**अवकल्पने** ' इत्यपरे । तथा च **धनपालः ...** " इति **मा. धा. वृत्तिः** । ' मूलशुद्धिस्त्वत्र कीदृशी ? इति न विद्मः ।' इति **पुरुषकारः** ।

' सत्तायां भवति, प्राप्तौ णिचि भावयते तङि ।
भवते शपि, तत्रैव भावयत्यव**कल्कने** ॥ ' (श्लो. 3) इति **देवः** ।

भावकः-विका, [4]बिभावयिषकः-षिका, भावयिता-त्री, बिभावयिषिता-त्री; [5]भावयन्-न्ती, बिभावयिषन्-न्ती; भावयिष्यन्-न्ती-ती, बिभावयिषिष्यन्-न्ती-ती;

---

1. इगुपधलक्षणे कर्तरि कप्रत्यये रूपमेवम् ।
2. ' हलश्च ' (3-3-121) इति संज्ञायां घञि ' चजोः कु— ' (7-3-52) इति कुत्वे च रूपमेवम् । ' **भोगः**= सर्पकायः । ' इति **क्षीरस्वामी** । " अथवा **भोग**-शब्दः शरीरवाच्यपि दृश्यते । तद्यथा— ' अहिरिव **भोगैः** पर्येति बाहुम्—' (ऋ. वे. 6-75-14) अहिरिव शरीरैरिति गम्यते " इति **भाष्य** (5-1-9) वचनप्रामाण्यात् शरीरसामान्ये **भोग**शब्दस्य वृत्तिरिति गम्यते ।
3. ' **प्रभावुक**मन्नं भवति । ' इति **काशिकायाम्** (3-2-154) उदाहृतम् । तस्यान्न-विशेष्यकत्वेन विपक्वीकरणार्थे वृत्तिरस्य धातोः इति **काशिका**सम्मतमिति ज्ञेयम् ।
4. ण्यन्तात् सनि, ' ओः पुयण्ज्यपरे ' (7-4-80) इत्यभ्यासे इकारः । एवमुत्तरत्रापि ज्ञेयम् ।
5. ' **भू** अवकल्कने ' इति पठितव्ये सति, ' **भुवो**ऽवकल्कने ' इति पाठः ' अनित्य-ण्यन्तत्वार्थं पञ्चमी ।' इति ज्ञापयतीत्याहुः । तेन णिजभावपक्षे, धातोश्चिन्तनार्थकत्वे अकर्मकत्वेन, चिन्तनस्य च चित्तवत्कर्तृकत्वेन ' अणावकर्मकात् चित्तवत्कर्तृकात् ' (1-3-87) इति ण्यन्तात् परस्मैपदमेव । मिश्रीकरणाद्यर्थान्तरे तु यथासम्भवमात्मनेपदमपि धातोरस्य भवतीत्यपि बोध्यम् ।



भावयमानः, बिभावयिषमाणः; भावयिष्यमाणः, बिभावयिषिष्यमाणः, बिभावयिट्-यिषौ-यिषः; [A]भावितम्-तः, बिभावयिषितः-तवान्; भावः, [1]भावुकः, [2]भावनः, बिभावयिषुः; भावयितव्यम्, बिभावयिषितव्यम्; भावनीयम्, बिभावयिषणीयम्; भाव्यम्, बिभावयिष्यम्; ईषद्भावः-दुर्भावः-सुभावः; ईषद्बिभावयिषः-दुर्बिभावयिषः-सुबिभावयिषः; भाव्यमानः, बिभावयिष्यमाणः; भावः, बिभावयिषः; भावयितुम्, बिभावयिषितुम्; भावना, बिभावयिषा; भावनम्, बिभावयिषणम्; भावयित्वा, बिभावयिषित्वा; प्रभाव्य, प्रबिभावयिष्य; भावम् २, भावयित्वा २, बिभावयिषम् २; बिभावयिषित्वा २. इति रूपाण्यस्य भवन्ति ।

## (1165) " भू सत्तायाम् " (I-भ्वादिः-1. अक. सेट्. पर.)

' सत्तायां **भवति**, प्राप्तौ णिचि भावयते तङि ।
भवते शपि तत्रैव, भावयत्यवकल्कने ॥' (श्लो. 3) इति **देवः** ।

भावकः-भाविका, भावकः-विका, [3]बुभूषकः-षिका, बोभूयकः-यिका; भविता-त्री, भावयिता-त्री, बुभूषिता-त्री, बोभूयिता-त्री; परिभवन्-न्ती, [4]सुखमनुभवन् वर्धस्व, शुश्रूषुर्भवन् विद्यामधिकरोति,

---

1. तच्छीलतद्धर्मतत्साधुकारिष्वर्थेषु ' लषपतपदस्थाभूवृष—' (3-2-154) इत्यनेन उकञ्प्रत्ययः । 'णेरनिटि' (6-4-51) इति णिलोपः । ' न वाचमवमन्यन्ते नर्तकीमिव **भावुकाः** ॥' (या. अ. 1-7) इत्यत्र, " **भावुकाः= भावनाकृतो** भगवद्भक्ताः। ' **भुवोऽवकल्कने** ' इति भवतेर्णिजन्तात् ' लषपत—' (3-2-154) इत्यादिना उकञ्प्रत्ययः । 'अवकल्कनम्=चिन्तनम् ।' इति व्याख्यातम् ।" इति **अप्पय्यदीक्षितो**क्तेः धातोरस्यैवोकञ्विधायके सूत्रे ग्रहणमित्यपि ज्ञायते ।
2. ण्यन्तादस्मात् नन्द्यादेराकृतिगणत्वात् कर्तरि ल्युः । **भावनः**= चिन्तकः । (अत्र **भावितम्** इति मिश्रीकरणार्थे धातोर्वृत्तिरिति ज्ञेयम् )
3. ' सनि ग्रहगुहोश्च ' (7-2-12) इतीण्निषेधः । अभ्यासे ह्रस्वः । एवं सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया ।
4. सुख**मनुभवन्**, शुश्रूषु**र्भवन्** इत्यत्र क्रमेण लक्षणार्थे हेत्वर्थे च, ' लक्षणहेत्वोः क्रियायाः ' (3-2-126) इति शता ।

A. ' रोषान्ध्य**भावित**मसृग्भिरकल्पयत् तं
कृष्णोऽपि नाकिजनराकितलाग्यवीर्यः ॥' धा. का. 3.41.

शयनमनुभवन् भुङ्क्ते, मा[1]भवन्, भावयन्-न्ती, बुभूषन्-न्ती ; —
[2]व्यतिभवमानः, भावयमानः, [3]व्यतिबुभूषमाणः, बोभूयमानः ; -
व्यतिभविष्यमाणः, भावयिष्यमाणः, व्यतिबुभूषिष्यमाणः, बोभूयिष्यमाणः ;
[4]गान्दिनीभूः-[A]गान्दिनीभुवौ-गान्दिनीभुवः ; — —
[5]भूतम्, भूतवान्, भावितः, बुभूषितः, बोभूयितः-तवान् ;
[6]भवः, भावः, [7]भव्यः (देवदत्तः), [8]अभिभावी, [9]परिभावी[B]परिभवी, [10]अभावी,

---

1. 'माङ्याक्रोशे' (वा 3-2-124) इति शता । यद्यपि लुङोऽपि माङ्येव विधानम् ; तथापि **वार्तिककार**वचनप्रामाण्यात् लटः शत्राऽत्र लुङः समावेश इति ज्ञेयम् ।
2. 'कर्तरि कर्मव्यतीहारे, (1-3-14) इति कर्मव्यतिहारे शानच् ।
3. 'पूर्ववत्सनः' (1-3-62) इति सन्नन्तात् कर्मव्यतीहारे गम्ये शानच् ।
4. गान्दिन्याः भवति=उत्पद्यते इति **गान्दिनीभूः** । 'क्विप् च' (3-2-76) इति कर्तरि क्विप् ।
5. 'श्र्युकः किति' (7-2-11) इतीण्निषेधोऽत्र । एवमेव क्त्वा-क्तिनोरपि इण्निषेधो ज्ञेयः ।
6. 'अज्विधिः सर्वधातुभ्यः-' (का. 3-1-134) इति वचनादस्माद्धातोः पचाद्यचि, गुणावादेशयो रूपमेवम् । स्त्रियाम् 'इन्द्रवरुण**भव**-' (4-1-49) इत्यादिना ङीषानुगौ । '**भवते**श्चेति वक्तव्यम्' (का. 3-1-143) इति वाक्यं **काशिकायां** कर्तरि विकल्पेन णप्रत्ययविधानप्रकरणे दृश्यते । तेन पक्षे कर्तरि **भावः** इत्यपि ज्ञेयम् । परं तु वाक्यमिदं **भाष्ये** न दृश्यते ।
7. '**भव्य**गेयप्रवचनीय—' (3-4-68) इत्यादिना कर्तरि यत्प्रत्ययान्तो निपातितः । भवत्यसौ, भव्यमनेनेति वा **भव्यः** ।
8. '**अभिभावी** भूते' (ग. सू. 3-1-134) इति वचनात् भूतार्थे ग्रह्यादित्वाण्णिनि-प्रत्ययः ।
9. ग्रह्यादिष्वेव (3-1-134) '**परिभवी-परिभावी**' इति निपातनात् णिनिप्रत्यये, तस्य पाक्षिके वृद्ध्यभावे च रूपे एते सिद्ध्यतः ।
10. 'अचामचित्तकर्तृकाणाम्' (ग. सू. 3-1-134) इत्यत्र पूर्वस्मात् गणसूत्रात् '— प्रतिषिद्धानाम्' (ग. सू. 3-1-134) इत्यनुवर्तते । तेनात्र णिनिप्रत्यये रूपमेवम् । प्रकृतगणसूत्रस्यायमर्थः— अचेतनकर्तृकाणाम् अजन्तानां धातूनां नञ्युक्तानां (नञुपपदकानाम्) णिनिर्भवति—इति । तेनात्र ग्रह्यादित्वात् णिनिः ।

A. 'स **गान्दिनीभू**रथ गोकुलैधितं स्पर्धालुधीगाधितकार्यबाधिनम् ।' धा. का. 1-2.
B. '**परिभावीणि** ताराणां पश्य मन्थीनि चेतसाम् ।' भ. का. 6-75.
अत्र नपुंसकलिङ्गे नुमि, 'प्रातिपदिकान्तनुम्—' (8-4-11) इति णत्वम् ।



[1]भावी, [2]अभिभावकः-अभिभविता, [3]भविता, [4]आढ्यम्भविष्णुः[A]-सुभगम्भविष्णुः-स्थूलम्भविष्णुः-पलितम्भविष्णुः-नग्नम्भविष्णुः-अन्धम्भविष्णुः-प्रियम्भविष्णुः, आढ्यम्भावुकः-[B]सुभगम्भावुकः-स्थूलम्भावुकः-पलितम्भावुकः-नग्नम्भावुकः-अन्धम्भावुकः-प्रियम्भावुकः, [C]मषीभावुकः, [5]भविष्णुः, [6]भूष्णुः, [7]भावुकः, [8]परिभवी,

---

1. 'भविष्यति गम्यादयः' (3-3-3) इत्यत्र गणे **भावी** इति पाठात् भविष्यत्यर्थे णिनिप्रत्ययः ।
2. वाऽसरूपन्यायेन 'ण्वुल्तृचौ' (3-1-133) इति यथाक्रमं ण्वुलि, तृचि च रूपमेवमिति ज्ञेयम् ।
3. तच्छीलादिषु कर्तृषु 'तृन्' (3-2-135) इति तृन्प्रत्यये रूपमेवम् ।
4. आढ्यसुभगस्थूलपलितनग्नान्धप्रियपदेषूपपदेषु सत्सु च्व्यर्थेषु गम्येषु अच्व्यन्तेषु 'कर्तरि **भुवः** खिष्णुच्खुकञौ' (3-2-57) इत्यनेन खिष्णुच् खुकञ् च प्रत्ययः क्रमेणात्रेति ज्ञेयम् । प्रत्यययोः खित्वात्, 'अरुर्द्विषदजन्तस्य मुम्' (6-3-67) इति मुमागमः ।
5. '**भुवश्च**' (3-2-138) इतीष्णुच्प्रत्ययस्तच्छीलतद्धर्मतत्साधुकारिष्वर्थेषु भवति । अत्र पूर्वसूत्रात् '-छन्दसि' (3-2-137) इत्यनुवृत्तेः छन्दस्येवायं प्रत्यय इति ज्ञेयम् । **चान्द्रास्तु** भाषायामप्यस्य प्रयोगमिच्छन्ति ।
6. 'ग्लाजिस्थश्च ग्स्नुः' (3-2-139) इति सूत्रे चकारेण तत्पूर्वसूत्रगत**भू**धातोरप्यनुषङ्गात् अत्र ग्स्नुप्रत्ययः । प्रत्ययस्य गित्वात् 'क्ङिति च' (1-1-5) इत्यत्र गकारस्यापि प्रश्लेषात् गुणो नेति ज्ञेयम् । एवं 'श्र्युकः किति' (7-2-11) इत्यत्रापि गकारप्रश्लेषणात् इण्निषेधोऽत्रेत्यपि ज्ञेयम् ।
7. 'लषपतपदस्था**भू**-' (3-2-154) इत्यनेन ताच्छीलिके उकञ्प्रत्यये रूपमेवम् । ताच्छीलिकेषु वाऽसरूपविधिर्नास्तीति **भाष्यादिषु** स्पष्टम् । तेन उत्सर्गेण समावेश एवेतरेषां प्रत्ययानामिति ज्ञेयम् ।
8. 'जिदृक्षिविश्रीण्वमाव्यथाभ्यम**परिभू**प्रसूभ्यश्च' (3-2-157) इत्यनेन ताच्छीलिके इनिप्रत्यये रूपमेवम् । अत्र सूत्रे **परिभू** इत्युक्तेः अन्योपसर्गे उपपदे प्रत्ययोऽयं न भवतीति ज्ञेयम् ।

A. '**आढ्यम्भविष्णु**र्यशसा कुमारः **प्रियम्भविष्णु**र्न स यस्य नासीत् ॥'
भ. का. 3.1.
B. 'हृदयङ्गममूर्तिस्त्वं **सुभगम्भावुकं** वनम् ।' भ. का. 5.67.
C. 'दलोदरे काञ्चनकेतकस्य क्षणान्**मषीभावुक**वर्णरेखम् ।' नैषधे-6.63.

[1]विभू:, [2]स्वयम्भू:-अग्निभू:-कच्छभू:-मित्रभू:-पवनभू:, [3]विभु:-प्रभु:-संभु:, [4]शम्भु:, [5]भवक:, [6]धेनुम्भव्या, [7]बभूवान्, [8]भवभूति:-भूत:, भाव:, [9]भावन:, [A]बुभूषु:-[10]बिभावयिषु:, बोभुव:;
भवितव्यम्, भावयितव्यम्, बुभूषितव्यम्, बोभूयितव्यम्;
[11]प्रभवनीयम्, [12]प्रभावनीयम्, बुभूषणीयम्, बोभूयनीयम्;

---

1. '**भुवः** संज्ञाऽन्तरयो:' (3-2-179) इति क्विप्प्रत्ययः। **विभूः** इति कस्यचित् संज्ञा। अत्र सूत्रे अन्तरशब्देन धनिकाधमर्णयोरन्तरालवर्ती उच्यते। **प्रतिभूः**= क्रयविक्रयादिषु ऋणादानप्रत्यर्पणादिषु च मध्यवर्ती साक्षी।
2. उपसर्गे,पदान्तरे च उपपदे धातुसामान्यविहित: क्विप्प्रत्ययोऽत्रेति यथासम्भवमूह्यम्।
3. '**विप्रसंभ्यो ड्वसंज्ञायाम्**' (3-2-180) इति भूधातोरस्य वि-प्र-सं-पूर्वकस्य डुप्रत्यय:। प्रत्ययस्य डित्वात् टेर्लोप:।
4. 'डुप्रकरणे—मि[त्र]तद्रु–आदिभ्य उपसंख्यानम्—' (वा. 3-2-180) इति डुप्रत्यय:। शं भावयतीति **शम्भुः**। अन्तर्भावितण्यर्थोऽत्र भवतिरिति ज्ञेयम्।
5. भवतात् इति **भवकः**। आशिषि गम्यमानायाम्, '**आशिषि च**' (3-1-150) इति वुन्।
6. '**धेनोर्भव्यायां** मुम्—' (वा. 6-3-70) इति मुमागम:। धेनुर्भविष्यतीत्यर्थः। बाहुलकादत्र भविष्यत्यर्थे **भुवो** यत्प्रत्यय: इति ज्ञेयम्।
7. लिट: क्वसौ रूपमेवम्। 'वस्वेकाजाद्घसाम्' (7-2-67) इति सूत्रोपात्तनिदानस्यात्र लक्ष्येऽभावादिडागमो न। **माधवधातुवृत्तौ** तु क्वसोर्भाषायां प्रयोगाभाव: साग्रहं साधित:। 'विभाषा पूर्वाह्णापराह्णाभ्याम्' (4-3-24) इत्यत्र **भाष्ये**, '**पपुष** आगतं **पपिवद्रूप्यम्**—' इति प्रयुक्तत्वात् भाषायामपि क्वसुप्रयोगो नाप्रामाणिक इति ज्ञेयम्।
8. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां क्तिच्। पुंलिङ्गोऽयं शब्द:। एवं **भूतः** इत्यत्रापि संज्ञायां क्तप्रत्ययो ज्ञेय:।
9. नन्द्यादे: (3-1-134) आकृतिगणत्वात् ण्यन्तात् कर्तरि ल्युप्रत्ययोऽत्रेति ज्ञेयम्।
10. ण्यन्तात् सनि, 'ओ: पुयण्ज्यपरे' (7-4-80) इत्यभ्यासे इकार:।
11. 'न भाभूपू—' (8-4-34) इत्यादिना उपसर्गस्थान्निमित्तात् परस्य कृत्स्थस्य नकारस्य णत्वनिषेध:।
12. 'ण्यन्तभादीनामुपसंख्यानम्' (वा. 8-4-34) इति उपसर्गस्थान्निमित्तात् परस्य नकारस्य णत्वनिषेध:।

A. '**प्रभुर्बुभूषुर्भुवन**त्रयस्य य: शिरोधिरागाद्दशमं चिकीर्षु:।' शि. व. 1.49.



भव्यम्, [1]अवश्यभाव्यम्, [2]ब्रह्मभूयं [A]मित्रभूयं वा गत:, भाव्य:, भाव्यम्, बुभूष्यम्, बोभूय्यम्;
ईषद्भव:-दुर्भव:-सुभव:, [3]ईषदाढ्यम्भवं-दुराढ्यंभवं-स्वाढ्यम्भवम्, [B]सुराजम्भव:, वा भवता; — — —
भूयमान:-अनुभूयमानम्, भाव्यमान:, बुभूष्यमाण:, बोभूय्यमान:;
[4]भव:, [5]भाव:, प्रभव:, [6]परिभाव:[C]-परीभाव:-परिभव:, भाव:, बुभूष:-बोभूय:;

---

1. '**ओरावश्यके**' (3-1-125) इत्यावश्यकार्थे ण्यत्। 'लुम्पेदवश्यम: कृत्ये ......' (का. 6-1-144) इति अवश्यमो मकारस्य लोप:। आवश्यकार्थे ण्यदत्रेति प्रदर्शनार्थमत्र 'अवश्यम्' इति पदमुपात्तम्; न तु उपपदत्वेन; विनैवावश्यपदमपि प्रयोग: साधुरेव। तथा च प्रयुक्तम्—'विप्रेण शुचिना **भाव्यम्**–' (**प्र. कौमुद्यु**पात्तोऽयं श्लोक:) इति।
2. '**भुवो भावे**' (3-1-107) इति भावार्थे क्यप्। ब्रह्मभूयं गत:=ब्रह्मभावं गत इत्यर्थ:।
3. ईषदाद्युपपदेषु कर्तरि कर्मणि चोपपदयो: सतो: च्व्यर्थे गम्ये '**कर्तृकर्मणोश्च भूकृञोः**' (3-3-127) इति खल्प्रत्यय:। उपपदद्वयविधानात् **भाष्यकार**प्रयोगाच्च कर्तृवाचकस्य चोपपदस्य धातोरव्यवहितपूर्वप्रयोग इति ज्ञेयम्।
'**अकर्मत्वाद् भुवो भावे** कृञ: कर्मार्थ एव तत्।
च्व्यर्थयोगश्च वाच्योऽत्र भवतेष**त्पटुम्भवम्**॥
अपटोस्ते पटुत्वेन भवनं लध्वितीर्यते।
एवं **स्वाढ्यम्भवं** तेन, तया **दुस्सुन्दरिम्भवम्**॥" इति **प्र. सर्वस्व**श्लोकोऽत्रानुसन्धेय:।
4. 'ऋदोरप्' (3-3-57) इति भावेऽप्प्रत्यय:।
5. 'नपुंसके **भावे** क्त:' (3-3-114), '**भावे**' (3-3-18), '—**भाववचनात्**' (2-3-15) '**भाववचना**श्च' (3-3-11) इत्यादिनिर्देशप्रामाण्यात् उवर्णान्तत्वेन प्राप्तोऽप्प्रत्यय: पाक्षिक:; तेन, 'अबाधकान्यपि निपातनानि' (परि. 121) इति न्यायेन घञ्प्रत्ययोऽपि भवतीति **केचित्**। **भाष्ये** 'बाधकान्येव हि निपातनानि भवन्ति' (भाष्यम् 1-1-27) इत्युक्तत्वात् घञ्प्रत्यय एव भावार्थे न्याय्य:, न तु ओरप्प्रत्यय इति **परे** वदन्ति। सर्वथा रूपमेतदपि साध्विति ज्ञेयम्।
6. '**परौ भुवोऽवज्ञाने**' (3-3-55) इति विकल्पेन घञ्प्रत्ययोऽत्रावज्ञाने गम्ये। पक्षे औत्सर्गिकोऽप्प्रत्यय इति ज्ञेयम्। **परीभावः** इत्यत्र 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (6-3-122) इति दीर्घविकल्प:।

A. '**मित्रभूयं** गतस्तस्य रिपुहत्यां करिष्यसि॥' भ. का. 6.55.
B. 'सैन्याश्च यात: समयापि विव्यथे कथं **सुराजम्भव**मन्यथाऽथवा॥' शि. व. 12-52.
C. '**परिभावं** मृगेन्द्राणां कुर्वन्तो नगमूर्धसु।' भ. का. 7-54.

भवितुम्, भावयितुम्, बुभूषितुम्, बोभूयितुम्;

[1]भूतिः, [2]भूः, वर्षाभूः, दन्भूः-करभूः-कारभूः-पुनर्भूः, भावना, बुभूषा-बिभावयिषा, बोभूया;

भवनम्, [3]भुवनम्, आशितभवनम्, आशितभवनः, [4]आशितम्भवः[A] [ओदनः], भावनम्, बुभूषणम्, बोभूयनम्;

भूत्वा, [5]अग्रे भूत्वा-प्रथमं भूत्वा-पूर्वं भूत्वा, [6]मुखतो भूत्वा-मुखतोभूय वा तिष्ठति। [7]नाना भूत्वा-नानाभूय वा गतः। विना भूत्वा-विनाभूय वा गतः। द्विधा भूत्वा-द्वैधंभूय-वा गतः। [8]तूष्णींभूत्वा, तूष्णींभूय[B] वा गतः।

---

1. 'स्त्रियां क्तिन्' (3-3-94) इति क्तिनि, इण्निषेधे च रूपमेवम्। 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' (3-3-96) इत्यत्र **भू** इत्युपादानात् मन्त्र एव **भूति**-शब्दः प्रयोगार्ह इति न मन्तव्यम्; प्रत्ययस्य नित्त्वेनाद्युदात्तत्वे प्राप्ते उदात्तत्वार्थं सूत्रमिति समाधिः। स्पष्टं चैतत् **मा. धा. वृत्तौ**।
2. भवत्यस्यां सर्वमिति **भूः**। बाहुलकेन सम्पदादित्वात् (3-3-94) अधिकरणे स्त्रियां क्विप्।
3. ल्युटि रूपमेवम्। बाहुलकाद् गुणाभावोऽत्रेति ज्ञेयम्। **भट्टिकाव्यव्याख्याने** (1-1) प्राचीनैर्व्याख्याकारैरेवमेव समर्थितम्।
4. 'आशिते **भुवः** करणभावयोः' (3-2-45) इति करणे भावे चार्थे आशित-शब्दे उपपदे खच्प्रत्ययः। 'अरुर्द्विषदजन्तस्य—' (6-3-67) इति मुम्। आशितो भवत्यनेनेति **आशितम्भवः**=ओदनः। करणेऽत्र प्रत्ययः। आशितस्य भवनम्-**आशितम्भवं** वर्तते। भावेऽत्र प्रत्ययः।
5. 'विभाषाऽग्रेप्रथमपूर्वेषु' (3-4-24) इत्यनेन क्त्वाप्रत्ययोऽत्र विकल्पेन भवतीति ज्ञेयम्। एवं णमुलप्युत्तरत्रानेनैव सूत्रेणेति ज्ञेयम्।
6. तस्प्रत्यये स्वाङ्गवाचिन्युपपदे धातोरस्य, 'स्वाङ्गे तस्प्रत्यये कृभ्वोः' (3-4-61) इति क्त्वाप्रत्ययोऽत्रेति ज्ञेयम्। 'तृतीयाप्रभृतीनि—' (2 2-21) इति समासविकल्पः। तेन समासेऽत्र ल्यबपीति ज्ञेयम्। णमुलप्यनेनैव भवतीत्यपि बोध्यम्।
7. 'नाधार्थप्रत्यये च्व्यर्थे' (3-4-62) इति क्त्वाणमुलौ भवतः। च्व्यर्थकत्वात् अनाना नाना भूत्वा=**नानाभूत्वा गतः**, इति वृत्तिरत्र ज्ञेया। तृतीयाप्रभृतित्वात् (2-2-21) समासविकल्पः। धार्थप्रत्ययाः 'संख्यायाः विधार्थे धा' (5-3-42), 'द्वित्र्योश्च धमुञ्' (5-3-45) इति सूत्रविहिताः प्रत्ययाः।
8. '**तूष्णीमि भुवः**' (3-4-63) इति क्त्वाणमुलौ भवतः। अत्रापि समासविकल्पः। तेन ल्यबन्तप्रयोगोऽप्युपपन्नः।

A. '**आशितम्भव**मुत्कुष्टं वल्गितं शयितं स्थितम्।' भ. का. 6-107.

B. '**तूष्णीम्भूय** भयादासाञ्चक्रिरे मृगपक्षिणः॥' भ. का. 5. 95.



[1]अन्वग् भूत्वा-अन्वग्भूय वा गतः।

अनुभूय, अनुभाव्य, अनुबुभूष्य, अनुबोभूय्य;

अग्रेभावम्-प्रथमंभावम्-पूर्वम्भावम्, मुखतोभावम् वा गतः। नानाभावं-विनाभावम् वा गतः। द्वैधंभावं-द्विधाभावं वा गतः। तूष्णीं भावम् अन्वग्भावं वा गतः।

भावम् २ } भावम् २ } बुभूषम् २ } बोभूयम् २; }
भूत्वा २ } भावयित्वा } बुभूषित्वा २ } बोभूयित्वा २; }

[2]भूमिः, [3]भूरिः, [4]अद्भुतम्, [5]भावित्रम्।

## (1166) "भू प्राप्तौ" (X-चुरादिः-1845. सक. सेट्. आत्म.) [अ]

### आधृषीयः।

---

1. 'अन्वच्यानुलोम्ये' (3-4-64) इत्यनेनान्वक्छब्द उपपदे धातोरस्यानुलोम्ये द्योत्ये क्त्वाणमुलौ भवतः। तृतीयाप्रभृतित्वात् (2-2-21) समासविकल्पः। **आनुलोम्यम्**=अनुकूलता।
2. '**भुवः** कित्' (द. उ. 1-16) इति मिप्रत्ययः, स च कित्। तेन गुणो न। भवन्त्यस्यां भावा इति **भूमिः**।
3. 'अदिशदिभू—' (द. उ. 1.34) इति क्रिन्प्रत्ययः। भवतीति **भूरिः**=बहुः, सुवर्णं च।
4. 'अदि **भुवो** डुतच्' (द. उ. 6-22) इति डुतच्प्रत्ययः।
5. '**भूवादि**—' (द. उ. 8-91) इत्यादिना णित्रन्प्रत्ययः। **भावित्रम्**=विधानम्।

[अ] '**भू प्राप्तौ, आत्मनेपदी**' इति चुरादिषु (आधृषीयेषु) पठ्यते। आधृषीयत्वेनास्य णिज्विकल्पः। णिजभावपक्षे आत्मनेपदमेव, परस्मैपदमेव इति चात्र पक्षद्वयम्। णिच्सन्नियोगेनैवात्मनेपदविधानम्, णिजभावपक्षे तु परस्मैपदमेवेति **पुरुषकारे** सप्रमाणं साग्रहं च साधितम्। णिजभावपक्षे आत्मनेपदमेवास्य धातोरित्यत्र **क्षीरस्वामिना** 'याचितारश्च नः सन्तु दातारश्च **भवामहै**।' इति श्लोकः कश्चिदुदाहृतः। 'मनोरमा मा **भवते**—' इति श्लोकोऽप्यात्मनेपदानुकूलत्वेन **सुधाकरेण** भूवादिसूत्रे (1-3-1) उदाहृत इति **मा. धातुवृत्त्यादिग्रन्थात्** ज्ञायते। '**भवते** शपि तत्रैव—' (श्लो. 3) इति वदन् **देवोऽ**प्यत्रानुकूलः। '**वर्षाभ्वश्च**' (6-4-84) इत्यत्र 'वर्षासु भवति, वर्षा वा **भवते**' इति **कैयट**विवरणमप्यत्रानुकूलम्। "**अन्ये** तु **पुराणव्याकरणेषु** '**भुवो णिङ्**' इति सूत्रस्य णिङो ङकारः प्रत्ययान्तादात्मनेपदार्थः, प्रकृतौ तु केवलादिति **श्रीभद्रादिभिः** व्याख्यानात् **तन्त्रान्तर**वचनानुरोधेन सन्नियोगन्यायो बाध्यते इत्याहुः।" इति **धातुवृत्ति**वचनादात्मनेपदं णिजभावपक्षेऽपि प्रामाणिकम्, बहुवैयाकरणसम्मतं चेति ज्ञेयम्।

'सत्तायां भवति, प्राप्तौ णिचि भावयते तङि ।
**भवते** शपि तत्रैव भावयत्यवकल्कने ॥' (श्लो. 3.) इति **देवः** ।

भावकः-विका, बिभावयिषकः-षिका, भावकः-विका, बुभूषकः-षिका, बोभूयकः-यिका ; इत्यादीनि सर्वाण्यपि रूपाणि ण्यन्तप्रकृतिकसन्नन्तं विना भौवादिक**भू**धातुवत् (1165) ज्ञेयानि । अस्य धातोः आधृषीयत्वेन णिचो वैकल्पिकत्वम् । ण्यन्तात् सनि सर्वाणि रूपाणि अवकल्कनार्थक**भावयति**वत् (1164) बोध्यानि ।

(1167) "**भूष अलङ्कारे**" (I-भ्वादिः-682. अक. सेट्. पर.) [अ]

'........**भूषति** भूषयेत् ॥ **अलङ्कृतौ**........।' (श्लो. 172-3) इति **देवः** ।

भूषकः-षिका, भूषकः-षिका, बुभूषिषकः-षिका, बोभूषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**चूषति**वत् (552) बोध्यानि ।

(1168) "**भूष अलङ्करणे**" (X-चुरादिः-1731. सक. सेट्. उभ.)

'........भूषति **भूषयेत्** ॥ अलङ्कृतौ........।' (श्लो. 172-3) इति **देवः** ।

भूषकः-षिका, बुभूषयिषकः-षिका ; इत्यादीनि सर्वाणि रूपाणि चौरादिक**कूटयति**वत (240) बोध्यानि । विभूषणम्[A] ।

(1169) "**भृजी भर्जने**" (I-भ्वादिः-178. सक. सेट्. आत्म.)

**भर्जनम्**=पाकविशेषः ।

'........भर्जने **भर्जते भृजेः** ।' (श्लो. 68) इति **देवः** ।

भर्जकः-भर्जिका, भर्जकः-र्जिका, बिभर्जिषकः-बरीभृजकः-जिका ; इत्यादीनि

---

[अ] '—'अङ्काः सूनाः **परिभूषन्त्यश्वम्** ।' (तै. सं. 4-6-9) इत्यत्र **भट्टभास्करः** — 'सूना=मांसविकर्षणसाधनानि अस्थ्यादीनि, अश्वं **परिभूषन्ति**=परितो भवन्ति ।' भवतेः (भूषतेः ?) लोटि सिपि रूपमुक्त्वा, "**भूषयते**र्वा शपः 'छन्दस्युभयथा' (3-4-117) इत्यसार्वधातुकत्वात् णिलोपः ।" इत्याह । तदस्य धातोरस्मरणात् । न चायं नास्तीति शक्यते वक्तुम्—सर्वेषु **व्याख्यानेषु** अविवादेनोपादानात् ।" इति **मा. धा. वृत्ति**पर्यालोचनया **केचन**ामुं धातुं न पठन्तीति ज्ञायते । सर्वत्र धातुपाठेषु भ्वादावपि धातोरस्य पाठदर्शनात्. **देवादिभिः** प्राचीनैरुपादानाच्चास्माभिरप्ययमुपात्त इति ज्ञेयम् ।

A. '**विभूषणा**न्युन्मुमुचुः क्षमायां पेतुर्बभञ्जुर्वलयानि चैव ।' भ. का. 3-22.



सर्वाण्यपि रूपाणि भौवादिक**गर्जति**वत् (422) बोध्यानि । निष्ठायाम्-[1]भृक्तम्[A]-क्तवान्, घञि-[2]भर्गः, [3]भृज्यम्, [4]अवश्यभर्ज्यम् इमानि रूपाण्यधिकान्यत्रेति विशेषः ।

(1170) "**भृञ् भरणे**" (1-भ्वादिः-898. सक. अनि. उभ.)

'पूरणेऽपि-इति **भट्टिः** ।' इति **धा. का. व्याख्याने** (2-29) ।

'भृञो बिभर्ति बिभृते **भरते भरती**त्यपि ।
ॠदन्तस्य भृणातीति भर्त्सने श्नि तथा भरः ॥' (श्लो. 28) इति **देवः** ।

भारकः-रिका, भारकः-रिका, [5]बिभरिषकः-बुभूर्षकः-षिका, [6]बेभ्रीयकः-यिका ;

भर्ता-त्री, भारयिता-त्री, बिभरिषिता-बुभूर्षिता-त्री, बेभ्रीयिता-त्री ;

भरन्-न्ती, भारयन्-न्ती, बिभरिषन्-बुभूर्षन्-न्ती ; —

---

1. 'श्वीदितो निष्ठायाम्' (7-2-14) इतीण्निषेधः । जकारस्य कुत्वम् ।
2. 'अकर्तरि च कारके संज्ञायाम्' (3-3-19) इति घञ् । निष्ठायामनिट्त्वात्, 'चजोः—' (7-3-52) इति कुत्वम् । **भर्गः**=शिवः ।
3. '**ऋदुपधात्—**' (3-1-110) इति कर्मणि क्यप् ।
4. "**अवश्यभर्ज्यम्** । 'ण्य आवश्यके' (7-3-65) इति कुत्वाभावः ।" इति **क्षीरतरङ्गिण्यां** दृश्यते । तत्र, 'कृत्याश्च' (3-3-171) इत्यनेन सूत्रेण आवश्यकार्थे कृत्यप्रत्ययस्य सामान्येन विधानेऽपि, यथासम्भवं तत्तद्धातुगतं प्रातिस्विकरूपं निमित्तमादायैव कृत्यप्रत्ययानामुत्पत्तिः । ततश्च प्रकृते, **भृजी**धातोरनुबन्धविनिर्मुक्तस्य ऋकारोपधत्वात्, हलन्तलक्षणं ण्यतं बाधित्वा ऋदुपधलक्षणः क्यबेव प्राप्तः । क्यपश्च कित्त्वात् गुणवृद्धिप्रभृतीनामप्राप्तेः प्रकृतलक्ष्ये **भर्ज्यम्** इति गुणस्य प्राप्त्यभावात् **अवश्यभृज्यम्** इत्येव आवश्यकार्थेऽपि रूपं स्यादिति युक्तमुत्पश्यामः ।
5. 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' (7-2-49) इत्यनेन सन्नन्ते इड्विकल्पः । इट्पक्षे रूपमेवम् । इडभावपक्षे सनो झलादित्वात् 'इको झल्' (1-2-9) इति कित्त्वे, 'अज्झनगमां सनि' (6-4-16) इति दीर्घे, 'उदोष्ठ्यपूर्वस्य' (7-1-102) इत्युत्वरपरत्वयोः, 'हलि च' (8-2-77) इति दीर्घे च **बुभूर्षकः** इति रूपम् । एवं सन्नन्ते सर्वत्र रूपद्वयस्य निष्पत्तिः ।
6. यङि, द्विर्वचनात् पूर्वं, परत्वेन 'रीङ् ऋतः' (7-4-27) इति '**भृ**' इत्यत्र ऋकारस्य रीङादेशे, द्विर्वचनादिषु कृतेषु अभ्यासे गुणे च रूपम् । एवं यङन्ते सर्वत्र ज्ञेयम् ।

A. 'समृज्जितं कन्दम**भृक्त**सत्फलान्यदद्भिरेकत्र यदेजितं जनैः ॥' धा. का. 1.24.

[1]भरिष्यन्-न्ती-ती, भारयिष्यन्-न्ती-ती, बिभरिषिष्यन्-बुभूर्षिष्यन्-न्ती-ती ; –
भरमाणः, भारयमाणः, बिभरिषमाणः-बुभूर्षमाणः, बेभ्रीयमाणः ;
भरिष्यमाणः, भारयिष्यमाणः, बिभरिषिष्यमाणः-बुभूर्षिष्यमाणः, बेभ्रीयिष्यमाणः;
[2]मेदिनीभृत्[A]-भृतौ-भृतः ; — — —
भृतम्-तवान् , भृतकी,[B] भारितः, बिभरिषितः-बुभूर्षितः, बेभ्रीयितः-तवान ;
[3]जारभरः, [4]उदकभारः, वंशभारः [5]आत्मम्भरिः[C], [6]कुक्षिम्भरिः-उदरम्भरिः,[D]
[7]शाकम्भरी, [8]अब्भ्रम् ,

---

1. ‘ऋद्धनोः स्ये’ (7-2-70) इतीडागमः । एवं शानजन्तेऽपि ज्ञेयम् ।
2. ‘क्विप् च’ (3-2-76) इति कर्मण्युपपदे क्विप् । ‘ह्रस्वस्य–’ (6-1-71) इति तुक् ।
3. जारं भरतीति **जारभरः** । स्त्रियां **जारभरा**=कुलटा । पचादिषु ‘**जारभरा**’ इति पाठात् कर्मोपपदे अणपवादोऽच्प्रत्ययः । **चारभरा** इति कुत्रचिद् दृष्टः पाठः । स चाप्रामाणिकः ।
4. उदकं भरतीति **उदकभारः** । ‘कर्मण्यण्’ (3-2-1) इत्यण् । ‘मन्थौदनसक्तुबिन्दुवज्र**भार**हारवीवधगाहेषु च’ (6-3-60) इत्यनेन उदकशब्दस्य उदादेशो विकल्पेन भवति ।
5. ‘फलेग्रहि**रात्मम्भरि**श्च’ (3-2-26) इत्यनेन, आत्मानं भरतीत्यर्थे आत्मन्शब्दस्योपपदस्य मुमागमः इन्प्रत्ययश्च **भृञो** निपात्येते । **आत्मम्भरिः**=उदरैकपरायणः ।
6. ‘**भृञः** कुक्ष्यात्मनोर्मुम् च’ (वा. 3-2-26) इति **वार्तिकात् कुक्षिम्भरिः** इत्यपि साधुः । अत्रैव **वार्तिके** चकारात **उदरम्भरिः** इत्याद्यपि साधुरिति वदन्ति । वस्तुतस्तु ‘स्वे पुषः’ (3-4-40) इत्यत्र यथा स्वशब्देन स्वशब्दपर्यायाणां **रै, गो**शब्दानां ग्रहणम्, तद्वदत्रापि (3-2-26) **आत्म**शब्देन शरीरावयववाचकेन शरीरावयववाचकानां उदर-कुक्षिप्रभृतीनामपि ग्रहणमित्यङ्गीकृत्य **उदरम्भरिः कुक्षिम्भरिः** इत्यादिप्रयोगाणां साधुत्वं साध्यमिति ज्ञेयम् ।
7. शाकं भरतीति **शाकम्भरी**=पार्वती । ‘**भृञः** कुक्ष्यात्मनोर्मुम् च’ (वा. 3-2-26) इत्यत्र **चकारात्** मुम् इन् च भवति । स्त्रियाम्, ‘कृदिकारादक्तिनः’ (ग. सू. 4-1-45) इति ङीष् ।
8. अपो भरतीति **अब्भ्रम्** । कर्मण्युपपदे ‘मूलविभुजादिभ्य उपसंख्यानम्’ (वा. 3-2-5) इति कप्रत्ययः । ‘इको यणचि’ (6-1-77) इति यण् ।

A. ‘प्रायेण नीचानपि **मेदिनीभृतो** जनः समेनैव पथाऽधिरोहति ।’ शि. व. 12-46.
B. ‘घूर्जरान् पारशीकांश्च प्रागेव **भृतकी**कृतान् ।’ या. अ. 22-89.
C. ‘**आत्मम्भरि**श्चरति यूथमसेवमानः ।’ इति **भाष्ये** (3-2-26) उपात्तम् ।
D. ज्योत्स्नाकरम्भ**मुदरम्भरय**श्चकोराः ॥’ अनर्घराघवे 2.83.



[1]मालभारी-उत्पलमालभारी, [2]विश्वम्भरः-विश्वम्भरा,
[3]ग्रामभर्ता, [4]बभ्रिः, भारः, बिभरिषुः-बुभूर्षुः[A], [5]बेभ्रियः ;
भर्तव्यम् , भारयितव्यम् , बिभरिषितव्यम्-बुभूर्षितव्यम् , बेभ्रीयितव्यम् ;
भरणीयम् , भारणीयम् , बिभरिषणीयम्-बुभूर्षणीयम् , बेभ्रीयणीयम् ;
[6]भृत्यः, भार्याः (क्षत्रियाः), [7]संभृत्यः-संभार्यः, [8]सम्भर्यम् , भार्यम् ,
बिभरिष्यम्-बुभूर्ष्यम् , बेभ्रीय्यम् ;
ईषद्भरः-दुर्भरः-सुभरः ; — —
[9]भ्रियमाणः, भार्यमाणः, बिभरिष्यमाणः-बुभूर्ष्यमाणः, बेभ्रीय्यमाणः ;
[10]भारः, भारः, बिभरिषः-बुभूर्षः, बेभ्रीयः;
भर्तुम् , भारयितुम्, बिभरिषितुम्-बुभूर्षितुम् , बेभ्रीयितुम् ;

---

1. ‘सुप्यजातौ—’ (3-2-78) इति णिनिः । ‘इष्टकेषीका**मालानां** चिततूल**भारिषु**’ (6-3-65) इति पूर्वपदस्य ह्रस्वः । ‘पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च’ (परिभाषा-30) इत्यनेन तदुत्तरपदस्य च ह्रस्वः । तेन ‘**उत्पलमालभारी**’ इत्यपि साधुः ।
2. ‘संज्ञायां **भृतॄ**—’ (3-2-46) इति खच् । ‘खित्यनव्ययस्य’ (6-3-66) इति वर्तमाने, ‘अरुर्द्विषदजन्तस्य—’ (6-3-67) इति मुम् । **विश्वम्भरः**=विष्णुः । स्त्रियां टापि **विश्वम्भरा**=भूमिः । ‘**विश्वम्भरा**, साम रथन्तराख्यं पतिंवरा चापि धनञ्जयश्च ।’ इति **प्रक्रियासर्वस्वे** ।
3. ‘तृन्’ (3-2-135) इति ताच्छील्ये तृन् । याजकादित्वात् (2-2-9) समासः ।
4. तच्छीलादिषु कर्तृषु, ‘आदृगमहनजनः किकिनौ लिट् च’ (3-2-171) इत्यनेन किः किन् वा प्रत्ययः । तस्य च लिड्वद्भावेन द्विर्वचनादिके कृते, ‘इको यणचि’ (6-1-77) इति यणादेशः । **बभ्रिः**=आयुधविशेषाणां भरणशाली ।
5. यङन्तात् पचाद्यचि, यङो लुकि संयोगपूर्वकत्वात् यणं बाधित्वा, इयङादेशे रूपमेवम् ।
6. ‘**भृञो**ऽसंज्ञायाम्’ (3-1-112) इत्यत्र ‘असंज्ञायाम्’ इत्युक्तेः, संज्ञायां क्यपि तुकि **भृत्यः**=कर्मकरः । असंज्ञायां तु **भार्यः** इत्येव । **भार्याः** नाम क्षत्रियाः ।
7. ‘संपूर्वाद्वा’ (वा. 3-1-112) इत्यनेन वा क्यप् । पक्षे ण्यत् ।
8. अत्र बाहुलकात् यत्प्रत्यये, गुणः । **सम्भर्यम्** गवामयनरूपः सत्रविशेषः । **क्वचित्**, ‘**सम्भार्यम्**’ इत्येव गवामयनस्य नाम दृष्टम् ।
9. यकि, ‘रिङ् शयग्लिङ्क्षु’ (7-4-28) इति रिङादेशः ।
10. धातोरस्य ह्रस्वऋकारान्तत्वात् घञेव न्याय्यः; **क्षीरस्वामी** तु “‘ऋदोरप्’ (3-3-57) **भरः** ।” इत्युक्तवान् । तच्चिन्त्यम् ।

A. ‘त्वां जिज्ञापयिषू शक्तिं **बुभूर्षू** नु जगन्ति किम् ।’ भ.का. 9.37.

भृतिः-सम्भृतिः, [1]उपभृत्, [2]भृत्या[A]-भार्या, [3]पङ्कभारिका, भारणा, बिभरिषा-बुभूर्षा, बेभ्रीया;
भरणम्- [4]आभरणम्, भारणम्, बिभरिषणम्-बुभूर्षणम्, बेभ्रीयणम्;
भृत्वा, भारयित्वा, बिभरिषित्वा-बुभूर्षित्वा, बेभ्रीयित्वा;
सम्भृत्य, सम्भार्य, प्रबिभरिष्य-प्रबुभूर्ष्य, प्रबेभ्रीय्य;
[5]अग्रेभारं व्रजति, अग्रे भृत्वा व्रजति ।

भारम् २, } भारम् २, } बिभरिषम् २-बुभूर्षम् २, } बेभ्रीयम् २; }
भृत्वा २, } भारयित्वा २, } बिभरिषित्वा २-बुभूर्षित्वा २, } बेभ्रीयित्वा २; }

[6]भरुः, [7]बभ्रुः, [8]भरतः, [9]अवभृथः, [10]भर्म.

## (1171) "डु भृञ् धारणपोषणयोः"

(III-जुहोत्यादिः-1087. सक. अनि. उभ.)

---

1. उप भ्रियतेऽनेनेत्यर्थे 'सम्पदादिभ्यः—' (वा. 3-3-108) इति भावे क्विप् भवति । अश्वत्थकाष्ठनिर्मितः दर्शपूर्णमासिको यज्ञपात्रविशेषः=**उपभृत्**।
2. 'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' (3-3-99) इति क्यप् स्त्रियां भवति, तुक् च । असंज्ञायां तु **भार्या** इत्येव । 'क्तिन्नपीष्यते' (काशिका 3-3-94) इति वचनात्, 'कर्मणि **भृतौ**' (3-2-22) इति निर्देशाच्च क्तिन्नपि साधुः । तेन **भृतिः-सम्भृतिः** इत्यपि सिध्यति ।
3. 'पर्यायार्हर्णोत्पत्तिषु ण्वुच्' (3-3-111) इति अर्हणार्थे ण्वुच्प्रत्ययो भवति । **पङ्कभारिका**मर्हति गौः ।
4. आ=समन्तात् भ्रियते इत्या**भरणम्**। 'कृत्यल्युटो बहुलम्' (3-3-113) इत्यत्र बहुलग्रहणात् कर्मणि ल्युट् ।
5. 'विभाषाऽग्रेप्रथमपूर्वेषु' (3-4-24) इति वा णमुल् । पक्षे क्त्वाऽपि । एवं **प्रथमंभारं-प्रथमं भृत्वा, पूर्वंभारं-पूर्वं भृत्वा** इत्यपि बोध्यम् ।
6. 'भृमृ—' [द. उ. 1.92.] इति उप्रत्ययः । प्राणिनो भरतीति **भरुः**=समुद्रः ।
7. 'कुर्भ्रश्च' [द. उ. 1.107] इति कुप्रत्ययः, चकारात् द्वित्वं च । **बभ्रुः**=कपिलो वर्णः, नकुलो वा ।
8. '**भृद**—' (द. उ. 6-14) इत्यतच्प्रत्यये रूपमेवम् ।
9. 'अवे **भृञः**' (द. उ. 6-28) इति अवोपपदादस्मात् क्थन्प्रत्ययः । **अवभृथः**= यज्ञान्तस्नानम् ।
10. 'मनिन्' (द. उ. 6-73) इति मनिन्प्रत्ययः । **भर्म**=भरणम् ।

A. '**कुमारभृत्या**कुशलैरनुष्ठिते भिषग्भिराप्तैरथ गर्भ**भर्मणि**।' रघु. 3-12.



'**भृञो बिभर्ति बिभृते** भरते भरतीत्यपि ।
ऋदन्तस्य भृणातीति भर्त्सने श्नि तथा भरः ॥' (श्लो. 28) इति **देवः** ।

भारकः-रिका, भारकः-रिका, [1]बुभूर्षकः-र्षिका, बेभ्रीयकः-यिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**भरति**वत् (1170) ज्ञेयानि । [2]बिभ्रत्-बिभ्रतौ-बिभ्रतः, बिभ्राणः, [3]भृत्रिमम्, [4]भरथुः, [कवचं] [5]बिभ्राणः, [6]विश्वंभरः-[A]विश्वम्भरा, [7]भार्यम्, [8]इषुभृत्-देहभृत्, [B]उदरंभरिः, [9]भृतिः, [10]भृङ्गारः इत्यादीनि रूपाण्यस्य भवन्तीति विशेषः ।

---

1. 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' (7-2-49) इत्यत्र **भर** इति शपा निर्देशात्, अस्य न ग्रहणम् । तेनात्र नेड्विकल्पः । 'इको झल्' (1-2-9) इति सनः कित्त्वात्, 'अज्झनगमां सनि' (6-4-16) इति दीर्घः । 'उदोष्ठ्यपूर्वस्य' (7-1-102) इत्युत्वम् । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
2. शतरि शपः, 'जुहोत्यादिभ्यः—' (2-4-75) इति श्लुः । 'श्लौ' (6-1-10) इति द्विर्वचनम् । '**भृञा**मित्' (7-4-76) इत्यभ्यासस्येकारः । उत्तरखण्डे यणादेशः । 'नाभ्यस्ताच्छतुः' (7-1-78) इति नुम्निषेधः । एवमेव शानजन्तेऽपि प्रक्रियोह्या ।
3. भावे, '**ड्वितः** क्त्रिः' (3-3-88) इति क्त्रिप्रत्ययः । तस्य, 'तेन' इति वर्तमाने निर्वृत्तार्थे, 'क्त्रेर्मम्नित्यम्' (4-4-20) इति नित्यं मप् तद्धितः ।
4 धातुममुं **द्रमिडाः** '**टु भृञ्**' इति पठन्तीति **क्षीरस्वामि**वाक्यादवगम्यते । तदानीम्, '**ट्वितो**ऽथुच्' (3-3-89) इति भावेऽथुच्प्रत्ययः । **भरथुः**=भारः । "**सुधाकरः** पुनरथुज्विधौ '**टु भृञ्**' इत्युक्त्वा, '**टु भृञ्**' इति **द्रमिडाः** पठन्ति । तेन **भृत्रिमम्**, **भरथुः** इति द्वयमिच्छति **नन्दी**।' इति । '**टु डु भृञ्**' इत्यनुबन्धद्वयमिति **शाकटायनः**।" इति **पुरुषकार**वचनमिह ध्येयम् ।
5 'ताच्छील्यवयोवचनशक्तिषु चानश्' (3-2-129) इत्यनेनात्र वयोवचने चानश्-प्रत्ययः । कवचधारणयोग्यं वयः प्राप्तवान् इत्यर्थः ।
6. 'संज्ञायां भृतॄ—' (3-2-46) इत्यादिना खच्प्रत्ययः । विश्वं बिभर्तीति **विश्वंभरः** विष्णुः ।
7. 'ऋहलोः—' (3-1-124) इति कर्मणि ण्यत् ।
8. 'क्विप् च' (3-2-76) इति कर्मण्युपपदे क्विप् । तुगागमः ।
9. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां क्तिच् । **भृतिः**=वेतनम् ।
10. 'शृङ्गारभृङ्गारौ' (द. उ. 8-66) इति आरन्प्रत्ययः, नुगागम-गुणागमौ गुणाभावश्च निपात्यन्ते । बिभर्त्युदकं मङ्गलार्थिभिरिति **भृङ्गारः**=उदककलशः ।

A. 'ततो वलिन्दमप्रख्यं कपि**विश्वम्भरा**धिपम् ।' भ. का. 6.108.
B. 'उञ्छवृत्ति**रुदरम्भरि**रासीत् तादृशेन तपसैव कृतान्तः ॥' या. अ. 21.63.

(1172) **" भृड निमज्जने "** (VI-तुदादिः-1395. अक. सेट्. पर.)

**कुटादिः ।**

**आत्रेयमैत्रेयादीनां** मतेन **मा. धा.** वृत्ति-सि.कौमुद्यादिषु पठितोऽयं धातुः । तत्र **मा. धा.** वृत्तिपर्यालोचनया **मैत्रेयः** धातुममुं संवरणार्थकमेव पठतीत्यपि ज्ञायते ।

भर्डकः-र्डिका, भर्डकः-र्डिका, बिभृडिषकः-षिका, बरीभृडकः-डिका; इत्यादीनि सर्वाणि रूपाणि तौदादिक**कुडति**वत् (247) ज्ञेयानि ।

(1173) **" भृशि भाषार्थः "** (X-चुरादिः-1788. सक. सेट्. उभ.)

**आस्वदीयः ।**

भाषार्थानामकर्मकत्वमेव न्याय्यम् । तथापि 'आस्वदः सकर्मकात्' (ग. सू. चुरादौ) इति वचनात्, सम्भवत्कर्मणामेव णिजुत्पत्तेरत्रापि सकर्मकत्वमस्य धातोः कथञ्चिदुन्नेयम् । चुरादिषु भाषार्थकधातुदण्डके **स्वामि-काश्यपा**नुसारेण लिखितेषु पञ्चदशसु धातुषु मध्येऽयमप्येकः **मा. धा. वृत्तौ** पठितः । इदित्करणादस्य णिज्विकल्पः ।

भृंशकः-शिका, बिभृंशयिषकः-षिका, भृंशकः-शिका, बिभृंशिषकः-षिका, [1]बरीभृंशकः-शिका; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कुंशयति**वत् (232) ज्ञेयानि ।

(1174) **" भृशु अधःपतने "** (IV-दिवादिः-1224. अक. सेट्. पर.)

भर्शकः-र्शिका, भर्शकः-र्शिका, बिभर्शिषकः-षिका, बरीभृशकः-शिका; इत्यादीनि सर्वाण्यपि रूपाणि विशेषरूपाणि विना, दैवादिक**कृश्यति**वत् (254) ज्ञेयानि । [2]भृशम्, [3]भर्शित्वा-भृष्ट्वा,

1. णिजभावपक्षे यङन्ते सर्वत्राभ्यासे, 'रीग् ऋत्वत इति वक्तव्यम्' (वा. 7-4-90) इति रीगागमो ज्ञेयः ।

2. '**इगुपधज्ञा—**' (3-1-135) इति कर्तरि कप्रत्ययः । यद्यपि कप्रत्ययान्तानां पुँल्लिङ्गत्वमेव न्याय्यम्, तथापि लिङ्गस्य लोकाश्रयत्वात् नपुंसकलिङ्गत्वमत्रेति ज्ञेयम् । अत एवास्य '**भृशम्**' इति शब्दस्य क्रियाविशेषणत्वे, अव्ययत्वमप्याहुः ।

3. '**उदितो** वा' (7-2-56) इति क्त्वायामिड्विकल्पः । इट्पक्षे, 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधाद् गुणः । इडभावपक्षे षत्वे च **भृष्ट्वा** इति रूपमिति ज्ञेयम् ।



[1]भृष्टम्-भृष्टः-भृष्टवान्, [2]भृशाया, [A]भृश्यन्-न्ती, इत्यादीन्यस्य रूपाण्यधिकानि भवन्तीति विशेषः ।

(1175) **" भृषु हिंसासंघातयोः "** (I-भ्वादिः-707. सक. सेट्. पर.)

भ्वादिषु 'पृषु वृषु मृषु सेचने' इत्यत्र **क्षीरस्वामि**संमतः पाठोऽयम् । **मा. धा. वृत्ता**वप्यत्र प्रकरणे **काश्यप**सम्मतपाठत्वेनोद्धृतः—'मृषु हिंसा-संक्लेशनदानेषु' इति पाठः '**भृषु**—' इत्येव स्यादिति प्रतिभाति । **क्षीरस्वामि**ग्रन्थादन्यत्र कुत्राप्ययं धातुर्नोपलभ्यते ।

भर्षकः-र्षिका, भर्षकः-र्षिका, बिभर्षिषकः-षिका, बरीभृषकः-षिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**पर्षति**वत् (1054) ज्ञेयानि ।

(1176) **" भॄ भर्त्सने "** (IX-क्र्यादिः-1491. अक. सेट्. पर.)

**प्वादिः, ल्वादिश्च ।**

'—भरणे' इत्यप्येके । '**भॄ भर्जने च**' इति **क्षीरस्वामी ।**

'ऋदन्तस्य **भृणाती**ति भर्त्सने श्रि, तथा **भरः** ॥' (श्लो-28) इति **देवः ।**

तत्र भरणार्थे, भर्जनार्थे च सकर्मकोऽयमिति ज्ञेयम् । [बोभुरकः-रिका; भारकः-रिका, भारकः-रिका, बुभूर्षकः-र्षिका, बिभरिषकः-बिभरीषकः-षिका, इत्यादीनि सर्वाण्यपि रूपाणि प्रातिस्विकरूपाणि विना जौहोत्यादिक**पिपर्ति**वत (1055) ज्ञेयानि । [3]भृणन्[B]-ती, [4]भूर्णम्-भूर्णः-भूर्णवान्, भावेऽप्प्रत्यये **भरः** इति रूपाण्यस्य भवन्तीति विशेषः ।

1. क्त्वायामस्य धातोर्विकल्पितेट्कत्वात्, निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्निषेधः । षत्वष्टुत्वयो रूपमेवम् ।

2. अभृशो भृशो भवतीत्यर्थे, '**भृशा**दिभ्यो भुव्यच्वेः—' (3-1-12) इत्यनेन क्यङ् । 'सनाद्यन्ता धातवः' (3-1-32) इति धातुसंज्ञा । 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः । स्त्रियाम्, 'अ प्रत्ययात्' (3-3-102) इति भावादौ प्रत्ययान्तत्वनिमित्तकोऽकारप्रत्ययः ।

3. शतरि, '**क्र्यादिभ्यः**—' (3-1-81) इति श्ना विकरणप्रत्ययः । तस्य शित्त्वेन सार्वधातुकत्वम् । तेन ङित्त्वात् गुणवृद्धिनिषेधः । '**श्नाऽभ्यस्तयोरातः**' (6-4-112) इत्याकारलोपः । '**प्वादीनां** ह्रस्वः' (7-3-80) इति प्रकृतेः ह्रस्वः । 'ऋवर्णान्नस्य—' (वा. 8-4-1) इति णत्वम् ।

4. निष्ठायाः कित्त्वात्, 'श्र्युकः किति' (7-2-11) इतीण्निषेधे, 'उदोष्ठ्यपूर्वस्य' (7-1-102) इत्युकारे, रपरत्वे, दीर्घे णत्वे च रूपमेवमिति ज्ञेयम् ।

A. '........ **भृश्यद्**भ्रंशनवर्शकाकृशदयः तृष्णाहरो हृष्य मे ॥' धा. का. 2.66.

B. 'तत्र स्परीतुमनसं रुषमावृणन्तम् अम्बष्ठमुन्मद**भरं** स **भृणन्** बभाषे ।' धा.का.3.7.

(1177) "**भेषृ भये**" (I-भ्वादिः-883. अक. सेट्. उभ.) '—गतौ' इति **मैत्रेयः** । '—अगतौ इत्येके' इति **धा. का.** (2·27) । भेषकः-षिका, भेषकः-षिका, [1]बिभेषिषकः-षिका, [2]बेभेषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**केपति**वत् (261) ज्ञेयानि । अस्यो-भयपदित्वात् शतरि भेषन्-न्ती, भेषिष्यन्-न्ती-ती, क्विपि-[3]भेट्-भेड्-भेषौ-भेषः इति रूपाणि सम्भवन्तीति विशेषः ।

(1178) "**भ्यस भये**" (I-भ्वादिः-628. अक. सेट्. आत्म.) "—'भेषृ—' इति **चन्द्रः** ।" इति **क्षीरस्वामी** । भ्यासकः-सिका, भ्यासकः-सिका, बिभ्यसिषकः-षिका, बाभ्यसकः-सिका ; इत्यादीनि सर्वाण्यपि रूपाणि आदादिक**कशति**वत् (178) ज्ञेयानि । अस्य भौवादिकत्वाच्छानचि भ्यसमानः इति, क्विपि, सुभ्यः-सुभ्यसौ-सुभ्यसः इति, युचि— [4]भ्यसनः इति च रूपाणीति विशेषः । [A]भ्यसितः ।

(1179) "**भ्रक्ष अदने**" (I-भ्वादिः-892. सक. सेट्. उभ.) [अ] भ्रक्षकः-क्षिका, भ्रक्षकः-क्षिका, बिभ्रक्षिषकः-षिका, बाभ्रक्षकः-क्षिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**तक्षति**वत् (691) ज्ञेयानि ।

---

1. सन्नन्ते सर्वत्र, द्वित्वे, अभ्यासस्य ह्रस्वः । स च, '**एच** इग्घ्रस्वादेशे' (1-1-48) इति शास्त्रात् इकाररूपः ।
2. यङन्ते द्वित्वे, अभ्यासस्य ह्रस्वे, 'गुणो यङ्लुकोः' (7-4-82) इत्यभ्यासस्य गुणेन पुनरेकार इति ज्ञेयम् ।
3. क्विपि, षकारस्य जश्त्वेन डकारः, तस्य चर्त्वविकल्पः ।
4. '**अनुदात्तेत**श्च हलादेः' (3-2-149) इति तच्छीलतद्धर्मतत्साधुकारिष्वर्थेषु युच्प्रत्ययेऽनादेशः ।

A. '...........सूतो ययाम समरा**भ्यसितान्** तुरङ्गान् ॥' धा. का. 1.79.

[अ] भ्वादिषु **क्षीरस्वामि**प्रभृतिभिः **भ्रक्ष** इत्ययं धातुरदनार्थकः पठित इति **मा. धा. वृत्ति-पुरुषकार** (श्लो. 177) ग्रन्थाभ्यामवगम्यते । परंतु मुद्रित-**क्षीरतरङ्गिण्यां** भ्वादिषु **भ्लक्ष** इत्येव पाठो दृश्यते । सोऽपि पाठो मुद्रणाशुद्ध्या स्यादिति भाति ; यतः चुरादिषु **क्षीरस्वामिनैव** भक्षधातुं प्रकृत्य, 'भक्षतेर्घञ् भक्षः ।' इत्युक्तम्, भ्वादिषु भक्षधातुस्तेन न पठितश्च । अतोऽत्र **क्षीरतरङ्गिण्यां** भ्वादौ अदनार्थको धातुः, **पुरुषकारधातुवृत्तिकार**पक्षानुसारेण **भ्रक्ष** इति वा स्यात्, अथवा **क्षीरस्वामिनैव** चुरादिष्वनूद्यमानेन पाठेन **भक्ष** इति वा स्यात् । नतु **भ्लक्ष** इति—इति युक्तमुत्पश्यामः । **सिद्धान्तकौमुद्या**-द्यनुसारेण धातुरयमस्माभिरत्र विलिखितः ।



(1180) "**भ्रण शब्दार्थः**" (I-भ्वादिः-452. अक. सेट्. पर.) भ्राणकः-णिका, भ्राणकः-णिका, बिभ्रणिषकः-षिका, बम्भ्रणकः-बंभ्रणकः-णिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**क्वणति**वत् (293) ज्ञेयानि । [A]भ्रणितम् ।

(1181) "**भ्रन्शु अवस्रंसने**" (I-भ्वादिः-756. अक. सेट्. आत्म.) भ्रंशकः-शिका, भ्रशकः-शिका, बिभ्रंशिषकः-षिका, [1]बनीभ्रंशकः-बाभ्रशकः-शिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**ध्वंसति**वत् (942) ज्ञेयानि । निष्ठायाम् [2]भ्रष्टम्-भ्रष्टः-भ्रष्टवान्, क्तिनि—भ्रष्टिः, क्त्वायाम्—भ्रंशित्वा-भ्रष्ट्वा, क्विपि-[3]वाहाभ्रट्-वाहभ्रड्-वाहभ्रट्-भ्रशौ-भ्रशः, इति च रूपाणीति विशेषः ।

(1182) "**भ्रन्शु अधःपतने**" (IV-दिवादिः-1225. अक. सेट्. पर.) भ्रंशकः-शिका, भ्रंशकः-शिका, बिभ्रंशिषकः-षिका, बाभ्रशकः-शिका ; इत्यादीनि सर्वाण्यपि रूपाणि प्रातिस्विकरूपाणि विना भौवादिक**ध्वंसति**वत् (942) ज्ञेयानि । [4]भ्रश्यन्-न्ती, वाहभ्रट्-वाहाभ्रट्, [5]भ्रष्टम्-भ्रष्टः-भ्रष्टवान्,

---

1. भ्वादिषु 'स्रन्सु ध्वन्सु भ्रन्सु अवस्रंसने' इति पठ्यते । अत्र 'भ्रन्सु' इत्यस्य स्थाने **मैत्रेय-क्षीरस्वामि-बोधिन्यास-सम्मताकार-कविकल्पद्रुमकार**-प्रभृतिभिः '**भ्रन्शु**' इति पाठोऽङ्गीकृतः । **सिद्धान्तकौमुद्या**दिषु पक्षभेदेन पाठोऽयमुररीकृतश्च । एवमेव, 'नीग् वञ्चुस्रंसुध्वंसु**भ्रंसु**—' (7-4-84) इत्यत्रापि एतैस्सर्वैरपि **भ्रन्शु** इत्येव पाठोऽङ्गीकृतः । एवञ्चात्र यङन्ते, एतेषां मते नीगागमे, यङ्निमित्तक उपधानकारलोपे च रूपमेवम् । **अन्येषां** मते तु 'दीर्घोऽकितः' (7-4-83) इत्यभ्यासस्य दीर्घे **बाभ्राशकः** इत्यादीनि रूपाणि यङन्ते सर्वत्र ज्ञेयानि ।
2. उदित्त्वेन क्त्वायामिड्विकल्पनान्निष्ठायामिण्निषेधः । उपधानकारलोपः, शकारस्य षत्वम्, निष्ठातकारस्य ष्टुत्वेन टकार इति चात्र प्रक्रिया ज्ञेया । एवमेव क्तिन्नादिष्वपि प्रक्रियोह्या ।
3. वाहोऽश्वः । तस्माद् भ्रंशते इत्यर्थे 'क्विप् च' (3-2-76) इति क्विपि शकारस्य 'व्रश्च—' (8-2-36) इत्यादिना षकारे, तस्य जश्त्वेन डकारे चर्त्वविकल्पे, 'अन्येषामपि दृश्यते' (6-3-137) इति पूर्वपदस्य दीर्घे च **वाहाभ्रट्** इति रूपम् । क्वचिद् **वाहभ्रट्** इति पाठो दृष्टः, तदानीं दीर्घः पूर्वपदस्य नेति ज्ञेयम् ।
4. 'दिवादिभ्यः श्यन्' (3-1-69) इति श्यन् विकरणप्रत्ययः ।
5. क्त्वायामिड्विकल्पनान्निष्ठायामिण्निषेधे, षत्वे ष्टुत्वे च रूपमेवम् ।

A. 'वनात् कुमाराः क्वणिताग्र्यवेणवो व्रणद्विषाण**भ्रणिता**भ्रमाययुः ॥' धा.का. 1.58.

[1]भ्रंशित्वा-भ्रष्ट्वा । [2]भ्रंशनः, इमानि रूपाणि विशेषेण संभवन्तीति विशेषः । [A]भ्रंशनम् ।

(1183) "**भ्रन्सु अवस्रंसने**" (I-भ्वादिः-756. अक. सेट्. आत्म.)

भ्रंसकः-सिका, भ्रंसकः-सिका, बिभ्रंसिषकः-षिका, [3]बनीभ्रसकः-सिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**ध्वंसति**वत् (942) ज्ञेयानि । क्विपि [4]पर्णभ्रः-पर्णभ्रसौ-पर्णभ्रसः इति रूपमिति विशेषः । [B]भ्रस्तः ।

(1184) "**भ्रमु चलने**" (I-भ्वादिः-850. अक. सेट्. पर.) **ज्वलादिः** ।

'चलने भ्रमति भ्रम्येत् शमादेर्भ्राम्यति भ्रमेत् ॥' (श्लो. 147) इति **देवः** ।

[5]भ्रमकः-मिका, [6]भ्रमकः-मिका, बिभ्रमिषकः-षिका, बम्भ्रमकः-बंभ्रमकः-मिका, इत्यादीनि सर्वाण्यपि रूपाणि दैवादिक**क्लाम्यति**वत् (283) बोध्यानि । शतरि-[7]भ्रमन्-[C]भ्रम्यन्,

---

1. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पे रूपद्वयं बोध्यम् ।
2. तच्छीलादिषु कर्तृषु, '**चलन**शब्दार्थात्—' (3-2-148) इति युच् ।
3. **काशिकावृत्त्यादिषु** प्राचीनग्रन्थेषु, **मा. धा. वृत्त्यादिषु** धातुविषयकग्रन्थेषु च सर्वत्र, 'नीग् वञ्चुस्रंसुध्वंसु**भ्रंसु**—' (7-4-84) इत्यत्राविगीतपाठः **भ्रंसु** इत्येव । तेनात्र यङन्ते नीगागमे, उपधानकारलोपे च **बनीभ्रसकः** इत्यादीनि रूपाणि इति ज्ञेयम् ।
4. क्विपि, उपधानकारलोपे, धातुसकारस्य रुत्वविसर्गयोश्च रूपमेवम् ।
5. '**नोदात्तोपदेशस्य मान्तस्या**नाचमेः' (7-3-34) इति वृद्धिनिषेधः ।
6. 'जनीजॄष्क्नसुरञ्जोऽ**मन्ताश्च**, (ग. सू. भ्वादौ) इत्यमन्तत्वेन मित्त्वात् '**मितां** ह्रस्वः' (6-4-92) इति णौ परतः उपधायाः ह्रस्वः ।
7. शतरि 'वा भ्राशभ्लाश**भ्रमु**—' (3-1-70) इत्यनेन वा श्यन् । तेन रूपद्वयं बोध्यम् ।

A. '...... मृश्यद्**भ्रंशन**वर्शकाकृशदयस्तृष्णाहरो हृष्य मे ॥' धा. का. 2. 66.

B. '**अभ्रस्त**विस्रम्भजुषा बलेन समं प्रवृत्तो भुवनाभिवृद्ध्यै ।' धा. का. 2. 3.

C. 'तापं मथन्ती कणिका वमन्ती **भ्रम्य**त्तरङ्गा क्षरति स्फुटं या ॥' धा. का. 2.23. (अत्र **धातुकाव्ये, क्षीरतरङ्गिण्यां** च शतरि, **भ्राम्यन्** इत्येव दीर्घपाठः परिदृश्यते। परं तु दैवादिकस्यैव **भ्रमु**धातोः 'शमामष्टानां दीर्घः श्यनि' (7-3-74) इति दीर्घविधानाद् भौवादिकस्यास्य दीर्घाप्रसक्तेः मुद्रणाशुद्धिरेव ग्रन्थद्वयेऽपि प्रकृतस्थले इति मनीषयाऽस्माभिः **भ्रम्यन्** इति शास्त्रीयपाठ एवादृत इति ज्ञेयम् ।)



[1]भ्रमः-भ्रमः, युचि-[2]भ्रमणः, क्विपि-[3]अग्रेभ्रूः-सुभ्रूः-सुभ्रुवौ-सुभ्रुवः, [4]भ्रमिः, [5]उरभ्रः, [6]भृमिः, [7]भ्रमरः, इत्यादीनि रूपाण्यस्य विशेषेण भवन्तीति विशेषः ।

(1185) "**भ्रमु अनवस्थाने**"

(IV-दिवादिः-1205. अक. सेट्. पर.) **शमादिः** ।

**अनवस्थानम्**=देशान्तरगमनम् ।

'चलने भ्रमति भ्रम्येत्, **शमादेर्भ्राम्यति भ्रमेत्** ॥' (श्लो. 147) इति **देवः** ।

भ्रमकः-मिका, भ्रमकः-मिका, बिभ्रमिषकः-षिका, बम्भ्रमकः-बंभ्रमकः-मिका ; इत्यादीनि सर्वाण्यपि रूपाणि दैवादिक**क्लाम्यति**वत् (283) ज्ञेयानि । [8]भ्रमी[A],

---

1. '**ज्वलितिकसन्तेभ्यो** णः' (3-1-140) इति कर्तरि वा णप्रत्ययः । पक्षेऽच्प्रत्ययश्च । णप्रत्ययपक्षेऽपि, 'नोदात्तोपदेश—' (7-3-34) इति वृद्धिनिषेधः । **क्षीरस्वामी** तु "णे **भ्रामः** । **भ्रमः** इति **दुर्गः** ।" इति रूपे प्रदर्शितवान् । 'निषेधाश्च बलीयांसः' (परिभाषा 122) इति न्यायेन वृद्धिनिषेध एवात्र णप्रत्ययपक्षेऽपि न्याय्य इति प्रतिभाति ।
2. '**चलन**शब्दार्थाद्—' (3-2-148) इति तच्छीलादिषु कर्तृषु युच् । णत्वम् ।
3. क्विपि, 'ऊङ् च गमादीनामिति वक्तव्यम्' (वा. 6-4-40) इति **वचनेन** अनुनासिकलोपे, धात्वकारस्य ऊकारादेशे च रूपमेवम् । **काशिका**दिषु **अग्रेभ्रूः** इत्युदाहृतम् । **भाष्ये** तु प्रकृतसूत्रे (6-4-40) **भ्रूः** इत्येवोदाहृतम् ।
4. 'इक् कृष्यादिभ्यः' (वा. 3-3-108) इति भावे स्त्रियामिक्प्रत्ययः ।
5. उरसा भ्रमतीति **उरभ्रः** = मेषः । 'अन्येष्वपि दृश्यते' (3-2-101) इति डप्रत्यये, पृषोदरादित्वात् (6-3-109) उरश्शब्दसकारस्य लोपे च रूपमेवम् । **केचित्तु** उरु भ्रमतीति व्युत्पत्तिं कृत्वा, पृषोदरादित्वादेव उरुशब्दस्थरेफोत्तरोकारस्याकारे च रूपं साधयन्ति ।
6. '**भ्रमेः** सम्प्रसारणं च' (द. उ. 1-49) इतीन्प्रत्यये, प्रत्ययस्य कित्त्वेन सम्प्रसारणे च रूपमेवम् । **भृमिः**= वायुः ।
7. 'अर्त्तिकमि**भ्रमि**—' (द. उ. 8-62) इत्यरन्प्रत्यये रूपमेवम् । **भ्रमरः**=अलिः ।
8. तच्छीलादिषु, कर्तृषु, '**शमित्यष्टाभ्यो** घिनुण्' (3-2-141) इति घिनुण्प्रत्ययः । "अत्र **आत्रेयः**—' 'अभिधानवशात् अकर्मकादेव अयमिष्यते । तेन, '**भ्रमिता** वनम्' इत्यत्र 'तृन्' (3-2-135) इति सूत्रेण तृन्नेव । ' इति । एवञ्च अयं सकर्मकोऽकर्मकश्चेत्यनेनासूचि ॥" इति **मा. धा. वृत्ता**वुक्तमिहानुसन्धेयम् ।

A. '**भ्रमी** कदम्बसंभिन्नः पवनः शमिनामपि ।' भ. का. 7.5.

[1]भ्रमन्-भ्राम्यन्-न्ती-ती, [2]बभ्रमिवान्-भ्रेमिवान्, इति रूपाण्यस्य भवन्तीति विशेषः ।

## (1186) " भ्रस्ज पाके " (VI-तुदादिः-1284. सक. अनि. उभ.)

' भृज्जते भृज्जति भ्रस्जेः भर्जने भर्जते भृजेः ।' (श्लो. 68) इति देवः ।

[3]भर्जकः-र्जिका, भ्रज्जकः-ज्जिका, भर्जकः-र्जिका, भ्रज्जकः-ज्जिका, [4]बिभर्जिषकः-बिभर्क्षकः-बिभ्रज्जिषकः-बिभ्रक्षकः-क्षिका, [5]बरीभृज्जकः- ज्जिका ;

---

1. ' वा भ्राशभ्लाशभ्रमु—' (3-1-70) इति श्यन्विकल्पः। तेन पक्षे औत्सर्गिकः ' कर्तरि शप् ' (3-1-68) इति शप्। श्यन्पक्षे, '**शमामष्टानां** दीर्घः श्यनि' (7-3-74) इति दीर्घः। तेन रूपद्वयम्।
2. कर्तरि लिटः क्वसौ, ' वा जॄभ्रमुत्रसाम् ' (6-4-124) इत्येत्वाभ्यासलोपौ विकल्पेन भवतः। पक्षे, द्विर्वचने ' वस्वेकाजाद्घसाम् ' (7-2-67) इतीडागमे **बभ्रमिवान्** इति रूपम्। तेन रूपद्वयं ज्ञेयम्।
3. ण्वुलि, '**भ्रस्जो** रोपधयो रमन्यतरस्याम् ' (6-4-47) इति रेफोपधावर्णयोर्निवृत्तिः, रमागमश्च विकल्पेन भवतः। रमागमे रेफोत्तराकार उच्चारणार्थस्सन् इत्संज्ञ लब्ध्वा लुप्यति। रमागमाभावपक्षे, उपधाभूतस्य सकारस्य श्चुत्वेन शकारे, तस्यां 'झलां जश् झशि' (8-4-53) इति जश्त्वेन जकारः। एवमेव रूपद्वयं तृजादिषु, ण्यन्ते च ज्ञेयम्।
4. सन्नन्ते सर्वत्र, ' सनीवन्तर्ध**भ्रस्ज**—' (7-2-49) इत्यादिना इड्विकल्पः। इट्पक्षे इडभावपक्षे च रमागमस्य वैकल्पिकत्वम्। तेन सन्नन्ते चातूरूप्यं सर्वत्रेति ज्ञेयम्। इडभावपक्षे रमागम-रेफोपधानिवृत्तिपक्षे च, ' व्रश्च**भ्रस्ज**—' (8-2-36) इत्यादिना धातुजकारस्य षकारे, ' षढोः कः सि' (8-2-41) इति षकारस्य ककारे, सनः षत्वे च **बिभर्क्षकः** इति रूपम्। इडभावपक्ष एव रेफोपधानिवृत्ति-रमागमाभावपक्षे, ' स्कोः संयोगाद्योरन्ते च ' (8-2-29) इत्यनेन झल्परकत्वेन सकारस्य निवृत्तिः, षत्वकत्वादिकं चेति ज्ञेयम्।
5. यङन्ते, '**भ्रस्जा**देशात् सम्प्रसारणं (पूर्वं) विप्रतिषेधेन ' (वा. 6-4-47) इति वचनात्, ' ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चति**भृज्जतीनां** ङिति च ' (6-1-16) इति सम्प्रसारणे पूर्वरूपे, द्विर्वचने, अभ्यासे ' उरत् ' (7-4-66) इत्यनेनाकारः, स च रपरः। 'रीग् ऋत्वत इति वक्तव्यम्' (वा. 7-4-90) इति रीगागमः। उत्तरखण्डे सकारस्य जश्त्वेन दकारः, तस्य श्चुत्वेन जकारः इति **काशिका** (6-1-16) " नच श्चुत्वे दत्वमसिद्धम् ; '—**भृज्जतीनाम्**—' (6-1-16) इति निर्देशात्। " इति **व्याख्यातारो**ऽवाहुः। **मा. धा. वृत्तौ** तु " ..... सकारस्यैव श्चुत्वे शकारः, तस्य, ' झलां जश् झशि ' (8-4-53) इति जश्त्वेन जकारेऽपि रूपं सेत्स्यति।" इत्युक्तम् ; एतदेव साध्विति प्रतिभाति। यङन्ते द्विजकारविशिष्टं रूपमेव सर्वत्रेति ज्ञेयम्। स्पष्टमिदं **भाष्यप्रदीपोद्योते** (6-4-47)।



[1]भर्ष्टा-भर्ष्ट्री-भ्रष्टा-भ्रष्ट्री, भर्जयिता-भ्रज्जयिता-त्री, बिभर्जिषिता-बिभर्क्षिता-बिभ्रज्जिषिता-बिभ्रक्षिता-त्री, बरीभृज्जिता-त्री ; — —

[2]भृज्जन्-न्ती-ती, भर्जयन्-भ्रज्जयन्-न्ती, बिभर्जिषन्-बिभर्क्षन्-बिभ्रज्जिषन्-बिभ्रक्षन्-न्ती ; — —

भर्क्ष्यन्-भ्रक्ष्यन्-न्ती-ती, भर्जयिष्यन्-भ्रज्जयिष्यन्-न्ती-ती, बिभर्जिषिष्यन्-बिभर्क्षिष्यन्-बिभ्रज्जिषिष्यन्-बिभ्रक्षिष्यन्-न्ती-ती ; —

भृज्जमानः, भर्जयमानः-भ्रज्जयमानः, बिभर्जिषमाणः-बिभर्क्षमाणः-बिभ्रज्जिषमाणः-बिभ्रक्षमाणः, बरीभृज्ज्यमानः ; — —

भर्क्ष्यमाणः-भ्रक्ष्यमाणः, भर्जयिष्यमाणः-भ्रज्जयिष्यमाणः, बिभर्जिषिष्यमाणः-बिभर्क्षिष्यमाणः-बिभ्रज्जिषिष्यमाणः-बिभ्रक्षिष्यमाणः, बरीभृज्जिष्यमाणः;

धानाभृट् [3]प्रभृट्-प्रभृड्-प्रभृज्जौ-प्रभृज्जः ; — —

[4]भृष्टम्[A]-भृष्टवान्, भर्जितः-भ्रज्जितः, बिभर्जिषितः-बिभर्क्षितः-बिभ्रज्जिषितः-बिभ्रक्षितः, बरीभृज्जितः-तवान् ; — —

---

1. तृचि, रेफोपधानिवृत्तौ रमागमे च जकारस्य षकारे ष्टुत्वे **भर्ष्टा** इति रूपम्। रमभावपक्षे तु, ' स्कोः—' (8-2-29) इति सकारलोपे षत्वष्टुत्वयोश्च **भ्रष्टा** इति रूपमिति ज्ञेयम्। एवमेव तव्यदादिष्वपि प्रक्रियोह्या।
2. शतरि, तुदादित्वेन कर्तरि शप्रत्यये, तस्य सार्वधातुकत्वेन, ' सार्वधातुकमपित् ' (1-2-4) इति ङिद्वद्भावः। तेन सम्प्रसारणादिषु रूपमेवम्। एवं शानच्यपि प्रक्रिया ज्ञेया।
3. क्विपि, पदान्तनिमित्तके संयोगादिलोपे, सम्प्रसारणे, जकारस्य षत्वे जश्त्वचर्त्वयोश्च रूपमेवम्। **धानाभृट्**=भ्राष्ट्रम्। **काशिकायाम्** (8-2-36) उदाहृतमेतत् पदम्।
4. निष्ठायाम्, सम्प्रसारणे पूर्वरूपे षत्वष्टुत्वयोश्च रूपम्। एवमेव क्त्वा-क्तिन्प्रभृतिष्वपि प्रक्रिया ज्ञेया। **क्षीरतरङ्गिण्यां** ' प्रसारणविषये नेष्यते—**भृष्ट**लुचि (ञ्चि?) तल्लिङ्गात्। ' इति वाक्यं लक्ष्यते। तस्यायमर्थः— संप्रसारणयोग्यस्थले '**भ्रस्जो** रोपधयो रमन्यतरस्याम् ' (6-4-47) इति सूत्रस्य प्रवृत्तिर्न; तत्र निदानं तु राजदन्तादिगणे (2-2-31) **भृष्ट**लुचि (ञ्चि?) तपदस्य निर्देशरूपात् लिङ्गात्—इति। अत्र गणे (2-2-31) **काशिकादिषु भृष्टलुञ्चितम्** इत्येव पदं पठितम्, **गणरत्नमहोदधौ** राजदन्तादिगणे (पु 120-121) "पूर्वं लुञ्चितम्=अपनीतम्, पश्चाद् **भृष्टम्**=पक्वम् **भृष्ट**लुञ्चितम्। यथा—' यद्**भृष्ट**लुञ्चितशशेव शशाङ्कपात्री। " इत्युक्तमिहावधेयम्।

A. '......**प्रभृष्ट**पललान् क्षिपन् अरिमर्तिं कृषन् माधवः।' धा. का. 2. 72.

भर्जः-भ्रज्जः, भर्जः-भ्रज्जः, बिभर्जिषुः-बिभर्क्षुः-बिभ्रज्जिषुः-[A]बिभ्रक्षुः, [1]बाभ्रज्जः ;
भर्ष्टव्यम्-भ्रष्टव्यम्, भर्जयितव्यम्-भ्रज्जयितव्यम्, बिभर्जिषितव्यम्-बिभर्क्षितव्यम्-बिभ्रज्जिषितव्यम्-बिभ्रक्षितव्यम्, बरीभृज्जितव्यम् ;
भर्जनीयम्-भ्रज्जनीयम्, भर्जनीयम्-भ्रज्जनीयम्, बिभर्जिषणीयम्-बिभर्क्षणीयम्-बिभ्रज्जिषणीयम्-बिभ्रक्षणीयम्, बरीभृज्जनीयम् ;
[2]भर्ग्यः-भ्रद्ग्यः, भर्ज्यम्-भ्रज्ज्यम्, बिभर्जिष्यम्-बिभर्क्ष्यम्-बिभ्रज्जिष्यम्-बिभ्रक्ष्यम्, बरीभृज्ज्यम् ;
ईषद्भर्जः-दुर्भर्जः-सुभर्जः, ईषद्भ्रज्जः-दुर्भ्रज्जः-सुभ्रज्जः ;
भृज्ज्यमानः, भर्ज्यमानः-भ्रज्ज्यमानः, बिभर्जिष्यमाणः-बिभर्क्ष्यमाणः-बिभ्रज्जिष्यमाणः-बिभ्रक्ष्यमाणः, बरीभृज्ज्यमानः ;
भर्गः-भ्रद्गः, भर्जः-भ्रज्जः, बिभर्जिषः-बिभर्क्षः-बिभ्रज्जिषः-बिभ्रक्षः, बरीभृज्जः ;
भर्ष्टुम्-भ्रष्टुम्, भर्जयितुम्-भ्रज्जयितुम्, बिभर्जिषितुम्-बिभर्क्षितुम्-बिभ्रज्जिषितुम्-बिभ्रक्षितुम्, बरीभृज्जितुम् ;
भृष्टिः, भर्जना-भ्रज्जना, बिभर्जिषा-बिभर्क्षा-बिभ्रज्जिषा-बिभ्रक्षा, बरीभृज्जा ;
भर्जनम्-भ्रज्जनम्, भर्जनम्-भ्रज्जनम्, बिभर्जिषणम्-बिभर्क्षणम्-बिभ्रज्जिषणम्-बिभ्रक्षणम्, बरीभृज्जनम् ;
भृष्ट्वा, भर्जयित्वा-भ्रज्जयित्वा, बिभर्जिषित्वा-बिभर्क्षित्वा-बिभ्रज्जिषित्वा-बिभ्रक्षित्वा, बरीभृज्जित्वा ;
[3]प्रभृज्ज्य, प्रभर्ज्य-प्रभ्रज्ज्य, प्रबिभर्जिष्य-प्रबिभर्क्ष्य-प्रबिभ्रज्जिष्य-प्रबिभ्रक्ष्य,

1. यङन्तात् पचाद्यचि, 'यङोऽचि च' (2-4-74) इति यङो लुकि, लुका लुप्ते स्थले स्थानिवत्त्वप्रतिषेधेन यङ्निमित्तकङित्त्वानाश्रयणात् सम्प्रसारणादिकं न भवति। आर्धधातुकपरत्वाभावात् रमागमरेफोपधानिवृत्त्यादिकमपि न भवति। तेनात्र यथाशास्त्रम्, अभ्यासे 'दीर्घोऽकितः' (7-4-83) इति दीर्घः। उत्तरखण्डे सकारस्य श्चुत्वजश्त्वे च भवत इति ज्ञेयम्।
2. धातोरस्य निष्ठायामनिट्त्वेन, ण्यति, रोपधनिवृत्तिरमागमपक्षे, 'चजोः कु घिण्ण्यतोः' (7-3-52) इति जकारस्य कुत्वे **भर्ग्यम्** (:) इति रूपम्। रमागमाद्यभावपक्षे तु, 'पूर्वत्रासिद्धम्' (8-2-1) इति शास्त्रात् जश्त्वात् पूर्वं 'चजोः—' (7-3-52) इति कुत्वे, पश्चात् सकारस्य जश्त्वेन दकारे च **भ्रद्ग्यम्** (:) इति रूपमिति ज्ञेयम्। एवमेव घञ्यपि रूपद्वयस्य निष्पत्तौ निदानं ज्ञेयम्।
3. ल्यपः स्थानिवत्त्वेन कित्त्वात् सम्प्रसारणे, सकारस्य श्चुत्वे च रूपमेवम्।

A. 'आश्वास्याक्षः क्षणाल्लोकान् **बिभ्रक्षुरिव** तेजसा।
रुषा **बिभ्रज्जिषु**प्रख्यं कपिं बाणैरवाकिरत् ॥' भ. का. 9. 34.



प्रबरीभृज्ज्य ;

भर्जम् २-भ्रज्जम् २, भृष्ट्वा २, } भर्जम् २-भ्रज्जम् २, भर्जयित्वा २-भ्रज्जयित्वा २, } बिभर्जिषम् २-बिभर्क्षम् २-बिभ्रज्जिषम् २-बिभ्रक्षम् २, बिभर्जिषित्वा २-बिभर्क्षित्वा २-बिभ्रज्जिषित्वा २-बिभ्रक्षित्वा २, } बरीभृज्जम् २ ; बरीभृज्जित्वा २ ; }
[1]भृगुः, [2]भृज्जनम्, [3]भ्राष्ट्रम्।

(1187) "**टु भ्राजृ दीप्तौ**" (I-भ्वादिः-181. 823 अक.सेट्, आत्म.) [अ]

भ्राजकः-जिका, भ्राजकः-जिका, बिभ्राजिषकः-षिका, बाभ्राजकः-जिका ;

1. 'प्रथिम्रदि**भ्रस्जां** सम्प्रसारणं सलोपश्च' (द. उ. 1. 113) इत्यनेन कुप्रत्यये सम्प्रसारणे सकारलोपे, न्यङ्क्वादित्वात् (7-3-53) कुत्वे च रूपमेवम्। भृज्जति= परिपक्वविज्ञानो भवतीति **भृगुः**=महर्षिविशेषः।
2. 'भूसूधू**भ्रस्जिभ्य**श्छन्दसि' (द. उ. 5.25) इति क्युन्प्रत्यये सम्प्रसारणे च रूपम्। बाहुलकात् लोकेऽपि प्रयोगः।
3. **भ्रस्जिगमि—**' [द. उ. 8-80] इत्यादिना ष्ट्रन्प्रत्ययः वृद्धिश्च, बाहुलकात् रमागमो न। उपधासकारस्य लोपस्तु भवत्येव। धातुजकारस्य षत्वे ष्टुत्वे च रूपमेवम्। **भ्राष्ट्रम्**=भर्जनसाधनीभूतः पात्रविशेषः।

[अ] भ्वादौ प्रथमतः, '**भ्राजृ दीप्तौ**' इति पठित्वा, पुनर्घटादौ '**टु भ्राजृ दीप्तौ**' इति पठ्यते। इमौ उभावपि दीप्त्यर्थकौ ऋदितौ चेति ज्ञायते। **न्यासकार**स्तु '**भ्राज दीप्तौ**' इत्येव '**भ्राज**भासधुर्वि—' (3-2-177) इत्यत्र पपाठ। **पदमञ्जर्यामपि** (7-4-3) '**भ्राज** दीप्तौ' इत्येव पाठो लक्ष्यते। '**भ्राजधातोः** ऋदित्करणमपाणिनीयम्।' इति **काशिका** (7-4-3) अत्र ज्ञेया। '...... ऋदित्त्वमनुदात्तेत्त्वमात्रफलम्।' इति **मा. धा. वृत्तिः**। ऋदित्त्वस्य तिङन्त एवोपयोगादस्माभिरुभावपि धातू समुच्चित्योपात्तौ। घटादिष्वेव फणादयः सप्त धातवोऽन्ते पठिताः। तत्र '**टु भ्राजृ**—' इत्येव पाठः **न्यासकार-मैत्रेयरक्षित-पुरुषकार-सायण-सिद्धान्तकौमुद्या**दिसम्मतः। **क्षीरस्वामी** तु '**भ्राजृ**, टु भ्राश्टृ—' इत्यादि पठित्वा, 'टुरुभयस्य—**इत्येके**। 'ट्वितोऽथुच्' (3-3-89) **भ्राजथुः**।" इत्याह। **चान्द्राणां काशकृत्स्नीयानां** च धातुपाठे **भ्राज** इत्येव घटादौ पठितः न तु '**टु भ्राजृ**' इति **क्षी. टीकायां** प्रतिपादितम्। एतत् सर्वमत्रानुसन्धेयम्। 'अवश्यपठितव्येन फ[फा?]णादिकेन **भ्राजते** इत्यादीनां सिद्धेः इह (=घटादिभिन्नस्थले भ्वादिषु) पाठोऽनार्ष इव।' इति **न्यासकार**वचनं **मा. धा. वृत्तौ** उपात्तमप्यत्रावधेयम्।

इत्यादीनि सर्वाण्यपि रूपाणि प्रातिस्विकरूपाणि विना, भौवादिक**काशति**वत् (186) ज्ञेयानि। क्विपि—[1]विभ्राक्[A]-विभ्राग्-विभ्राजौ-विभ्राजः, [2]भ्राजिष्णुः[B], [3]विभ्राट्-विभ्राड्-विभ्राजौ-विभ्राजः, [4]भ्राजथुः, [5]बभ्राजिवान्, बभ्राजिवान्-भ्रेजिवान्, [6]भ्राता, [7]नभ्राट्, भ्राष्टिः, इति रूपाण्यस्य सम्भवन्तीति विशेषः।

---

1. '**भ्राज**भासधुर्वि—' (3-2-177) इत्यादिना तच्छीलादिषु कर्तृषु क्विप्प्रत्ययः। 'चोः कुः' (8-2-30) इति पदान्ते कुत्वम्। एतच्च घटादिष्वपठितस्य '**भ्राजृ** दीप्तौ, इति भौवादिकस्य भ्राजतेः क्विपि रूपमिति ज्ञेयम्।
2. 'भुवश्च' (3-2-138) इत्यत्र चकारेणास्मादपि धातोः इष्णुच्प्रत्यय इति **काशिका-दिषू**च्यते। अत्रापि **भ्राजिष्णु**रिति द्विविधस्यापि **भ्राजतेः** सम्पद्यते इति **बहवः**। '**भ्राजिष्णुना** लोहितचन्दनेन—' इति **काशिका**मुपादाय **पदमञ्जर्याम्**—'नैतद् **भाष्ये** समाश्रितम्।' इत्युक्तम्। इदानीं **भाष्य**कोशेषु 'भुवश्च' (3-2-138) इति सूत्रस्य **भाष्य**मेव नोपलभामहे। **धातुकाव्यव्याख्याने** तु (2-20) घटादिकस्य '**टु भ्राजृ—**' इति धातोः इष्णुच्प्रत्यय इति प्रतिपादितम्।
3. '**टु भ्राजृ—**' इत्यस्य ताच्छीलिके क्विपि, 'व्रश्चभ्रस्जसृजमृजयजराज**भ्राज—**' (8-2-36) इत्यनेन षत्वे, जश्त्वचर्त्वयोश्च रूपमेवम्। क्विब्विधायके सूत्रे **काशिकायाम्** (3-2-177) **विभ्राट्** इत्युदाहृतत्वेऽपि, सूत्रे घटादिपठितयोः तदितरयोरुभयोरपि **भ्राज**धात्वोर्ग्रहणमेव; षत्वं तु 'व्रश्चभ्रस्ज—' (8-2-36) इत्यत्र राजधातुसाहचर्यात् फणादि (घटादि) **भ्राजते**रेव इत्यादिकं प्रकृतस्थले **मा. धा. वृत्तौ** स्फुटम्।
4. 'ट्वितोऽथुच्' (3-3-89) इति भावेऽथुच्प्रत्यये रूपमेवम्।
5. कर्तरि लिटः क्वसौ घटादेरन्यत्र पठितस्य **भ्राजते** रूपमेवम्। घटादिकस्य क्वसौ तु, 'फणां च सप्तानाम्' (6-4-125) इत्येत्वाभ्यासलोपविकल्पः। तेन रूपद्वयमिति ज्ञेयम्।
6. 'भ्राजते इति **भ्राता**' इति रूपं **क्षीरतरङ्गिण्यां**, **दशपाद्युणादिवृत्तौ** च (द. उ. 2.3) **भ्राजते**स्तृनि, तृचि वा, पृषोदरादित्वात् (6-3-109) जकारलोपे च साधितम्। **भाष्ये** (1-2-68) तु 'यदि तावद् बिभर्तीति **भ्राता**' इत्युक्तत्वात् बिभर्तेर्धातोरेव **भ्रातृ**शब्दनिष्पादनं न्याय्यमिति प्रतिभाति।
7. 'न भ्राजते इति **नभ्राट्**। नञ्समासे, '**न भ्राण्न**पात्—' (6-3-75) इत्यादिना नञः प्रकृतिभावः।

A. 'अभ्रेजि **विभ्राभि**नीर्जितैश्च यत् कदाऽप्यशोचद्भिरशेषजन्तुभिः।' धा. का. 1.25.

B. 'कृष्णोऽपि रेजे पथि गोपबालैः **भ्राजिष्णुभिः** भ्राशितपार्श्वदेशः।' धा. का. 2.20.



(1188) "**टु भ्राशृ दीप्तौ**" (I-भ्वादिः-824. अक. सेट्. आत्म.)

'भ्राशते भ्लाशते दीप्तौ भ्राश्यते भ्लाश्यते तथा॥' (श्लो. 167) इति **देवः**।

भ्राशकः-शिका, भ्राशकः-शिका, बिभ्राशिषकः-षिका, बाभ्राशकः-शिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**काशति**वत् (186) ज्ञेयानि। [1]भ्राश्यमानः-भ्राशमानः, इति शानचि रूपमिति विशेषः। [2]भ्राशथुः, [A]भ्राशितः।

(1189) "**भ्री भये**" (IX-क्र्यादिः-1505. सक. अनि. पर.)

**प्वादिः, ल्वादिश्च।**

'— **भरणे**' इति **मैत्रेयक्षीरस्वामि**प्रभृतयः पठन्ति।

भ्रायकः-यिका, भ्रायकः-यिका, बिभ्रीषकः-षिका, बेभ्रीयकः-यिका;
भ्रेता-त्री, भ्राययिता-त्री, बिभ्रीषिता-त्री, बेभ्रीयिता-त्री;
इत्यादीनि सर्वाण्यपि रूपाणि क्रैयादिक**प्लिनाति**वत् (1081) ज्ञेयानि। [3]भ्रीणम्-णः-णवान्, भ्रीतम्-तः-तवान्, [4]भ्रिणन्[B]-न्ती इति विशेषः।

(1190) "**भ्रुड संवरणे**" (VI-तुदादिः-1395. सक. सेट्. पर.)

**कुटादिः।**

**मैत्रेयक्षीरस्वामि**मतेनायं लिख्यतेऽस्माभिः। यद्यपि **सिद्धान्तकौमुद्यादिषु**, **मा. धा. वृत्तौ** च न पठ्यते, तथापि **मा. धा. वृत्तौ** **चुड**धातुप्रकरणे (तुदादौ) उद्धृतेन **मैत्रेयरक्षित**सम्मतपाठेन संवाददर्शनादृह्यते इत्यपि ज्ञेयम्।

भ्रोडकः-डिका, भ्रोडकः-डिका, बुभ्रुडिषकः-षिका, बोभ्रुडकः-डिका; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**कुटति**वत् (204) ज्ञेयानि।

---

1. शानचि, 'वा **भ्राश**—' (3-1-70) इत्यादिना श्यन् विकल्पेन भवति।
2. धातोरस्य ट्वित्त्वात्, भावादौ 'ट्वितोऽथुच्' (3-3-89) इति अथुच्प्रत्ययः।
3. 'अस्य ल्वादित्वमप्यस्ति इति **द्रुमे**' इति **धा. का. व्याख्यायाम्** (3-9) उपादानात् '**ल्वादिभ्यः**' (8-2-44) इति निष्ठानत्वे नकारस्य णत्वे च रूपमेवम्। ल्वादित्वाभावे **भ्रीतम्** इति, अत्र निष्ठानत्वं नेति ज्ञेयम्।
4. शतरि, '**क्र्यादिभ्यः** —' (3-1-81) इति श्ना विकरणप्रत्ययः। 'श्नाऽभ्यस्त-योरातः' (6-4-112) इत्याकारलोपे '**प्वादीनां** ह्रस्वः' (7-3-80) इति ह्रस्वे णत्वे च रूपमेवम्।

A. 'कृष्णोऽपि रेजे पथि गोपबालैर्भ्राजिष्णुभि**र्भ्राशित**पार्श्वदेशः।' धा. का. 2. 20.

B. 'भ्रीताशयं हितजुषाऽ**भ्रिणता** गजेन प्रक्षेप्तुमज्ञमनसा समनुद्रुतेन।' धा. का. 3·9.

(1191) **" भ्रूण आशायाम् "** (X-चुरादिः-1691. अक. सेट्. आत्म.)

**आकुस्मीयः ।**

**' —आशाविशङ्कयोः '** इति **धातुपाठे** पठ्यते । **' —आशंसायाम् '** इति **मैत्रेयः ।**

भ्रूणकः-णिका, बुभ्रूणयिषकः-षिका, भ्रूणयिता-त्री, बुभ्रूणयिषिता-त्री ; इत्यादीनि सर्वाणि रूपाणि चौरादिक**कूटयति**वत् (240) ज्ञेयानि । भ्रूणः[A] ।

(1192) **" भ्रेजृ दीप्तौ "** (I-भ्वादिः-180. अक. सेट्. आत्म.)

भ्रेजकः-जिका, भ्रेजकः-जिका, बिभ्रेजिषकः-षिका, बेभ्रेजकः-जिका, भ्रेजिता-त्री, भ्रेजयिता-त्री, बिभ्रेजिषिता-त्री, बेभ्रेजिता-त्री ; इत्यादीनि सर्वाणि रूपाणि भौवादिक**केपति**वत् (261) ज्ञेयानि । क्विपि-विभ्रेक्-विभ्रेग्-विभ्रेजौ-विभ्रेजः, इति रूपमिति विशेषः ।

(1193) **" भ्रेषृ गतौ "** (I-भ्वादिः-884. अक. सेट्. उभ.)

**' भेषृ—इत्यपि '** इति **मैत्रेयः** । '—भये, चलने च ' इति **क्षीरस्वामी** पपाठ । **' भ्लेषृ—'** इत्यन्ये इति **धा. का.** (२-२७) ।

भ्रेषकः-षिका, भ्रेषकः-षिका, बिभ्रेषिषकः-षिका, बेभ्रेषकः-षिका ; भ्रेषिता-त्री, भ्रेषयिता-त्री, बिभ्रेषिषिता-त्री, बेभ्रेषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**गेपति**वत् (429) बोध्यानि । अस्य धातोः उभयपदित्वात् शतरि भ्रेषन्[B]-न्ती, भ्रेषिष्यन्-न्ती-ती ; इत्यादीनि रूपाण्यधिकानीति विशेषः ।

(1194) **" भ्लक्ष अदने "** (I-भ्वादिः-893. अक. सेट्. उभ.)

' भक्ष ' इति **क्षीरस्वामी** इति **मा. धातुवृत्तावुक्तम्** । **पुरुषकारे**ऽप्येवमेव । 'भक्ष' इति **मैत्रेयः** । 'प्लक्ष' इति **दुर्गः** । मुद्रित**क्षीरतरङ्गिण्यां** तु 'भ्लक्ष—' इत्येव पाठो दृश्यते । चुरादिषु भक्ष (२१) धातौ **क्षीरस्वामिनैव** ' भक्षतेर्घञ्-भक्षः ।' इत्युक्तत्वात् अदनार्थकस्य भक्षतेर्भ्वादिषु कुत्राप्यपाठात्, एनमेव

A. ' आकूणिताक्षमपि च स्मिततूणितास्यं
**भ्रूणस्य** शाठ्यजनयक्ष्यमवेक्ष्य गात्रम् । ' धा. का. 3-35.

B. ' चाप्या व्ययद्दाशविलोकभेष**भ्रेष**ज्झषा यासदघं स्पशन्ती ॥' धा. का. 2.27.



भक्षतिं मनुते इति भाति । **दुर्गादयस्तु** धातुममुं **' प्लक्ष—'** इति पठन्ति । " तस्य शिरः छित्त्वा मेधं प्राक्षारयन्, स प्रक्षोऽभवत् । तत् प्रक्षस्य प्रक्षत्वम्-यत् **प्लक्षशाखा**—" ( मैत्रायणीयसंहिता-6-3-10-2 ) इति श्रुत्यनुसारेण प्रपूर्वकात् क्षरतेः पचाद्यचि कपिलकादेराकृतिगणत्वात् ( वा. 8-2-18 ) उपसर्गस्थरेफस्य लत्वे च **प्लक्षशब्दव्युत्पादनं** कृतवतो **भाष्यकारस्य** न सम्मतमिति, अन्यथा (प्लक्षधातुसद्भावे) अस्मादेव पचाद्यचि प्लक्षशब्दसिद्धेः, श्रौतनिर्वचनस्याप्रसक्तेरिति मनीषया च सुदूरं विचार्य **माधवधातुवृत्तौ** पाठोऽयं निरस्त इति ज्ञेयम् । **शतपथब्राह्मणे** (3-8-3-12) 'प्रख्यो हवै नामैतत् यत् **प्लक्षः** ।' इत्युक्तमपीह ध्येयम् ।

भ्लक्षकः-क्षिका, भ्लक्षकः-क्षिका, बिभ्लक्षिषकः- षिका, बाभ्लक्षकः-क्षिका; भ्लक्षिता-त्री, भ्लक्षयिता-त्री, बिभ्लक्षिषिता-त्री, बाभ्लक्षिता-त्री ; इत्यादीनि सर्वाणि रूपाणि भौवादिक**भ्रजति**वत् (926) ज्ञेयानि । अस्य धातोः उभयपदित्वात् शानचि-भ्लक्षमाणः, भ्लक्षिष्यमाणः, इति विशेषः । ल्यपि- [A]प्रभ्लक्ष्य इति।

(1195) **" टु भ्लाशृ दीप्तौ "** (I-भ्वादिः-825. अक. सेट्. आत्म.)

'भ्राशते **भ्लाशते** दीप्तौ भ्राश्यते **भ्लाश्यते** तथा ॥ ' (श्लो. 167) इति **देवः** ।

भ्लाशकः-शिका, भ्लाशकः-शिका, बिभ्लाशिषकः-षिका, बाभ्लाशकः-शिका; [1]भ्लाशमानः-भ्लाश्यमानः, क्वसुप्रत्यये [2]बभ्लाशिवान्-भ्लेशिवान्, [3]भ्लाशथुः ; इत्यादीनि सर्वाणि रूपाणि भौवादिक**काशति**वत् (186) ज्ञेयानि । कर्तरि क्तप्रत्यये-[B]भ्लाशितः इति रूपम् ।

(1196) **" भ्लेषृ गतौ "** (I-भ्वादिः-885. अक. सेट्. उभ.)

अयं केवलं **सि. कौमुद्यामेव** उपात्तः । अन्येषु सर्वेषु ग्रन्थेषु **' भ्रेषृ '** इत्यत्र **'भ्लेषृ इति अन्ये'** इत्युक्तम् ।

1. कर्त्रर्थे शानचि, 'वा भ्राशभ्लाश—' (3-1-70) इति श्यन् वा भवति । तेन रूपद्वयं बोध्यम् ।
2. क्वसौ 'फणां च सप्तानाम्' (6-4-125) इत्येत्वाभ्यासलोपयोर्विकल्पे रूपद्वयमिति ज्ञेयम् ।
3. ' ट्वितोऽथुच् ' (3-3-89) इति ट्वित्त्वात् अथुच्प्रत्यये रूपमेवम् ।

A. 'लाषेण चाषांश्छषितान् झषित्वा **प्रभ्लक्ष्य** भक्षन्ति यदम्बु नीचाः ।' धा. का. 2.28.

B. ' **विभ्लाशिते**ऽकूरथे सरामः स्यमत्पयोदस्वनभाजि तिष्ठन् ॥' धा. का. 2.20.

श्लेषकः-षिका, श्लेषकः-षिका, बिश्लेषिषकः-षिका, बेश्लेषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककेपतिवत् (261) बोध्यानि ।

(1197) "**मकि मण्डने**" (I-भ्वादिः-89. सक. सेट्. आत्म.)

मङ्ककः-ङ्किका, मङ्ककः-ङ्किका, मिमङ्किषकः-षिका, मामङ्ककः-ङ्किका ; मङ्किता-त्री, मङ्कयिता-त्री, मिमङ्किषिता-त्री, मामङ्किता-त्री ; इत्यादीनि सर्वाणि रूपाणि भौवादिककङ्कतिवत् (140) ऊह्यानि । [1]मङ्कनः, मङ्कणः, [2]प्रमङ्कनम्, [A]मङ्कितम्-तः-तवान्, [3]मङ्किः, [4]मङ्क्तिः ; इत्यादीनि रूपाणि अस्य धातोः भवन्तीति विशेषः ।

(1198) "**मख गत्यर्थः**" (I-भ्वादिः-132. अक. सेट्. पर.)

माखकः-खिका, माखकः-खिका, मिमखिषकः-षिका, मामखकः-खिका ; इत्यादीनि सर्वाणि रूपाणि भौवादिककखतिवत् (141) ज्ञेयानि । शतरि-मखन्-न्ती इति विशेषः ।

(1199) "**मखि गत्यर्थः**" (I-भ्वादिः-133. अक. सेट्. पर.)

मङ्खकः-ङ्खिका, मङ्खकः-ङ्खिका, मिमङ्खिषकः-षिका, मामङ्खकः-ङ्खिका ; मङ्खिता-त्री, मङ्खयिता-त्री, मिमङ्खिषिता-त्री, मामङ्खिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककङ्कतिवत् (140) ज्ञेयानि । णिनिप्रत्यये मङ्खी[B] इति ।

(1200) "**मगि गत्यर्थः**" (I-भ्वादिः-148. अक. सेट्. पर.)

मङ्गकः-ङ्गिका, मङ्गकः-ङ्गिका, मिमङ्गिषकः-षिका, मामङ्गकः-ङ्गिका;

---

1. '**कुधमण्डार्थेभ्यश्च**' (3-2-151) इति ताच्छीलिको युच्प्रत्ययः । बाहुलकादत्रैव णत्वे **मङ्कणः**=ऋषिविशेषः ।
2. '**कृत्यचः**' (8-4-29) इति प्राप्तस्य णत्वस्य '**इजादेः सनुमः**' (8-4-32) इति इजादेरेवेति नियमात् णत्वं न ।
3. औणादिके (द. उ. 1-46) इन्प्रत्यये रूपमेवम् ।
4. 'वङ्क्यादयश्च' (द. उ. 1-35) इति क्तिन्प्रत्यये रूपम् । **मङ्क्तिः** = शवः ।

A. 'फलाङ्कितान् वङ्कितवल्लि**मङ्कितान्** वनप्रदेशानुरुकाककोकिलान् ।' धा. का. 1-13.
B. 'मखत्कपोतं मदमङ्खिबर्हिणं लखत्पिकं नङ्खितखञ्जनोत्करम् ।' धा. का. 1-19.



मङ्गिता-त्री, मङ्गयिता-त्री, मिमङ्गिषिता-त्री, मामङ्गिता-त्री ; इत्यादीनि सर्वाणि रूपाणि भौवादिककङ्कतिवत् (140) बोध्यानि । [1]मङ्गलम्[A]।

(1201) "**मघि गत्याक्षेपे कैतवे च**"

(I-भ्वादिः-111. अक. सेट्. आत्म.)

'**गत्याक्षेपः**=वेगगतिः, गमनारम्भो वा, **कैतवम्**-व्याजः' इति **क्षीरस्वामी** । '**आक्षेपो** निन्दा, गतौ गमनारम्भे चेति **स्वामी**' इति **मा. धा. वृत्तिः** । मङ्घकः-ङ्घिका, मङ्घकः-ङ्घिका, मिमङ्घिषकः-षिका, मामङ्घकः-ङ्घिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककङ्कतिवत् (140) ज्ञेयानि । ल्युटि-विमङ्घनम्[B] इति ।

(1202) "**मघि मण्डने**" (I-भ्वादिः-160. अक. सेट्. उभ.)

मङ्घकः-ङ्घिका, मङ्घकः-ङ्घिका, मिमङ्घिषकः-षिका, मामङ्घकः-ङ्घिका ; मङ्घिता-त्री, मङ्घयिता-त्री, मिमङ्घिषिता-त्री, मामङ्घिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककङ्कतिवत् (140) ज्ञेयानि । [2]मङ्घनः, [C]सुमङ्घितः-तवान् इतीमानि रूपाण्यधिकान्यत्रेति विशेषः ।

(1203) "**मच कल्कने**" (I-भ्वादिः-171. सक. सेट्. आत्म.)

'**कल्कनम्**=दम्भः शाठ्यं चेति **मैत्रेयः**' इति **मा. धा. वृत्तिः** । '— कत्थनं च' इति **स्वामी** । '— कथनं च' इति **पुरुषकारः** (श्लो. 47) । '—कथनम् **इत्यन्ये**' इति सि. **कौमुदी** । 'लोकरञ्जनार्थं साध्वाचारो **दम्भः** ।' इति **धा. का.** (1.23) ।

माचकः-चिका, माचकः-चिका, मिमचिषकः-षिका, मामचकः-चिका ; मचिता-त्री, माचयिता-त्री, मिमचिषिता-त्री, मामचिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककचतिवत् (144) ज्ञेयानि । ल्युटि-[D]मचनम् इति ।

---

1. '**मङ्गेरलच्**' (द. उ. 8·123) इत्यलच्प्रत्यये रूपम् ।
2. '**कुधमण्डार्थेभ्यश्च**' (3-2-151) इति ताच्छीलिको युच्प्रत्ययः ।

A. 'विलङ्घदेणं शबराङ्गनाजनप्रवङ्गितं **मङ्गल**धेनुतङ्गितम् ॥' धा. का. 1-20.
B. 'प्रवङ्घमानस्य च तस्य सत्वरं **विमङ्घन**स्याधिकराघितात्मनः ।' धा. का. 1.16.
C. '**सुमङ्घिताः** शिङ्घितपुष्पसौरभा यद्वर्चमानाः पशुपाः प्रसेचिरे ॥' धा. का. 1.22.
D. 'सकञ्चुकः काञ्चनकञ्चिभूषिता व्रजाङ्गना **निर्मचनेन** नर्मगा ॥' धा. का. 1.23.

(1204) **" मचि धारणोच्छ्रायपूजनेषु "**

(I-भ्वादिः-173. अक. सेट्. आत्म.) [अ]

मञ्चकः-ञ्चिका, मञ्चकः-ञ्चिका, मिमञ्चिषकः-षिका, मामञ्चकः-ञ्चिका, इत्यादीनि सर्वाणि रूपाणि भौवादिक**कञ्च**तिवत् (145) बोध्यानि । पचाद्यचि मञ्चः, क्तप्रत्यये-[A]मञ्चितः, [1]मञ्चिका, इतीमानि रूपाण्यधिकान्यत्रेति विशेषः ।

(1205) **" मठ मदनिवासयोः "** (I-भ्वादिः-332. अक. सेट्. पर.)

'मठ निवासे' इति **काशकृत्स्न**धातुपाठ इति **क्षी. टीका** ।

'मण्ठते शपि शोकार्थे, **मठेन्मद**निवासयोः॥' (श्लो. 82) इति **देवः** ।

माठकः-ठिका, माठकः-ठिका, मिमठिषकः-षिका, मामठकः-ठिका; इत्यादीनि सर्वाणि रूपाणि प्रातिस्विकरूपाणि विना भौवादिक**कठ**तिवत् (148) ऊह्यानि । मठरः—बाहुलकादौणादिकेऽरप्रत्यये रूपम् । **मठरः**=अधमः ।

(1206) **" मठि शोके "** (I-भ्वादिः-263. अक. सेट्. आत्म.)

'**मण्ठते** शपि शोकार्थे, मठेन्मदनिवासयोः॥' (श्लो. 82) इति **देवः**। **शोकः**= आध्यानम्=उत्कण्ठापूर्वकस्मरणम् । उत्कण्ठामात्रे तु **अकर्मकः** । उन्मण्ठकः-ण्ठिका, मण्ठकः- ण्ठिका, मिमण्ठिषकः-षिका, मामण्ठकः-ण्ठिका ; मण्ठिता-त्री, मण्ठयिता-त्री, मिमण्ठिषिता-त्री, मामण्ठिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कण्ठ**तिवत् (149) ज्ञेयानि । क्विपि-[B]प्रमन्-प्रमण्ठौ-प्रमण्ठः इति ।

---

1. पचाद्यजन्तात् स्वार्थे कन्प्रत्यये रूपमेवम् । **मञ्चिका**=खट्वा ।

A. 'अमुञ्चनै**र्मञ्चित**चित्तपञ्चितप्रथीमतप्रस्तुचितैः शुभार्जकैः ।' धा. का. 1.24.

B. 'अनन् कुमार्गेषु शुभाध्वनैव वन् **प्रमन्** भृशोत्कण्ठितगोपिके हरौ ।' धा. का. 1.35.

[अ] **केचित्तु** धातुममुं न पठन्ति । **शाकटायन-धनपालादय**स्तु भङ्ग्यन्तरेणामुं पठन्ति । तद् यथा—'**मचुङ्**—' इति **शाकटायनः** । तस्य शास्त्रे उदितामेव धातूनां नुमागमः 'उदितः' (शा. सू. (4-2-197) इत्यनेन प्रतिपादितः । ङित्त्वादात्मनेपदम् ।



(1207) **" मडि विभाजने "** (I-भ्वादिः-272. सक. सेट्. आत्म.) [अ]

'भूषार्थे मण्डतीति स्यात् तत्र मण्डयतीति णौ ।

**मण्डते** वेष्टने........................॥' (श्लो. 84) इति देवः ।

मण्डकः-ण्डिका, मण्डकः-ण्डिका, मिमण्डिषकः-षिका, मामण्डकः-ण्डिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कण्ठ**तिवत् (149) ज्ञेयानि । [1]मण्डिता, [2]मण्डूकः, [3]मण्डलम्, इत्यादीन्यस्माद् भवन्तीति विशेषः। [A]मण्डितः।

(1208) **" मडि भूषायाम् "** (I-भ्वादिः-321. अक. सेट्. पर.)

'भूषार्थे **मण्डती**ति स्यात्, तत्र मण्डयतीति णौ । (श्लो. 84) इति **देवः** । मण्डकः-ण्डिका, मण्डकः-ण्डिका, मिमण्डिषकः-षिका, मामण्डकः-ण्डिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कण्ट**तिवत् (146) ज्ञेयानि । अस्य

---

1. ताच्छीलिके तृनि रूपमेवम् । 'क्रुध**मण्डार्थेभ्यश्च**' (3-2-151) इत्यत्र युज्विधौ भूषणार्थकस्यैव **मण्ड**धातोर्ग्रहणमिति **वृत्त्यादिषु** प्रतिपादितत्वादत्र न युजिति ज्ञेयम् । स्पष्टमिदं **मा. धा. वृत्तौ** ।

2. 'शलि**मण्डिभ्या**मूकण्' [द. उ. 3-47] इत्यूकण्प्रत्ययः । मण्डते क्षितिमिति **मण्डूकः**=भेकः ।

3. औणादिके [द. उ. 8-107] कलप्रत्यये रूपमेवम् । मण्डयते=वेष्टयते इति **मण्डलम्**=परिवारः ।

A. 'प्रहुण्डितानैक्षत चारुकुण्डलान् प्रत्रण्डितार्थान् **अविमण्डिता**शयान् ।' धा.का.1.36.

[अ] धातुपाठे 'वडि विभाजने; **मडि च**' इति पाठ्यते । तत्र 'वडि **मडि** विभाजने' इत्येकदैव पठितव्ये पृथक् सूत्रकरणात् अर्थान्तरेऽपि **मडि**धातुर्वर्तते इति **क्षीरस्वाम्यादयः** प्रतिपादयन्ति । तद् यथा **मण्डः**=रसाग्रम् । अत्र तण्डुलादीनां पचनावसरे क्वथनानन्तरं य ऊर्ध्वं रसस्यावरणरूपेणाविर्भावः स रसाग्रमित्युच्यते ; अत्रापि धातोरस्य वृत्तिरित्यर्थः । एवम्, **मण्डूरम्** (=लोहमलम्) **मण्डलम्, मण्डपः** इत्यादिष्वप्यस्य धातोरर्थान्तरवृत्तिर्ज्ञेया । **काशकृत्स्न-धातुपाठीयव्याख्यायां** (कन्नडभाषामय्यां) 'वडि **मडि वेष्टने**' इति पठ्यते इति **क्षी. टीका** (पृ. ४९) । "**नन्दी** तु '**मडि वेष्टने**' इति पठति।" इति **धातुवृत्तिः** । परं तु **क्षीरतरङ्गिण्यां**—"**नन्दी** तु 'वटि विभाजने, वडि वेष्टने' इति भङ्ग्या पठति ।" इत्येव दृश्यते । ईदृशस्थलेषु शुद्धपाठः कीदृश इति ग्रन्थैर्निर्धारयितुं न शक्यते । सर्वथा **मडि**धातुरनेकार्थक इति सारः ।

ताच्छीलिके युचि—[1]मण्डनः[A] इति रूपमिति विशेषः। [2]मण्डयित्नुः।

## (1209) "मडि भूषायाम्, हर्षे च"

(X-चुरादिः-1587. सक. सेट्. उभ.) [अ]

'भूषार्थे मण्डतीति स्यात्, तत्र **मण्डयती**ति णौ। (श्लो. 84) इति **देवः**। मण्डकः-ण्डिका, मिमण्डयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कुण्ठयति**वत् (210) ज्ञेयानि।

## (1210) "मण शब्दार्थः" (I-भ्वादिः-448. अक. सेट्. पर.)

माणकः-णिका, माणकः-णिका, मिमणिषकः-षिका, मम्मणकः-मंमणकः-णिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कणति**वत् (157) ज्ञेयानि। 'रण **मण** कणां गतौ मित्त्वं स्मर्यते।' इति **क्षीरस्वाम्याह**। **क्षीरस्वामिनं** विना अन्ये सर्वेऽपि घटादिषु न पठन्ति। प्रकरणान्तरे अर्थान्तरे च पठितानां धातूनामर्थविशेषे घटादिषु पाठस्य सर्वैर्यथाप्रमाणमभ्युपगमात्, अस्यापि घटादिपाठः स्यान्नाम। घटादिपाठपक्षे णौ 'मितां ह्रस्वः' (6-4-92) इति मित्त्वेन उपधाया ह्रस्वः। तेन मणकः-णिका, मणयिता-त्री, मणम् 2-माणम् 2, मणयित्वा 2, इत्यादीनि रूपाणि ण्यन्ते यथायथमूह्यानि। [3]मणितम्,

---

1. तच्छीलादिषु कर्तृषु 'क्रुधमण्डार्थेभ्यश्च' (3-2-151) इति युच्प्रत्ययः। **मण्डार्थाः** =भूषणार्थका धातवः।
2. ण्यन्तात् औणादिके [द. उ. 1-140] इत्नुच्प्रत्यये, 'अयामन्ताल्वाय्येत्न्विष्णुषु' (6-4-55) इति णेरयादेशे च रूपमेवम्।
3. धातोरस्य शब्दार्थत्वेऽपि शब्दविशेष एव रूढिः। "**मणितं** सुरतकूजिते रूढम्, एवं कणितम् आर्ते......" इत्यादि सुदूरं शब्दार्थकानामेव धातूनां अर्थभेदं निरूप्य "इत्यादि प्रतिधातुस्थं कियद् व्याचक्ष्महे वयम्। लोकात् सूरिभिरित्यूह्यं लक्ष्यमूलं हि लक्षणम्॥" इति **क्षीरस्वामिना** प्रतिपादितमिहानुसन्धेयम्। एवमेव धातुपाठे कस्मिंश्चिदर्थविशेषे पठितानामपि धातूनां लोकप्रयोगतोऽर्थान्तरे वृत्तिरित्यूह्यमिति प्रदर्शनायास्माभिरेतदत्रोपात्तम्।

A. 'कुर्वन्ति कोपनं तारा **मण्डना** गगनस्य माम्॥' भ. का. 7.16.

[अ] "—'**मडि भूषायाम्**' इति भ्वादौ पाठादेव **मण्डति** इति सिद्धेः, अस्येदित्त्वं नुम्मात्रार्थम्, न तु णिज्विकल्पार्थम्; तेन हर्षे **मण्डति** इति न भवति।" इति **मा. धा. वृत्तिः**। **क्वचित्** कोशे अत्र 'हर्षे च' इति न पठ्यते। पाठशुद्धिरत्र कीदृशीति न विद्मः।



[1]मणिः, [2]मणिकम्, मणिकः इत्यादीनि रूपाण्यस्माद् भवन्तीति विशेषः।

## (1211) "मत्रि गुप्तपरिभाषणे"

(X-चुरादिः-1680. अक. सेट्. आत्म.) **आकुस्मीयः**।

'—गुप्तभाषणे' इत्येव प्रायशः पाठः। '**मन्त्रि**—' इति कुत्रचिद् दृष्टः पाठः। मन्त्रकः-न्त्रिका, मिमन्त्रयिषकः-षिका ; मन्त्रयिता-त्री, मिमन्त्रयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**तन्त्रयति**वत् (698) ज्ञेयानि। [3]मन्त्री, [4]मन्त्रः।

## (1212) "मथि हिंसासंक्लेशनयोः" (I-भ्वादिः-46. सक. सेट्. पर.)

'मन्थ—' इति **क्षीरस्वामी**।

'हिंसासंक्लेशयो**र्मन्थेत्** मथेन्मथ्नाति लोडने।' (श्लो. 98) इति **देवः**। मन्थकः-न्थिका, मन्थकः-न्थिका, मिमन्थिषकः-षिका, मामन्थकः-न्थिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कुन्थति**वत् (220) ज्ञेयानि। सन्नन्तादुप्रत्यये-[A]मिमन्थिषुः, [5]खड्गोपमन्थम्-खड्गेनोपमन्थम् वा शत्रुं मारयति, खड्गेनोपमन्थ्य वा। [6]मन्थी[B]।

---

1. 'इक् कृष्यादिभ्यः' (वा. 3-3-108) इति भावादौ स्त्रियाम् इक्प्रत्यये रूपमेवम्।
2. मणिरेव, मणिरिव इत्यादिष्वर्थेषु तद्धिते कन्प्रत्यये रूपमेवम्। '**मणिकः**=महाकुम्भः।' इति **क्षीरस्वामी**।
3. ग्रह्यादिषु (3-1-134) '**मन्त्री**' इति पाठात् णिनिप्रत्ययः।
4. '**एरच्**' (3-3-56) इति भावेऽच्प्रत्ययः।
5. 'हिंसार्थानां च समानकर्मकाणाम्' (3-4-48) इति णमुल्। अत्रानुप्रयोगधातुना मारयतिना समानकर्मकत्वादस्य धातोर्णमुल् इति ज्ञेयम्। 'तृतीयाप्रभृतीनि—' (2-2-21) इति समासविकल्पः। वासरूपन्यायेन क्त्वाऽप्यत्र ज्ञेयः। तेन ल्यबन्तस्यापि प्रयोगः प्रदर्शितः।
6. ग्रह्यादित्वात् (3-1-134) कर्तरि णिनिप्रत्यये रूपमेवम्। ग्रह्यादिराकृतिगणः।

A. 'स भोजराड्य हरिं **मिमन्थिषुः** प्रमान्थनं सेधतु को निषेत्स्यति ?॥' धा. का. 1.7.

B. 'परिभाविणि ताराणां पश्य **मन्थीनि** चेतसाम्।' भ. का. 6.75.

## (1213) "**मथे विलोडने**" (I-भ्वादिः-848. सक. सेट्. पर.)

**ज्वलादिः** । [अ]

'हिंसासंक्लेशयोर्मन्थेत्, मथेन्मथ्नाति लोडने ।' (श्लो. 98) इति **देवः** । माथकः-थिका, माथकः-थिका, मिमथिषकः-षिका, मामथकः-थिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कथ**तिवत् (294) ज्ञेयानि । [1]मन्मथः, [2]मथः-माथः, [3]दण्डमाथः, [4]प्रमाथी[A], [5]मथुरा ।

## (1214) "**मद तृप्तियोगे**"

(X-चुरादिः-1706. अक. सेट्. आत्म. **आकुस्मीयः**)

'स्तुत्यादौ मन्दते, हर्षे माद्येत्, **मादयते** णिचि ॥' (श्लो. 112) इति **देवः** । '—तृप्तिशोधने, **शोधनम्**=सम्पत्तिः ।' इति **क्षीरस्वामी** । '**तृप्तिशोधने**=तर्पणशुद्धौ ।' इति **पुरुषकार-माधवाभ्यां क्षीरस्वामि**सम्मतपाठत्वेनोपात्तं वाक्यम् । तत्तु मुद्रित**क्षीरतरङ्गिणी**कोशे न दृश्यते ।

मादकः-दिका, मिमादयिषकः-षिका; मादयिता-त्री, मिमादयिषिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**गालयति**वत् (388) ज्ञेयानि ।

---

1. मनो मथतीति **मन्मथः** । पचादिषु पाठात् बाहुलकेन अत्राच्प्रत्ययः । कर्मण्यणोऽपवादः ।
2. '**ज्वलिति**कसन्तेभ्यो णः' (3-1-140) इति कर्तरि विकल्पेन णप्रत्ययः । पक्षे पचाद्यच् । तेन रूपद्वयम् ।
3. मथ्यतेऽनेन इति **माथः**=पन्थाः । दण्डभावो माथः **दण्डमाथः**=ऋजुः पन्थाः ।
4. 'प्रे लपसृद्रु**मथ**वदवसः' (3-2-145) इत्यनेन तच्छीलतद्धर्मतत्साधुकारिष्वर्थेषु घिनुण्प्रत्ययः ।
5. 'मन्दिवाशि**मथि**–' [द. उ. 8-21] इत्युरच्प्रत्यये रूपमेवम् । मथ्यतेऽसौ जनैरिति **मथुरा** । मथितावस्यां मधुलवणाविति **मथुरा** इत्यपि क्वचिद् व्युत्पादितम् ।

A. '**प्रमाथिनो** वियुक्तानां हिंसकाः पापदुर्दुराः ॥' भ. का. 7.12.

[अ] '—**विलोटने**' इति **पुरुषकारे** (श्लो. 98) पाठः । **विलोटनम्**=क्षोभणम् । "**मथे विलोडने**...**मथति**....**मथकः**.... ... इत्यादि**काशकृत्स्नीय**धातुपाठे, तट्टीकायां च पाठः ।" इति **क्षी. टीका**यामत्र प्रकरणे पाठान्तरमस्य धातोः प्रदर्शितम् । तत्र **मथकः** इति दर्शनात् **काशकृत्स्नीयाः** घटादिपाठमप्यस्यानुमेनिरे इति ज्ञायते ।



## (1215) "**मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु**"

(I-भ्वादिः-13. अक. सेट्. आत्म.)

'स्तुत्यादौ **मन्दते**, हर्षे माद्येत्, मादयते णिचि ॥' (श्लो. 112) इति **देवः** । "मोदो=हर्षः, मदो=गर्वः, स्वप्नः=आलस्यम् । **चन्द्रस्तु** 'मदि जाड्ये' इत्येव पपाठ । स्तुतिगतिभ्यामन्यत्राकर्मकः ।" इति **मा. धा. वृत्तिः** । '**स्वप्नेना**लस्यमपि लक्ष्यते ।' इति **क्षीरस्वामी** । धातोरस्य **कान्त्यर्थकत्वं केषाञ्चि**दसम्मतम् ।

मन्दकः-न्दिका, मन्दकः-न्दिका, मिमन्दिषकः-षिका, मामन्दकः-न्दिका; मन्दिता-त्री, मन्दयिता-त्री, मिमन्दिषिता-त्री, मामन्दिता-त्री; इत्यादीनि समस्तान्यपि रूपाणि भौवादिक**कन्दति**वत् (163) ज्ञेयानि । [1]मन्दनः, इदमेषां [2]मन्दितम्, [3]मन्दुरा, [4]मन्दिरम्, [5]मन्द्रः, [6]मन्दारः, [7]मन्दाकः ।

## (1216) "**मदी हर्षग्लेपनयोः**"

(IV-दिवादिः-[815] 1208. अक. सेट. पर.)

**शमादिः, घटादिश्च** । '**ग्लेपनम्**=दैन्यम्' इति **मा. धा. वृत्तिः** । 'ग्लपने' इति **क्षीरतरङ्गिण्यां** पाठः ।

'स्तुत्यादौ मन्दते, हर्षे **माद्येत्**, मादयते णिचि ॥' (श्लो. 112) इति **देवः** ।

---

1. '**चलन**शब्दार्थादकर्मकात्—' (3-2-148) इति ताच्छीलिके युचि रूपमेवम् ।
2. 'क्तोऽधिकरणे च **ध्रौव्यगति**प्रत्यवसानार्थेभ्यः' (3-4-76) इति गत्यर्थकत्वात्, अकर्मकत्वाच्च अधिकरणे क्तप्रत्ययः ।
3. '**मन्दि**वाशि—' [द. उ. 8-21] इत्युरच्प्रत्ययः । मन्दन्तेऽस्यां वाजिन इति **मन्दुरा**=वाजिशाला ।
4. 'इषिमदिमुदिखिदिच्छिदिभिदि**मन्दि**–' (द. उ. 8-26) इति किरच्प्रत्यये रूपमेवम् । **मन्दिरम्**=आलयः ।
5. 'स्फायितञ्चि—' (द. उ. 8-31) इत्यादिना रक्प्रत्यये रूपमेवम् । **मन्द्रः**=मधुरस्वरः, मन्दगतिश्च ।
6. 'अङ्गिमदि**मन्दिभ्यः**—' (द. उ. 8-64) इत्यारन्प्रत्यये रूपमेवम् । **मन्दारः**=देववृक्षविशेषः ।
7. बाहुलकादौणादिके आकन्प्रत्यये रूपमेवम् । **मन्दाक**शब्दात् मत्वर्थीये इनिप्रत्यये **मन्दाकिनी** इति सिद्ध्यति । **मन्दाकिनी**=नदीविशेषः ।

मादकः-दिका, [1]मदकः-निमादकः-मादकः-दिका, मिमदिषकः-षिका, मामदकः-दिका ;
मदिता-त्री, मदयिता-त्री, मिमदिषिता-त्री, मामदिता-त्री ;
[2]माद्यन्-न्ती, मदयन्-न्ती, मिमदिषन्-न्ती ; —
मदिष्यन्-न्ती-ती, मदयिष्यन्-न्ती-ती, मिमदिषिष्यन्-न्ती-ती ;—
—मदयमानः, मदयिष्यमाणः,—मामद्यमानः, मामदिष्यमाणः ;
सुमत्-सुमद्-सुमदौ-सुमदः ; — — —
[3]मत्तम्-मत्तः-मत्तवान् , मदितः, मिमदिषितः, मामदितः-तवान् ;
मदः, [4]प्रमद्वरः, [5]प्रमादी, [6]इरम्मदः[A], [7]उन्मदिष्णुः[B], मदः,
[8]मदनः, मिमदिषुः, मामदः;
मदितव्यम् , मदयितव्यम् , मिमदिषितव्यम् , मामदितव्यम् ;

---

1. '**घटादयो** मितः' (ग. सू. भ्वादौ) इति मित्त्वात् 'मितां ह्रस्वः' (6-4-92) इति णौ उपधाया ह्रस्वो भवति । एवं ण्यन्ते सर्वत्र ज्ञेयम् । '**मदी हर्षे**' इति दिवादिषु पठितस्यैव धातोर्मित्त्वार्थं घटादिषु (भ्वादौ) अनुवादः । तेन हर्षग्लेपन-रूपार्थविशेष एव घटादिपाठात् मित्त्वेन **मदकः** इत्यादीनि ण्यन्ते रूपाणीति ज्ञेयम् । अन्यत्रार्थेषु **निमादकः** [=अक्षरव्यञ्जनानां स्पष्टमुच्चारयिता], **मादकः** [=चित्तविकारोत्पादयिता] इत्यादिषु मित्त्वं नेति ज्ञेयम् ।
2. श्यनि, '**शमामष्टानाम्**—' (7-3-74) इति दीर्घे रूपमेवम् ।
3. '**श्वीदितो** निष्ठायाम्' ( 7-2-14 ) इति निष्ठायामिण्निषेधे 'न ध्याख्यापॄमूर्च्छि-**मदाम्**' (8-2-57) इति निष्ठानत्वनिषेधे च रूपमेवम् ।
4. 'स्थेशभास-' (3-2-175) इत्यत्र "**प्रमद्वरो**ऽपि इति **केचित्** ।" इति **प्रक्रियाकौमुदी** ।
5. '**शमित्यष्टाभ्यः**—' (3-2-141) इति ताच्छील्ये घिनुण्प्रत्यये रूपमेवम् ।
6. इरया माद्यतीति **इरम्मदः**=मेघज्योतिः । इरा=उदकम् । 'उग्रम्पश्येर**म्मद**-पाणिन्धमाश्च' (3-2-37) इति कर्तरि तृजाद्यपवादतया खश् निपात्यते । निपातना-देव श्यन् न । 'इरया=वारिणा माद्यन् वैद्युताग्नि**रिरम्मदः** ।' इति **प्र. सर्वस्वे** ।
7. 'अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतो**न्मद**—' (3-2-136) इत्यादिना तच्छीलादिषु कर्तृषु इष्णुच्प्रत्ययः ।
8. ण्यन्तात् 'नन्दिग्रहि—' (3-1-134) इति नन्द्यादित्वात् कर्तरि ल्युप्रत्यये रूपमेवम् । मदयतीति **मदनः** ।

A. '**इरम्मदं** ज्योतिरमुञ्चदभ्रं शनैश्शनैः प्रावृषिकं ररास ॥' वा. वि. 3.6.
B. 'व्यालद्विपा यन्तृभिरु**न्मदिष्णवः** कथंचिदारादपथेन निन्यिरे ॥' शि. व. 12.28.



मदनीयम्, मदनीयम् , मिमदिषणीयम्, मामदनीयम् ;
माद्यम्-[1]मद्यम्, मद्यम्, मिमदिष्यम्, मामद्यम् ;
ईषन्मदः-दुर्मदः-सुमदः ; — — —
मद्यमानः, मद्यमानः , मिमदिष्यमाणः , मामद्यमानः ;
मादः, [2]विद्यामदः-धनमदः, कुलमदः, [कन्यानाम्] [3]प्रमदः, [कोकिलानाम्]
सम्मदः, प्रमादः-सम्मादः-उन्मादः-विमादः, मदः, मिमदिषः, मामदः ;
मदितुम् , मदयितुम् , मिमदिषितुम् , मामदितुम् ;
मत्तिः, मदना, मिमदिषा, मामदा ;
मदनम् , मदनम्, मिमदिषणम्, मामदनम् ;
मदित्वा, [A]मदयित्वा, मिमदिषित्वा, मामदित्वा ;
प्रमद्य, प्रमदय्य, प्रमिमदिष्य, प्रमामद्य ;
मादम् २, } [4]मादम् २-मदम् २, } मिमदिषम् २, } मामदम् २ ; }
मदित्वा २, } [A]मदयित्वा २, } मिमदिषित्वा २, } मामदित्वा २ ; }
[5]मदयित्नुः, [6]मदिरा, [7]मत्सरः, [8]मत्स्यः-मत्सी ।

---

1. "मदसाधनम्—**मद्यम्** । बाहुलकात् करणे यत् ।" इति **प्र. सर्वस्वे** ।
2. '**मदोऽनुपसर्गे**' (3-3-67) इति अनुपसर्गेऽप्प्रत्ययः । घञोऽपवादः । **कुलमदः, धनमदः,** इत्यादिषु चैवं ज्ञेयम् ।
3. '**प्रमदसम्मदौ** हर्षे' (3-3-68) इति हर्षेऽभिधेये एतौ शब्दौ निपात्येते । हर्षादन्यत्र, उपसर्गे च **प्रमादः, संमादः** इत्यादिषु घञ् इति ज्ञेयम् । 'सध **माद**-स्थयोश्छन्दसि' (6-3-96) इत्यत्र **माद** इति निर्देशबलात् केवलादप्यस्माद्-धातोर्घञ् भवतीति ज्ञेयम् ।
4. **घटादिषु** पाठसामर्थ्यात् 'चिण्णमुलोः–' (6-4-93) इति णौ परतः दीर्घो विकल्पेन भवति । तेन रूपद्वयं ज्ञेयम् ।
5. 'स्तनिहृषिपुषिगदि**मदि**—' [द. उ. 1-140] इति ण्यन्तात् इत्नुच्प्रत्यये रूपमेवम् । **मदयित्नुः**=मदिरा ।
6. '**इषिमदि**—' [द. उ. 8-26] इत्यादिना किरच्प्रत्यये रूपमेवम् । माद्यन्तेऽनयेति **मदिरा**=सुरा ।
7. '**कृधूमदिभ्यः** कित्' (द. उ. 8-53) इति सरन्प्रत्ययः, तस्य च कित्त्वम् । माद्यत्यसौ परव्यसनैरिति **मत्सरः**=ईर्ष्या ।
8. 'ऋतन्यञ्जि—' (द. उ. 10-12) इत्यादिना स्यन्प्रत्यये रूपमेवम् । माद्यत्युदकं प्राप्य इति **मत्स्यः** । स्त्रियाम् गौरादिपाठात् (4-1-41) ङीष् । '**मत्स्यस्य** ङ्याम्—' (वा. 6-4-149) इति यकारलोपः ।

A. 'कपितोयनिधीन् प्लवङ्गमेन्दुर्**मदयित्वा** मधुरेण दर्शनेन ।' भ. का. 10. 28.

(1217) "**मन ज्ञाने**" (IV-दिवादिः-1176. सक. अनि. आत्म.)

'स्तम्भे मानयते, ज्ञाने **मन्यते** मनुते पदम् ॥ [इति देवः।
पूजायाम् मानयेन्मानेत्, यौ मीमांसेत तङ्सनोः।' (श्लो. 125-126)

मानकः-निका, मानकः-निका, [1]मिमंसकः-सिका, [2]मम्मनकः-मंमनकः-निका;
मन्ता-त्री, मानयिता-त्री, मिमंसिता-त्री, मम्मनिता-मंमनिता-त्री;
—मानयन्-न्ती, मानयिष्यन्-न्ती-ती; — —
[3]मन्यमानः, मानयमानः, मिमंसमानः, मंमन्यमानः;
मंस्यमानः, मानयिष्यमाणः, मिमंसिष्यमाणः, मंमनिष्यमाणः;
[4]सुमत्-सुमतौ-सुमतः, हरिमत्; — —
मतम्-[5]राज्ञां मतः-मतवान्, मानितः, मिमंसितः, मंमनितः-तवान्;
मनः, [6]दर्शनीयमानी [भार्यायाः], [7]पण्डितम्मन्यः[A]-पण्डितमानी,

1. सन्नन्तात् ण्वुलि, द्विर्वचनादिकेषु कृतेषु 'नश्चापदान्तस्य झलि' (8-3-24) इत्यनेन धातुनकारस्यानुस्वारे रूपमेवम्। एवमेव सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया।
2. यङन्ते सर्वत्र द्विर्वचनादिकेषु कृतेषु, अभ्यासे, 'नुगतोऽनुनासिकान्तस्य' (7-4-85) इति नुगागमः, तस्य च पदान्तवद्भाववचनात् परसवर्णविकल्पः। तेन रूपद्वयम्।
3. शतरि, दिवादित्वात् शपोऽपवादः श्यन्प्रत्ययोऽत्रेति ज्ञेयम्।
4. क्विपि, '**अनुदात्तोपदेश**वनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' (6-4-37) इत्यनुनासिकलोपः। 'ह्रस्वस्य पिति कृति—' (6-1-71) इति तुक्।
5. अनुदात्तोपदेशत्वादस्य धातोर्निष्ठायामनुनासिकलोपे, रूपाण्यूह्यानि। राज्ञां **मतः** इत्यत्र 'मतिबुद्धिपूजार्थेभ्यः—' (3-2-188) इति बुद्ध्यर्थकत्वादस्य वर्तमाने कर्तरि क्तः। 'क्तस्य च वर्तमाने' (2-3-67) इति कर्तरि षष्ठी।
6. दर्शनीयां मन्यते इत्यर्थे कर्मण्युपपदे '**मनः**' (3-2-82) इत्यनेनात्र णिनिः। 'भार्यायाः' इत्यत्र कर्मणि षष्ठी। भार्याशब्दसापेक्षस्यापि दर्शनीयशब्दस्य गमकत्वात् समासः। 'क्यङ्**मानिनोश्च**' (6-3-36) इत्यनेन **मानिन्शब्द** उत्तरपदे दर्शनीयाशब्दस्य पुंवद्भावः।
7. पण्डितमात्मानं मन्यते इत्यर्थे, 'आत्म**माने** खश् च' (3-2-83) इति पाक्षिकः खश्। पक्षे णिनिः। खशः शित्वात् विकरणप्रत्ययः श्यन्प्रवृत्तः। 'अरुर्द्विषदजन्तस्य—' (6-3-67) इति पूर्वपदस्य मुम्।

A. 'अखण्ड्यमानं परिखण्ड्य शक्रं त्वं **पण्डितंमन्य**मुदीर्णदण्डः।' भ. का. 12. 17.



[A]शूरमानी, [1]कालिम्मन्या, [2]दिवामन्या-दोषामन्यम्, [3]गाम्मन्यः,
[4]स्त्रियम्मन्यः-स्त्रीम्मन्यः, [5]नरम्मन्यः, [6]भुवम्मन्यः, [7]श्रिमन्यं
[कुलम्], [8]उपकुम्भम्मन्यः, [B]श्रियम्मन्या, श्रीमन्मन्यः, रजनिम्मन्यः,

1. कालीमात्मानं मन्यते इत्यर्थे खश्प्रत्यये, श्यनि च कृते, 'स्त्रियाः पुंवत्—' (6-3-34) इति प्राप्तं पुंवद्भावं परत्वाद् बाधित्वा, 'खित्यनव्ययस्य' (6-3-66) इति ह्रस्वः। तेन **कालिम्मन्या** इति सिद्ध्यति।
2. 'दिवा' इत्यधिकरणशक्तिप्रधानमव्ययम्। एवम्भूतस्याप्यस्य वृत्तिविषये कर्मत्वं बोध्यम्। तेन दिवा मन्यते इत्यर्थेऽत्र खशि, अव्ययत्वादुपपदस्य मुम्, ह्रस्वश्च नेति ज्ञेयम्। एवमेव **दोषामन्यम्** इत्यत्रापि ज्ञेयम्।
3. अत्रापि पूर्ववत् गाम् आत्मानं मन्यते इत्यर्थे खशि, 'इच एकाचोऽम्प्रत्ययवच्च' (6-3-68) इत्यनेन खिदन्ते परे एकाचः पूर्वपदस्य 'गो' इत्यस्य अम् इत्यागमो भवति, स च '—प्रत्ययवच्च' (6-3-68) इति वचनात् स्वादिप्रत्ययवद् भवति। तेन 'औतोऽम्शसोः' (6-1-93) इत्यनेन प्रत्ययाश्रित आकारोऽत्र भवति। तेन **गाम्मन्यः** इति रूपं सिद्ध्यति।
4. स्त्रियमात्मानं मन्यते इत्यर्थे खशि, पूर्ववत् 'इच एकाचः—' (6-3-68) इति अमागमे, 'वाऽम्शसोः' (6-4-80) इति विकल्पेन इयङ्। इयङ्पक्षे **स्त्रियम्मन्यः**, इति रूपम्। इयङभावपक्षे 'अमि पूर्वः' (6-1-107) इति पूर्वरूपे **स्त्रीम्मन्यः** इति रूपम्।
5. नरं आत्मानं मन्यते इत्यर्थे खशि, अमागमे, 'ऋतो ङिसर्वनामस्थानयोः' (7-3-110) इति गुणे **नरम्मन्यः** इति रूपम्। अत्र '—प्रत्ययवच्च' (6-3-68) इति वचनात् मुमपवादतया प्रवृत्तस्य**ामः** प्रत्ययत्वम्। प्रत्ययत्वादेव सर्वनामस्थानसंज्ञा, तदाश्रितो गुणश्चात्रेति ज्ञेयम्।
6. भुवमात्मानं मन्यते इत्यर्थे खशि, अमि, 'अचि श्नुधातु—' (6-4-77) इत्यादिना उवङत्रेति ज्ञेयम्।
7. श्रियमात्मानं मन्यते इत्यत्र **श्रिमन्यं** [ब्राह्मणकुलम्] इत्येव न्याय्यम् इति 'इच एकाचः—' (6-3-68) इति सूत्र**भाष्य**वाक्यम् 'तस्मात् **श्रिमन्य**मित्येव भवितव्यम्।' इत्याकारकमवलम्ब्य **सिद्धान्तकौमुद्या**मुक्तम्। प्रकृतसूत्रे **उद्द्योते नागेशभट्टै**स्तु उपात्त**भाष्य**वाक्यस्य एकदेशयुक्तित्वं प्रसाध्य, **श्रियम्मन्यम्** इत्येव प्रामाणिकं रूपमिति स्थापितम्। **भट्टिकाव्ये**ऽपि (5-71) **श्रियम्मन्य**पदस्य प्रयुक्तत्वात् **नागेश**पक्ष एव ज्यायानिति भाति।
8. कुम्भस्य समीपे **उपकुम्भम्**। 'अव्ययं विभक्ति—' (2-1-6) इत्यादिना सामीप्ये अव्ययीभावसमासे, 'अव्ययीभावश्च' (1-1-41) इत्यनेन अव्ययीभावसमासस्याव्ययत्वम्। 'अव्ययीभावस्याव्ययत्वे प्रयोजनं लुङ्मुखस्वरोपचाराः' (वा. 1-1-41) इति वचनात् उपकुम्भमात्मानं मन्यते इत्यर्थेऽव्ययत्वाभावात् मुमागमोऽत्रेति ज्ञेयम्। स्पष्टमिदं प्रकृतसूत्रे (1-1-41) **भाष्यादौ**।

A. 'राममुच्चैरुपालभ्य **शूरमानी** कपिप्रभुः।
व्रणवेदनया ग्लायन् **साधुम्मन्य**मसाधुवत् ॥' भ. का. 6. 128.

B. 'मिथ्यैव श्रीः **श्रियम्मन्या श्रीमन्मन्यो** मृषा हरिः।' भ. का. 5. 71.

साधुम्मन्यः, [1]पट्वमानिनी, [2]मेनका, मानः, मिमंसुः, मम्मनः ;
मन्तव्यम्, मानयितव्यम्, मिमंसितव्यम्, मम्मनितव्यम् ;
मननीयम्, माननीयम्, मिमंसनीयम्, मम्मननीयम् ;
मान्यम्, मान्यम्, मिमंस्यम्, मम्मन्यम् ;
ईषन्मनः-दुर्मनः-सुमनः ; — —
मन्यमानः, मान्यमानः, मिमंस्यमानः, मम्मन्यमानः ;
मानः, मानः, मिमंसः, मम्मनः ;
मन्तुम्, मानयितुम्, मिमंसितुम्, मम्मनितुम् ;
[3]मन्या,[A] सुमत्, मतिः, [4]मन्तिः, अनुमतिः, मानना, मिमंसा, मम्मना ;
मननम्, माननम्, मिमंसनम्, मम्मननम् ;
मत्वा; मानयित्वा, मिमंसित्वा, मम्मनित्वा ;
अनुमत्य, अनुमान्य, अनुमिमंस्य, अनुमम्मन्य ;

---

1. पट्वीमात्मानं मन्यते इत्यर्थे, पाक्षिके णिनिप्रत्यये 'स्त्रियाः पुंवत्—' (6-3-34) इति पुंवद्भावे रूपमेवम्। पक्षे **पट्वम्मन्या** इत्यपि भवति।
2. 'आशिषि च' (3-1-150) इति वुन्प्रत्यये, 'प्रत्ययस्थात्—' (7-3-44) इति प्राप्तस्येत्वस्य 'आशिषि वुनश्च न' (वा. 7-3-45) इति निषेधः। 'आशीरर्थेऽके **मनेः** एत्वं वाच्यम्' इति वचनेन एकारः इति **प्र. कौमुद्या**मुक्तम्। **मेनका**= अप्सरोविशेषः।
3. स्त्रियाम्, 'संज्ञायां समजनिषदनिपतम**न**—' (3-3-99) इत्यादिना संज्ञायां क्यपि रूपमेवम्। '**मन्या**=गलपार्श्वशिरा (सिरा), मन्यन्तेऽनयेति कृत्वा। तथा हि क्रुद्धो ज्ञायते।' इति **पदमञ्जरी**। **न्यासकार**स्तु 'संज्ञायाम्' इत्युक्तत्वात् अझलादित्वेऽपि प्रत्ययस्थं कित्त्वमाश्रित्यानुनासिकलोपे तुकि च **मत्या** इति रूपमनुमेने। '**मन्या**=पश्चाद्ग्रीवासिरा।' इति **मा. धा. वृत्तिः**। '**सुमत्**' इति सम्पदादित्वात् (3-3-94) क्विपि अनुनासिकलोपे, तुकि च रूपम्। **सुमत्**=लक्ष्मीः।
4. क्तिचि रूपमेवम्। 'न क्तिचि दीर्घश्च' (6-4-39) इत्यनेन क्तिचि अनुनासिकलोपदीर्घयोर्निषेधः। **मतिः** इत्यत्र तु क्तिनि अनुनासिकलोपो भवत्येव। 'मन्त्रे वृषेषपच**मन**—' (3-3-96) इत्यनेन मन्त्रे एव मन्यतेः क्तिन्विधानात् लोके न **मति**रित्यस्य प्रयोग इति न मन्तव्यम्। उदात्तस्वरार्थं सूत्रस्यास्य (3-3-96) प्रवृत्तेः।

A. 'पुरोहितामात्यमुखाश्च योधा विवृद्धमन्युप्रतिपूर्ण**मन्याः**॥' भ. का. 3.28.



मानम् २, मत्वा २, } मानम् २, मानयित्वा २, } मिमंसम् २, मिमंसित्वा २, } मम्मनम् २ ; मम्मनित्वा २ ; }
[1]मुनिः, [2]मनुः-मनुष्यः-मनुषी, [3]मन्तुः, [4]मन्युः, [5]मन्त्रः, [6]मठरः, [7]मांसम्, [8]मधु, [9]मनः।

(1218) "**मन स्तम्भे**" (X-चुरादिः-1710. अक. सेट्. आत्म.)

**आकुस्मीयः**। '**स्तम्भः**=गर्वः ........। पक्षे **मनतीति चन्द्रः**' इति **क्षीरस्वामी**।

'स्तम्भे **मानयते**, ज्ञाने मन्यते मनुते पदम्॥' (श्लो. 125) इति **देवः**।

मानकः-निका, मिमानयिषकः-षिका ; मानयिता-त्री, मिमानयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**गालयति**वत् (388) ज्ञेयानि।

---

1. '**मने**रुच्च' (द. उ. 1-51) इति इन्प्रत्यये अकारस्य उकारादेशे च रूपमेवम्। **मुनिः**=ऋषिः।
2. औणादिके उप्रत्यये रूपमेवम्। मन्यते मनुते वा **मनुः**। **मनु**शब्दात् '**मनो**र्जातावञ्यतौ षुक् च' (4-1-161) इति अञ् यत् इत्येतौ प्रत्ययौ भवतः ; तत्सन्नियोगेन षुगागमश्च। **मानुषः, मनुष्यः** इति जातिशब्दौ एतौ। स्त्रियाम्, 'हयगवयमुकयमत्स्य**मनुष्याणा**मप्रतिषेधः' (वा. 4-1-63) इति प्रतिप्रसवेन ङीपि, 'हलस्तद्धितस्य' (6-4-150) इति यलोपे **मनुषी** इति रूपम्।
3. 'कमि**मनि**—' (द. उ. 1-125) इति तुप्रत्यये रूपमेवम्। '**मन्तुः** पुंस्यपराधेऽपि मनुष्येऽपि प्रजापतौ' इति **मेदिनी** इति **अमरकोश**व्याख्याने (2.26)।
4. 'यजि**मनि**—' (द. उ. 1-134) इति युच्प्रत्यये रूपमेवम्। **मन्युः**=दैन्यम्, यागः, अन्तर्गतः क्रोधश्च।
5. 'गुधृवीपचिवचियमि**मनि**—' (द. उ. 8.89) इति त्रप्रत्यये रूपमेवम्। 'वेदभेदे गुह्यवादे **मन्त्रः**—' इति **अमरः** (3.167)।
6. 'वनि**मनिभ्याम्**—' (द. उ. 8.99) इति अरप्रत्यये ठकारे चान्तादेशे रूपमेवम्। **मठरः**=ज्ञानी, गोत्रं च। **मूढः** इति **क्षीरस्वामी**।
7. '**मने**र्दीर्घश्च' (द. उ. 9.23) इति सप्रत्यये दीर्घे च रूपमेवम्। मन्यते तदिति **मांसम्**=पिशितम् इत्यर्थः।
8. 'फलिपाटिनमि**मनि**—' (द. उ. 1.103) इति उप्रत्यये धकारादेशे च रूपम्। मन्यते तदतिशयेन इति **मधु**=माध्वी।
9. 'असुन्' (द. उ. 9. 49) इति असुन्प्रत्यये रूपमेवम्।

**(1219) "मनु अवबोधने"** (VIII-तनादिः-1471. सक.सेट्. आत्म.)

'स्तम्भे मानयते, ज्ञाने मन्यते **मनुते** पदम् ॥' (श्लो. 125) इति **देवः** ।

'—**बोधने** इति **मैत्रेयः** ।' इति **मा. धा. वृत्तिटीका** ।

मानकः-निका, मानकः-निका, [1]मिमनिषकः-षिका, मम्मनकः-मंमनकः-निका; मनिता-त्री, मानयिता-त्री, मिमनिषिता-त्री, मम्मनिता-मंमनिता-त्री; इत्यादीनि सर्वाणि रूपाणि दैवादिक**मन्यति**वत् (1217) ज्ञेयानि । क्विपि [2]हरिमत्-हरिमतौ-हरिमतः; [3]मतः-तम्-तवान्, [4]मनितम्-तः-तवान्, [5]मनित्वा-मत्वा, [6]मेनका, [7]अभिमत्य, [8]मन्तिः, [A]मन्वानः इतीमानि रूपाणि अस्य धातोः विशेषेण संभवन्तीति विशेषः ।

---

1. अस्य धातोः सेट्त्वात् सनि रूपमेवम् । एवं सन्नन्ते सर्वत्र बोध्यम् । शुद्धात् तृजादिषु च एवमेव ऊह्यम् ।
2. 'गमः क्वौ' (6-4-40) इत्यत्र 'गमादीनामिति वक्तव्यम्' इति वचनात् क्विपि अनुनासिकलोपे, 'ह्रस्वस्य—' (6-1-71) इति तुकि च रूपमेवम् ।
3. निष्ठायाम्, 'अनुदात्तोपदेशवनति**तनोत्यादीनाम्**—' (6-4-37) इति अनुनासिकलोपे रूपमेवम् ।
4. निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इति निषेधस्यानित्यत्वादिट् । तदनित्यत्वे च, '**कृती छेदने**' (तु. से. पर.) इतीदित्करणं लिङ्गम् । अन्यथा, 'सेऽसिचि—' (7-2-57) इति वेट्कत्वात् सिद्धे किं तेन? ' इति **अमरव्याख्यायाम्** (1-107) प्रतिपादितत्वात् **मनितम्** इत्यपि साधुरिति ज्ञेयम् । तथा—'बुद्धं बुधितं **मनितम्**' इत्य**मरः** । 'एवमेव **स्वामी**' इति **प्र. सर्वस्वे** ।
5. '**उदितो** वा' (7-2-56) इति क्त्वायामिड्विकल्पः । इट्पक्षे **मनित्वा** । इडभावपक्षे, अनुनासिकलोपे **मत्वा** इति रूपद्वयं बोध्यम् ।
6. 'आशिषि च' (3-1-150) इति वुन् । 'नशि**मन्यो**रलिट्**येत्वं** वक्तव्यम्' (वा. 6-4-120) इति वचनात् एत्वे रूपमेवम् । "—'**मेनका**' इत्यपि भाषायां न प्राप्नोति । यदि तु इष्यते पृषोदरादित्वाद्भविष्यति । ... .......'आशिषि चोपसंख्यानम्' (वा. 7-3-45) इति इत्वाभावः ।" इति प्रकृतसूत्र**भाष्ये** (6-4-120) **कैयटे** प्रतिपादितम् ।
7. ल्यपि, 'वा ल्यपि' (6-4-38) इत्यस्य व्यवस्थितविभाषाश्रयणाद् अत्र नान्तानिटां नित्यम् अनुनासिकलोपः । तेन **अभिमत्य** इत्येकमेव रूपम् ।
8. तनोत्यादित्वात् क्तिचि 'न क्तिचि दीर्घश्च' (6-4-39) इति दीर्घानुनासिकलोपनिषेधे रूपमेवम् ।

A. 'कंसस्तृणीकृतरिपुः घृणिमान् वतार्ति **मन्वान** एकमथ मञ्चमलञ्चकार ॥' धा.का.3.4.



**(1220) "मन्थ विलोडने"** (I-भ्वादिः-42. सक. सेट्. पर.) [अ]

'**विलोडनम्**=क्षोभणम्' इति **मा. धा. वृत्तिः** । अयं द्विकर्मकः ।

'हिंसासंक्लेशयोर्मन्थेत्, मथेन्मथ्नाति लोडने ।' (श्लो. 98) इति **देवः** ।

मन्थकः-न्थिका, मन्थकः-न्थिका, मिमन्थिषकः-षिका, मामथकः-थिका; मन्थिता-त्री, मन्थयिता-त्री, मिमन्थिषिता-त्री, मामथिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि **कुथ्नाति**वत् (223) बोध्यानि । क्विपि-मत्-मथ्-मथौ-मथः; [1]मन्थन्-न्ती, [2]मन्थः, मन्थनम्-[3]मन्थनी, [4]मथित्वा-मन्थित्वा, [5]मन्थानः इमानि रूपाणि अस्य धातोः विशेषः ।

**(1221) "मन्थ विलोडने"** (IX-क्र्यादिः-1511. सक. सेट्. पर.)

'—**विलोटने**' इति **पुरुषकारे** (श्लो. 98) पाठः ।

'हिंसासंक्लेशयोर्मन्थेत्, मथे**न्मथ्नाति** लोडने ।' (श्लो. 98) इति **देवः** ।

मन्थकः-न्थिका, मन्थकः-न्थिका, मिमन्थिषकः-षिका, मामथकः-थिका; मन्थिता-त्री, मन्थयिता-त्री, मिमन्थिषिता-त्री, मामथिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि क्रैयादिक**ग्रथ्नाति**वत् (437) बोध्यानि । [6]मन्थाः इति रूपं विशेषः ।

---

1. अस्य धातोः भ्वादित्वाद् औत्सर्गिके शपि रूपमेवम् ।
2. 'हलश्च' (3-3-121) इति करणे संज्ञायां घञ् ।
3. 'करणाधिकरणयोश्च' (3-3-117) इति अधिकरणे ल्युडन्तात् स्त्रियाम्, 'टिड्ढाणञ्—' (4-1-15) इति ङीपि रूपमेवम् ।
4. क्त्वायाम्, '**नोपधात् थफान्ताद्वा**' (1-2-23) इति कित्वविकल्पनात् पक्षे नलोपः । तेन रूपद्वयं ज्ञेयम् ।
5. बाहुलकात् आनच्प्रत्यये रूपम् ।
6. '**मन्थः**' (द. उ. 6-62) इति इनिप्रत्ययः किच्च । मथ्नातीति **मन्थाः**=वायुः, वैशाखः, वज्रश्च । 'पथि**मथि**—' (7-1-85) इत्याकारे 'इतोऽत्—' (7-1-86) इत्यकारे च प्रथमैकवचने रूपमेवम् । 'वैशाखो मन्थमन्थानमन्थानो मन्थदण्डके' इत्यमरः (2.74) ।

[अ] "अत्रायं धातुर्यद्यपि **क्षीरस्वाम्यादिभिः** न पठ्यते, तथापि **मैत्रेय-चन्द्र-दुर्गैः** पठितत्वात्, 'शमीगर्भादग्निं **मन्थति**', 'ततो यथा प्राशु **मन्थति** । यदि **मथ्यमानो** न जायेत' इत्यादिदर्शनाच्चास्त्येव ।" इति **मा. धा. वृत्तिः** ।

(1222) **"मभ्र गत्यर्थः"** (I-भ्वादिः-558. सक. सेट्. पर.)

मभ्रकः-भ्रिका, मभ्रकः-भ्रिका, मिमभ्रिषकः-[1]मिमब्भ्रिषकः-षिका, मामभ्रकः-भ्रिका ; मभ्रिता-त्री, मभ्रयिता-त्री, मिमभ्रिषिता-त्री, मामभ्रिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कर्बति**वत् (173) बोध्यानि । कर्मणि क्तप्रत्यये-[A]मभ्रितः इति ।

(1223) **"मय गतौ"** (I-भ्वादिः-477. सक. सेट्. आत्म.)

मायकः-यिका, मायकः-यिका, मिमयिषकः-षिका, मामयकः-यिका ; मयिता-त्री, माययिता-त्री, मिमयिषिता-त्री, मामयिता-त्री ; [2]प्रमत्-प्रमतौ-प्रमतः, [3]मयिता, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**चयति**वत् (502) ज्ञेयानि । ल्यपि-[B]प्रमय्य इति ।

(1224) **"मर्च शब्दार्थे"** (X-चुरादिः-1650. अक. सेट्. उभ.)

अयं धातुः **क्षीरतरङ्गिण्यां, सि. कौमुद्यादिषु** च स्वतन्त्रेण पठ्यते । अन्ये तु पाठान्तरत्वेनाहुः । 'मर्ज—' इत्यपि **क्षीरस्वामी** ।
मर्चकः-र्चिका, मिमर्चयिषकः-षिका ; मर्चयिता-त्री, मिमर्चयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**गर्जयति**वत् (378) बोध्यानि । शतरि मर्चयन्-[C]न्ती इति ।

---

1. सनि 'अनचि च' (8-4-47) इति भकारस्य पक्षे द्विर्वचने 'झलां जश् झशि' (8-4-53) इति भकारस्य जश्त्वे रूपमेवम् । द्विर्वचनाभावे **मिमभ्रिषकः** इति सन्नन्ते सर्वत्र रूपद्वयं बोध्यम् ।
2. क्विपि 'लोपो व्योर्वलि' (6-1-66) इति यकारलोपे 'ह्रस्वस्य पिति—' (6-1-71) इति तुकि च रूपमेवम् ।
3. तच्छीलादिषु कर्तृषु 'अनुदात्तेतश्च हलादेः' (3-2-149) इति प्राप्तस्य युचः, 'न यः' (3-2-152) इति निषेधात् 'तृन्' (3-2-135) इत्यौत्सर्गिकस्तृन्नेव ।

A. 'क्षमरन् मनोदुर्गमभ्रमेचकं बभ्रद्वधूविभ्रमवृष्टिमभ्रितम् ॥' धा. का. 1.71.
B. 'पयः प्रदोहादिरताः **प्रमय्य** तं प्रैक्षन्त नूलाचयितं कुतूहलात् ॥' धा. का. 1.61.
C. 'इत्थं सुगाजितमृदङ्गविमार्जनानि संवार्थं **मर्चयति** घारितशङ्कमस्मिन् ।' धा. का. 3.28.



(1225) **"मर्ब गतौ"** (I-भ्वादिः-419. सक. सेट्. पर.)

मर्बकः-र्बिका, मर्बकः-र्बिका, मिमर्बिषकः-षिका, मामर्बकः-र्बिका ; मर्बिता-त्री, मर्बयिता-त्री, मिमर्बिषिता-त्री, मामर्बिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कर्बति**वत् (173) बोध्यानि । ल्यपि-उपमर्ब्य[A] इति ।

(1226) **"मर्व पूरणे"** (I-भ्वादिः-578. सक. सेट्. पर.)

'गतौ च द्रुमे' इति **धा. का. व्याख्यायाम्** (1.73.) ।
[B]मर्वकः-र्विका, मर्वकः-र्विका, मिमर्विषकः-षिका, मामर्वकः-र्विका ; मर्विता-त्री, मर्वयिता-त्री, मिमर्विषिता-त्री, मामर्विता-त्री ; इत्यादीनि सर्वाणि रूपाणि भौवादिक**कर्वति**वत् (173A) ज्ञेयानि । क्विपि-[1]मः-मरौ-मरः इति रूपमिति विशेषः ।

(1227) **"मल धारणे"** (I-भ्वादिः-493. सक. सेट्. आत्म.)

मालकः-लिका, मालकः-लिका, मिमलिषकः-षिका, मामलकः-लिका ; मलिता-त्री, मालयिता-त्री, मिमलिषिता-त्री, मामलिता-त्री ; इत्यादीनि सर्वाणि रूपाणि प्रातिस्विकरूपाणि विना भौवादिक**कलति**वत् (174) ज्ञेयानि । [2]मलम्, [3]कमलम्, [4]परिमलम्, [5]माला-माली,

---

1. 'राल्लोपः' (6-4-21) इति वकारस्य लोपः । रुत्वविसर्गौ च भवतः ।
2. शरीरं मल्यते धार्यते इत्यर्थे अच्प्रत्यये एवं रूपम् ।
3. केन मल्यते इति 'घञर्थे कविधानम्—' (वा. 3-3-58) इति कः । 'कर्तृकरणे कृता बहुलम्' (2-1-32) इति समासः ।
4. मल्यते=धार्यते इति 'अकर्तरि च कारके संज्ञायाम्' (3-3-19) इति कर्मणि संज्ञायां विषये घञ्प्रत्ययः । संज्ञापूर्वकत्वात् वृद्ध्यभावः । 'घनो घ च' (3-3-125) इति घो वा । चकारात् घञ् च । यद्वा मलते धारयतीत्यर्थे अचि रूपमेवम् । 'विमर्दोत्थे **परिमलो** गन्धे जनमनोहरे ।' **इत्यमरः** (1.10) ।
5. 'मल्यते धार्यते इति माला, घञ् । संज्ञायां पुंस्त्वं प्रायिकम्' इति **प्र. सर्वस्वे** । व्रीह्यादित्वात् (5-2-116) इनिप्रत्यये **माली** इति ।

A. 'प्रबर्ब्य शैलानुप**मर्ब्य** पद्मिनीं प्रखर्ब्य चाशाः श्रमशोणितैरिव ॥' धा. का. 1.54.
B. 'अफर्विताकाङ्क्षित**मर्वकं** सतां मांसादिसंचर्वकदुष्टभर्वकम् ।' धा. का. 1.74.

[1]मालभारी [2]माल्यम्, [3]मलिनः-मलीमसः, [4]आमलकम्-आमलकी, [5]मलयः; इत्यादीनि रूपाणि अस्य धातोः विशेषेण भवन्तीति विशेषः। यङन्तात् शानचि-[A]मामल्यमानः इति।

(1228) **"मल्ल धारणे"** (I-भ्वादिः-494. सक. सेट्. आत्म.)

मल्लकः-ल्लिका, मल्लकः-ल्लिका, मिमल्लिषकः-षिका, मामल्लकः-ल्लिका; मल्लिता-त्री, मल्लयिता-त्री, मिमल्लिषिता-त्री, मामल्लिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कड्डति**वत् (156) बोध्यानि। [6]मल्लिका,[A] [7]मल्लकः, [8]मल्लमल्लम् इमानि रूपाण्यधिकान्यत्रेति विशेषः।

(1229) **"मव बन्धने"** (I-भ्वादिः-599. सक. सेट्. पर.)

मावकः-विका, मावकः-विका, मिमविषकः-षिका, मामवकः-विका; मविता-त्री, मावयिता-त्री, मिमविषिता-त्री, मामविता-त्री; इत्यादीनि सर्वाणि रूपाणि विशेषरूपाणि विना भौवादिक**कसति**वत्

1. 'इष्टकेषीका**मालानां** चिततूलभारिषु' (6-3-65) तति भारिन्शब्दे उत्तरपदे **माला**शब्दस्य ह्रस्वे रूपमेवम्=**मालभारिणी**=कन्या। 'तदन्तस्यापि ग्रहणम्' इति वचनात् उत्**पलमालभारिणी**=कन्या इत्यपि भवति।
2. 'ऋहलोर्ण्यत्' (3-1-124) इति ण्यति रूपमेवम्।
3. 'ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्**मलिनमलीमसाः**' (5-2-114) इति मत्वर्थे संज्ञायां विषये एते शब्दाः निपात्यन्ते। इनच्प्रत्यये—**मलिनः**, ईमसप्रत्यये-**मलीमसः** इति ज्ञेयम्।
4. 'क्वुन् शिल्पिसंज्ञयोः—' (द. उ. 3.5) इति क्वुन्प्रत्यये, स्त्रियाम्, 'षिद्गौरादिभ्यश्च' (4-1-41) इति ङीषि च रूपमेवम्।
5. 'वलि**मलि**तनिभ्यः कयन्' (द. उ. 8. 10) इति कयन्प्रत्यये रूपमेवम्। **मलयः**= भूधरविशेषः।
6. 'संज्ञायाम्' (3-3-109) इति संज्ञायां विषये स्त्रियां ण्वुलि रूपमेवम्। '**मल्लिका** तृणशून्येऽपि' इति **मेदिनी**।
7. संज्ञायां क्वुन्प्रत्यये **मल्लकः** इति रूपम्।
8. मलं मल्लते धार्यते इति **मलमल्लम्**=कौपीनम्। 'कर्मण्यण्' (3-2-1) इत्यण्।

A. '**मामल्यमानं** स्मित**मल्लिका**वलीमाभाल्यदैत्याधिपमल्लनोद्धुरम्।' धा. का. 1.64.



(180) बोध्यानि। क्विपि [1]मूः-मुवौ-मुवः, निष्ठायाम्-[2]मवितम्-तः-तवान्, मूतम्-मूतः-मूतवान्, क्तिनि[A]मूतिः; इमानि रूपाण्यस्य धातोः विशेषेण भवन्तीति विशेषः।

(1230) **"म्व्य बन्धने"** (I-भ्वादिः-508. सक. सेट्. पर.)

म्व्यकः-म्व्यिका, म्व्यकः-म्व्यिका, मिम्व्यिषकः-षिका, [3]मामव्यकः-म्व्यिका; म्व्यिता-त्री, म्व्ययिता-त्री, मिम्व्यिषिता-त्री, [4]मामविता-मामव्यिता-त्री; [B]म्व्यन्-न्ती, म्व्ययन्-न्ती, मिम्व्यिषन्-न्ती; — — म्व्यिष्यन्-न्ती-ती, म्व्ययिष्यन्-न्ती-ती, मिम्व्यिषिष्यन्-न्ती-ती; — व्यतिम्व्यमानः, म्व्ययमानः, व्यतिमिम्व्यिषमाणः, मामव्य्यमानः-मामव्यमानः; व्यतिम्व्यिष्यमाणः; म्व्ययिष्यमाणः, व्यतिमिम्व्यिषिष्यमाणः, मामव्यिष्यमाणः; [5]मौः-मावौ-मावः; — — — म्व्यितम्-तः, म्व्यितः, मिम्व्यिषितः, मामव्यितः-तवान्; म्व्यः, म्व्यः, मिम्व्यिषुः, मामव्यः; म्व्यितव्यम्, म्व्ययितव्यम्, मिम्व्यिषितव्यम्, मामव्यितव्यम्; म्व्यनीयम्, म्व्यनीयम्, मिम्व्यिषणीयम्, मामव्यनीयम्; [6]म्व्यम्-म्व्य्यम्, म्व्यम्, मिमविष्यम्, [7]मामव्य्यम्-मामव्यम्;

1. क्वौ परतः 'ज्वरत्वर[श्रि]स्रिव्यवि**मवा**मुपधायाश्च' (6-4-20) इति उपधायाः वकारस्य च स्थाने ऊठादेशे सवर्णदीर्घे विसर्गे च रूपमेवम्। एवं क्तिन्यपि ज्ञेयम्।
2. धातोरस्य सेट्त्वात् **मवितम्** इति रूपम्। **काशिकायां** तु (6-4-20) **मूतम्-तः-तवान्** इति दृश्यते।
3. यङन्तात् ण्वुलि अल्लोपयलोपयो रूपमेवम्।
4. यङन्तात् तृजादिषु अल्लोपयलोपयोः, 'हलो यमां यमि लोपः' (8-4-64) इति यकारलोपे च **मामविता** इति रूपम्। 'हलो यमाम्—' (8-4-64) इति लोपस्य पाक्षिकत्वात्, तदभावे **मामव्यिता** इति रूपमिति ज्ञेयम्।
5. क्विपि, 'लोपो व्योर्वलि' (6-1-66) इति धातुयकारलोपे धातुवकारस्य ऊठि, 'एत्येधत्य**ूठ्सु**' (6-1-89) इति वृद्धौ च रूपमेवम्।
6. ण्यति, 'हलो यमाम्—' (8-4-64) इति यलोपस्य पाक्षिकत्वाद्रूपद्वयम्। एवमेव यकि, ल्यपि च रूपद्वयं ज्ञेयम्।
7. यङन्तात् यत्प्रत्यये 'हलो यमां यमि—' (8-4-64) इति लोपस्य वैकल्पिकत्वाद् रूपद्वयम्। एवमेव यकि, ल्यपि शानजन्तेऽपि ज्ञेयम्।

A. 'कृण्वन्तमाश्चर्यगती**रमूति**दं जगन्त्यवन्तं त्रिदशोपधावितम्॥' धा. का. 1.76.
B. 'प्रम्लेवितं रेवितवत्समण्डलीं **म्व्यद्भि**राभीरजनैरसूक्ष्यकैः॥' धा. का. 1.65.

| | | | |
|---|---|---|---|
| ईषन्मव्यः-दुर्मव्यः-सुमव्यः ; | — | — | — |
| मव्यमानः-मव्व्यमानः, | मव्यमानः, | मिमव्यिष्यमाणः, | मामव्व्यमानः ; |
| मव्यः, | मव्यः, | मिमव्यिषः, | मामव्यः ; |
| मव्यितुम् , | मव्ययितुम् , | मिमव्यिषितुम् , | मामव्यितुम् ; |
| [1]मव्या, | मव्यना, | मिमव्यिषा, | मामव्या ; |
| मव्यनम् , | मव्यनम् , | मिमव्यिषणम् , | मामव्यनम् ; |
| मव्यित्वा, | मव्ययित्वा, | मिमव्यिषित्वा, | मामव्यित्वा ; |
| प्रमव्य-प्रमव्व्य, | प्रमव्व्य, | प्रमिमव्यिष्य, | प्रमामव्य-प्रमामव्व्य ; |
| मव्यम् २, } मव्यित्वा २, } | मव्यम् २, } मव्ययित्वा २, } | मिमव्यिषम् २, } मिमव्यिषित्वा २, } | मामव्यम् २; } ममव्यित्वा २; } |

[2]मवाका.

## (1231) " मश शब्दे रोषकृते च "

(I-भ्वादिः-724. अक. सेट्. पर.)

'शब्दने, रोषक्रियायां चार्थे—' इति **क्षीरस्वामी**। "शब्दकोपयोः-इति **द्रुमोक्त्या रोषकृतम्**=रोष एव।" इति **धा. का. व्याख्यायाम्**(1-90)। माशकः-शिका, माशकः-शिका, मिमशिषकः-षिका, मामशकः-शिका ; मशिता-त्री, माशयिता-त्री, मिमशिषिता-त्री, मामशिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि आदादिक**कशति**वत् (178) ज्ञेयानि। शतरि—कशन्-न्ती, क्विपि-[3]मट्-मड्-मशौ-मशः ; इत्यादीनि रूपाण्यस्य भवन्तीति विशेषः। [4]मशकः। [5]मशनः।

## (1232) " मष हिंसार्थः " (I-भ्वादिः-692. सक. सेट्. पर.)

माषकः-षिका, माषकः-षिका, मिमषिषकः-षिका, मामषकः-षिका ; मषिता-त्री, माषयिता-त्री, मिमषिषिता-त्री, मामषिता-त्री ; इत्यादीनि

---

1. 'गुरोश्च हलः' (3-3-103) इत्यकारप्रत्यये रूपमेवम्।
2. 'बलाकादयश्च' (द. उ. 3.32) इति आकप्रत्यये यलोपे च निपात्यते। **मवाका**=करेणुबन्धनम्।
3. क्विपि, 'व्रश्च—' (8-2-36) इत्यादिना षत्वे जश्त्वचर्त्वयोश्च रूपमेवम्।
4. 'क्वुन् शिल्पिसंज्ञयोः—' (द. उ. 3.5) इति संज्ञायां क्वुन्प्रत्यये रूपमेवम्।
5. 'चलनशब्दार्थात्—' (3-2-148) इति ताच्छीलिके युचि रूपमेवम्।



सर्वाण्यपि रूपाणि भौवादिक**खषति**वत् (346) ज्ञेयानि। [1]दण्डोपमाषम्-दण्डेनोपमाषं वा गाः कालयति। [2]माषः, [3]मषी।

## (1233) " मसी परिणामे " (IV-दिवादिः-1221. अक. सेट्. पर.)

**परिणामः**—विकारः।

'—परिमाणे' इति **कविकल्पद्रुम-माधवीयधातुवृत्त्योः** पाठः। 'समी—' इति **क्वचित्** पाठः।

मासकः-सिका, मासकः-सिका, मिमसिषकः-षिका, मामसकः-सिका ; मसिता-त्री, मासयिता-त्री, मिमसिषिता-त्री, मामसिता-त्री ; इत्यादीनि समस्तान्यपि रूपाणि प्रातिस्विकरूपाणि विना भौवादिक**ग्रसति**वत् (440) ज्ञेयानि। [4]मस्तः-मस्तवान्, मस्तकम्, [5]मासः, [6]मस्यन्-न्ती-ती, [7]मः-मसौ-मसः, इतीमानि रूपाण्यस्मात् सम्भवन्तीति विशेषः।

## (1234) " मस्क गत्यर्थे " (I-भ्वादिः-102. सक. सेट्. आत्म.)

मस्ककः-स्किका, मस्ककः-स्किका, मिमस्किषकः-षिका, मामस्ककः-स्किका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कर्जति**वत् (169) ज्ञेयानि। क्विपि [8]मक्-मस्कौ-मस्कः इति रूपम्। [9]मस्कनः। अस्य आत्मनेपदित्वात् शानचि मस्कमानः इति भवति।

---

1. 'हिंसार्थानां च समानकर्मकाणाम्' (3-4-48) इति णमुल्। 'तृतीयाप्रभृतीनि—' (2-2-21) इति समासविकल्पः।
2. मष्यते=हिंस्यते बुद्धिभ्रंशसम्पादनेन इति **माषः**=धान्यविशेषः। संज्ञायाम्, 'हलश्च' (3-3-121) इति करणे घञ्।
3. 'इक् कृष्यादिभ्यः' (वा. 3-3-108) इतीक्प्रत्यये, 'कृदिकारादक्तिनः' (ग. सू. 4-1-45) इति ङीषि च **मषी** इति सिद्ध्यति। **मषी**=स्याही।
4. ईदित्वात्, '**श्वीदितो निष्ठायाम्**' (7-2-14) इति निष्ठायामिण्निषेधे रूपमेवम्। निष्ठान्तात् संज्ञायां कन्प्रत्यये **मस्तकम्** इति भवति।
5. मस्यते=परिमीयतेऽनेनेति **मासः**=त्रिंशद्दिनावधिकः कालविशेषः। एतच्च धातोरस्य परिमाणार्थकत्वे ज्ञेयम्। परिणामार्थकत्वे तु मस्यति=पदार्थान् परिणमयतीत्यर्थे बाहुलकात् संज्ञायां घञि **मासः** इति सिद्ध्यति। **मास्**शब्दस्तु प्रकृत्यन्तरम्, नास्माद्धातोः सिद्धमिति ज्ञेयम्।
6. शतरि दिवादित्वात् श्यनि रूपमेवम्।
7. क्विपि धातुसकारस्य रुत्वे विसर्गे च रूपमेवम्।
8. 'स्कोः संयोगाद्योरन्ते च' (8-2-29) इति सकारस्य पदान्तनिमित्तको लोपः।
9. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति ताच्छीलिके युचि रूपम्।

(1235) “टु मस्जो शुद्धौ” (VI-तुदादिः-1415. अक. अनि. पर.)

‘शुद्ध्या स्नानम्, ब्रुडनं च लक्ष्यते।’ इति **क्षीरस्वामी**। ब्रुडनम्=संवरणम्।

[1]मज्जकः-ज्जिका, मज्जकः-ज्जिका, [2]मिमङ्क्षकः-क्षिका, मामज्जकः-ज्जिका ;
[3]मङ्क्ता-मङ्क्त्री, मज्जयिता-त्री, मिमङ्क्षिता-त्री, मामज्जिता-त्री ;
[4]मज्जन्-न्ती, मज्जयन्-न्ती, मिमङ्क्षन्-न्ती ; —
मङ्क्ष्यन्-न्ती-ती, मज्जयिष्यन्-न्ती-ती, मिमङ्क्षिष्यन्-न्ती-ती ; —
— [5]मज्जयमानः, — मामज्ज्यमानः ;
— मज्जयिष्यमाणः, — मामज्जिष्यमाणः ;
[6]सुमक्-सुमग्-सुमज्जौ-सुमज्जः ; — — —
[7]मग्नः-मग्नवान्, मज्जितः, मिमङ्क्षितः, मामज्जितः-तवान् ;
मज्जः, मज्जः, मिमङ्क्षुः, मामज्जः ;
मङ्क्तव्यम्, मज्जयितव्यम्, मिमङ्क्षितव्यम्, मामज्जितव्यम् ;
मज्जनीयम्, मज्जनीयम्, मिमङ्क्षणीयम्, मामज्जनीयम् ;

---

1. ण्वुलि, ‘झलां जश् झशि’ (8-4-53) इति सकारस्य दकारे, तस्य श्चुत्वेन जकारः। एवमेव ण्यन्तेषु, यङन्तेषु, शुद्धे अजादिप्रत्ययेषु च रूपनिष्पत्तिरिति ज्ञेयम्।
2. सन्नन्तात् ण्वुलि, धातोरनिद्त्वेन झलादिप्रत्ययपरकत्वात्, ‘**मस्जि**नशोर्झलि’ (7-1-60) इति नुमागमः। अत्र च ‘मिदचोऽन्त्यात् परः’ (1-1-47) इति नियमं बाधित्वा, ‘**मस्जे**रन्त्यात् पूर्वं नुममिच्छन्ति अनुषङ्गादिलोपार्थम्’ (वा. 1-1-47) इति **भाष्या**युक्तप्रकारेण धातुजकारात् पूर्वं नुम्। तेन सकारस्य संयोगादिलोपे, कुत्वे च रूपमेवम्। एवमेव सन्नन्ते सर्वत्र प्रक्रियोह्या।
3. तृचि अन्त्यात् पूर्वं नुमि, ‘स्कोः संयोगाद्योरन्ते च’ (8-2-29) इति संयोगादिलोपे रूपमेवम्। एवमेव तव्यदादिष्वपि ज्ञेयम्।
4. शतरि, तुदादित्वात् शपोऽपवादत्वेन शप्रत्यये जश्त्वश्चुत्वयो रूपमेवम्।
5. शुद्धेश्चेतनकर्तृकत्वे, ण्यन्तात्, ‘अणावकर्मकात्—’ (1-3-88) इति परस्मैपदमेव। अचित्तवत्कर्तृकत्वे तु आत्मनेपदमपीत्यतोऽत्रात्मनेपदम्।
6. क्विपि, संयोगादिलोपे, जकारस्य कुत्वे च रूपमेवम्।
7. निष्ठायाम्, ‘**मस्जि**नशोः—’ (7-1-60) इति नुमि, सकारस्य संयोगादिलोपे, नुमो नकारस्य ‘अनिदिताम्—’ (6-4-24) इति लोपे, ‘ओदितश्च’ (8-2-45) इति निष्ठानत्वे, नत्वस्यासिद्धत्वेन झल्परकत्वात् ‘चोः कुः’ (8-2-30) इति कुत्वे च रूपमेवम्।



[1]मद्ग्यम्-मद्ग्यः, मज्ज्यम्, मिमङ्क्ष्यम्, मामज्ज्यम् ;
ईषन्मज्जः-दुर्मज्जः-सुमज्जः ; — — —
मज्ज्यमानः, मज्ज्यमानः, मिमङ्क्ष्यमाणः, मामज्ज्यमानः;
मद्गः, [2]मज्जथुः[A] मज्जः, मिमङ्क्षः, मामज्जः ;
मङ्क्तुम्, मज्जयितुम्, मिमङ्क्षितुम्, मामज्जितुम् ;
[3]मज्जा, मज्जना, मिमङ्क्षा, मामज्जा ;
मज्जनम्, मज्जनम्, मिमङ्क्षणम्, मामज्जनम् ;
[4]मङ्क्त्वा[B]-मक्त्वा, मज्जयित्वा, मिमङ्क्षित्वा, मामज्जित्वा ;
प्रमज्ज्य, प्रमज्ज्य, प्रमिमङ्क्ष्य, प्रमामज्ज्य ;
मज्जम् २ / मङ्क्त्वा २ / मक्त्वा २ } मज्जम् २ / मज्जयित्वा २ } मिमङ्क्षम् २ / मिमङ्क्षित्वा २ } मामज्जम् २ ; / मामज्जित्वा २ ; }
[5]मद्गुः, [6]मज्जा-मज्जानौ-मज्जानः, [7]मञ्जूषा, [8]मद्गुरः।

---

1. ण्यति, ‘चजोः कु घिण्ण्यतोः’ (7-3-52) इति धातुजकारस्य कुत्वे सकारस्य जश्त्वेन दकारे च रूपमेवम्। घञ्यप्येवमेव रूपनिष्पत्तिरिति ज्ञेयम्।
2. भावे, ‘ट्वितोऽथुच्’ (3-3-89) इत्यथुच्प्रत्यये रूपमेवम्।
3. ‘गुरोश्च हलः’ (3-3-103) इति स्त्रियामकारप्रत्यये रूपमेवम्। **केचित्तु** क्तिनि, नुमि नलोपे च **मक्ति**रिति साधयन्ति। ‘प्रसज्य चापवादविषयं तत उत्सर्गोऽभिनिविशते’ (परि. 65) इति न्यायानुसरणे तु **मज्जा** इत्यकारप्रत्ययान्तं रूपमेव न्याय्यमिति प्रतिभाति।
4. क्त्वाप्रत्यये, ‘**जान्त**नशां विभाषा’ (6-4-32) इत्यनुनासिकलोपनिषेधविकल्पः। निषेधविकल्पे विधिविकल्पपर्यवसानात् अनुनासिकलोपो विभाषा भवतीति ज्ञेयम्। तेन रूपद्वयम्।
5. ‘भृमृशीतृचरित्सरितनिमि**मस्जिभ्य** उः’ (द. उ-1-92) इत्युप्रत्यये रूपमेवम्। मज्जत्यम्भसीति **मद्गुः**=जलपक्षिविशेषः। न्यङ्क्वादि (7-3-53) पाठात् जकारस्य कुत्वेन गकारः।
6. ‘श्वन्नुक्षन्—’ (द. उ. 6-55) इत्यादिना कनिन्प्रत्यये रूपमेवम्। मज्जत्यस्थिष्विति **मज्जा**=अस्थ्यन्तसारः। नकारान्तोऽयं शब्दः।
7. ‘**मस्जे**र्नुम् च’ (द. उ. 9-18) इत्यूषन्प्रत्यये, नुमागमे च रूपमेवम्। मज्जत्यस्यामिति **मञ्जूषा**=पेटिका।
8. बाहुलकादौणादिकेऽरप्रत्यये न्यङ्क्वादित्वात् (7-3-53) कुत्वे च रूपम्। **मद्गुरः**=जलपक्षिविशेषः।

A. ‘तल्पे कान्तान्तरैः सार्धं मन्येऽहं धिङ् **निमज्जथुम्**॥’ भ. का. 5.20.
B. ‘अध्यास्त यं नक्रकुलं स्थवीयो द्विपोऽप्य**मङ्क्त्वा** न यमुत्ततार।’ वा.वि. 3 38.

(1236) **"मह पूजायाम्"** (I-भ्वादिः-730. सक. सेट्. पर.)

'महयेन्महतीत्येते पूजायां णौ शपि क्रमात् ।' (श्लो. 196) इति **देवः** ।

**क्षीरस्वामी** नामुं धातुं पठति ।

माहकः-हिका, माहकः-हिका, मिमहिषकः-षिका, मामहकः-हिका ; महिता-त्री, माहयिता-त्री, मिमहिषिता-त्री, मामहिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**चहति**वत् (514) बोध्यानि । [1]मही, [2]महिषः-महिषी, महिष्मान्, [3]महत्-महान्-महान्तौ-महान्तः, [4]माहिनम्-महिनम्, महिमा, इत्यादीनि रूपाणि अस्य धातोः विशेषेण संभवन्तीति विशेषः । कर्मणि क्तप्रत्यये [A]महितम्-तः इति ।

(1237) **"मह पूजायाम्"** (X-चुरादिः-1868. सक. सेट्. उभ.)

**अदन्तः, कथादिश्च ।**

'**महयेत्** महतीत्येते पूजायां णौ शपि क्रमात् ।' (श्लो. 196) इति **देवः** । [5]महकः-हिका, मिमहयिषकः-षिका; महयिता-त्री, मिमहयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चहयति**वत् (515) बोध्यानि । [6]महः-मही, [7]मघवन्, इति रूपाणि विशेषेण भवन्ति इति ज्ञेयम् ।

---

1. पचाद्यजन्तात् **मह**शब्दात् गौरादित्वात् (4-1-41) स्त्रियां ङीषि रूपमेवम् ।
2. 'अवि**मह्यो**ष्टिषच्' (द. उ. 9-3) इति टिषच्प्रत्यये **महिषः** इति रूपम् । टित्वात् स्त्रियां **महिषी** इति भवति । महिषा अस्मिन् सन्तीति **महिष्मान्**= देशः । 'महिषाच्चेति वक्तव्यम्' (वा. 4-2-87) इति 'तदस्मिन्नस्तीति देशे तन्नाम्नि' (4-2-67) इति विषये ड्मतुप्प्रत्यये डित्वाट्टिलोपे च रूपमेवम् ।
3. 'वर्त्तमाने पृषद्बृहन्**महद्**—' (द. उ. 6-5) इति वर्तमानकाले कतिप्रत्यये शतृवदित्यतिदेशान्नुमि, 'सान्त**महतः** संयोगस्य' (6-4-10) इत्यसंबुद्धौ सर्वनामस्थाने परतः उपधायाः दीर्घे च **महान्** इति रूपं सिध्यति ।
4. '**महे**रिनण् च' (द. उ. 5.19) इति इनण्प्रत्यये **माहिनम्** इति, चकारात् इनन्प्रत्यये **महिनम्** इति च रूपम् । **महिनम्** = राज्यम् ।
5. अस्य धातोः **अदन्तेषु** पाठसामर्थ्यात् अल्लोपस्य स्थानिवद्भावेन णिच्परत्वाभावात् 'अत उपधायाः' (7-2-116) इति वृद्धिर्नेति ज्ञेयम् ।
6. 'पुंसि संज्ञायां घः—' (3-3-118) इति घप्रत्यये रूपमेवम् । स्त्रियां गौरादिपाठात् (4-1-41) ङीषि **मही** इति सिद्ध्यति ।
7. 'श्वन्नुक्षन्.... ...' (द. उ. 6-55) इति कनिन्प्रत्यये घकारेऽन्तादेशे वुगागमे च निपातिते रूपमेवम् ।

A. 'चाहेना**महित**स्य चास्य निधनोयोगं रहस्यूचिवान् ......॥' धा. का. 1.91.



णमुलि महम् २, महयित्वा २, इत्येकमेव रूपम् ।

(1238) **"महि वृद्धौ"** (I-भ्वादिः-634. अक. सेट्. आत्म.)

मंहकः-हिका, मंहकः-हिका, मिमंहिषकः-षिका, मामंहकः-हिका; मंहिता-त्री, मंहयिता-त्री, मिमंहिषिता-त्री, मामंहिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कण्ठति**वत् (149) ज्ञेयानि । कर्तरि क्तप्रत्यये मंहितः[A] इति, युचि-मंहनः इति च विशेषः ।

(1239) **"महि भाषार्थः"** (X-चुरादिः-1800. सक. सेट्. उभ.)

**आस्वदीयः । '—भासार्थः' इति क्षीरस्वामी ।**

मंहकः-हिका, मिमंहयिषकः-षिका, मंहकः-हिका, मिमंहिषकः-षिका, मामंहकः-हिका ; मंहयिता-त्री, मिमंहयिषिता-त्री, मंहिता-त्री, मिमंहिषिता-त्री, मामंहिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कुंशयति**वत् (232) ज्ञेयानि ।

(1240) **"मा माने"** (II-अदादिः-1062. सक. अनि. पर.)

'मिमीते मायते माने **माति** तत्रैव शब्लुकि ।' (श्लो. 9) इति **देवः** । '**मानम्**=वर्तनम्' इति **क्षीरस्वामी** । '—अन्तर्भावः' इति **मा. धा. वृत्तिः** । 'आधेयस्याधाराद् अनधिकपरिमाणताऽत्र **मानम्** ।' इति **पुरुषकारः** ।

[1]मायकः-यिका, [2]मापकः-पिका, [3]मित्सकः-त्सिका, [4]मेमीयकः-यिका ; माता-त्री, मापयिता-त्री, मित्सिता-त्री, मेमीयिता-त्री ;

---

1. ण्वुलि '**आतो** युक् चिण्कृतोः' (7-3-33) इति युगागमः । एवं घञ्णमुलादिष्वपि ज्ञेयम् ।
2. ण्यन्ते सर्वत्र 'अर्त्तिह्रीव्ली—' (7-3-36) इति आदन्तलक्षणे पुगागमे रूपमेवम् ।
3. 'सनि मी**मा**घु—' (7-4-54) इत्यादिना इस्भावे, 'अत्र लोपोऽभ्यासस्य' (7-4-58) इत्यभ्यासलोपे, 'सः स्यार्धधातुके' (7-4-49) इति सकारस्य तकारे, 'हलन्ताच्च' (1-2-10) इति सनः कित्वेन गुणाभावे च रूपमेवम् । एवं सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया ।
4. यङन्ते सर्वत्र, 'घु**मा**स्था—' (6-4-66) इतीकारे, 'गुणो यङ्लुकोः' (7-4-82) इत्यभ्यासे गुणः ।

A. 'अक्रूर एत्य बहुधागत**मंहितां**हाः... ...॥' धा. का. 1.80.

[1]निर्मान्-[A]न्ती-ती, मापयिष्यन्-न्ती-ती, मित्सिष्यन्-न्ती-ती ; —
— मापयमानः, मापयिष्यमाणः, — मेमीयमानः, मेमीयिष्यमाणः ;
प्रमीः-प्रम्यौ-प्रम्यः ; — — —
[2]मितम्-तः-तवान्, मापितः, मित्सितः, मेमीयितः-तवान् ;
[3]प्रमः, [4]मायः, माया-मायावी-मायिकः-मायी, [5]धान्यमायः, मापः,
मित्सुः, [6]मेम्यः ;
मातव्यम्, मापयितव्यम्, मित्सितव्यम्, मेमीयितव्यम् ;
[7]प्रनिमानीयम्-प्रणिमानीयम्, मापनीयम्, मित्सनीयम्, मेमीयनीयम् ;
[8]मेयम्, [9]पाय्यम्, माप्यम्, मित्स्यम्, मेमीय्यम् ;
ईषन्मानः-दुर्मानः-सुमानः ; — —

---

1. शतरि, अदादित्वेन शपो लुकि, सवर्णदीर्घे, 'आच्छीनद्योर्नुम्' (7-1-80) इति स्त्रियां नुम्विकल्पे च **निर्मान्ती-निर्माती** इति रूपद्वयम् इति ज्ञेयम्।

2. 'द्यतिस्यतिमास्थाम् इत् ति किति' (7-4-40) इति क्तप्रत्यये परतः प्रकृतेः इकारः। गुणनिषेधः। एवं क्त्वाक्तिन्प्रभृतिष्वपीकारो बोध्यः।

3. '**आतश्**चोपसर्गे' (3-1-136) इति कर्तरि कप्रत्ययः। '**आतो** लोप इटि च' (6-4-64) इत्याकारलोपः।

4. 'श्याऽऽद्व्यध—' (3-1-141) इत्यादिना कर्तरि आदन्तलक्षणो णप्रत्ययः। '**आतो** युक् चिण्कृतोः' (7-3-33) इति युगागमः। स्त्रियां टापि **माया** इति सिद्ध्यति। **मायाश**ब्दात् मत्वर्थीये विनिप्रत्यये **मायावी** इति, व्रीह्यादित्वात् (5-2-116) इनिठन्प्रत्यययोश्च **मायी-मायिकः** इति च रूपाणि सिद्ध्यन्ति।

5. कर्मण्युपपदे कर्तरि, 'ह्वावा**मश्**च' (3-2-2) इत्यण्प्रत्यये युगागमे च रूपमेवम्। '**आतो**ऽनुपसर्गे कः' (3-2-3) इति प्राप्तस्य कप्रत्ययस्यापवादः।

6. यङन्तात् पचाद्यचि (3-1-134), 'यङोऽचि च' (2-4-74) इति यङो लुकि ईकारे, उत्तरखण्डे यणि च रूपमेवम्।

7. 'शेषे विभाषा—' (8-4-18) इति णेर्णत्वविकल्पः। 'नेर्गदनदपतपदघु**मा**—' (8-4-17) इत्यत्र नास्य धातोर्ग्रहणम्, अपि तु माङ्मेङोरेव ग्रहणम् इति **बहवः**।

8. यति परे, 'ईद् यति' (6-4-65) इति ईकारे गुणे च रूपमेवम्।

9. माने=परिमाणेऽभिधेये '**पाय्य**सान्नाय्यनिकाय्यधाय्या **मान**हविर्निवाससामिधेनीषु' (3-1-129) इत्यनेन ण्यदायादेशौ आदेः पकारश्च निपात्यन्ते।

A. 'ख्यान्त्यः कथाः प्राणभुदां पतीनां **निर्मान्त्य** इष्टानि वदन् वचत्यः।' धा. का. 2.50.



[1]मीयमानः, माप्यमानः, मित्स्यमानः, मेमीय्यमानः ;
मायः, [2]आमः, मापः, मित्सः, मेमीयः;
मातुम्, मापयितुम्, मित्सितुम्, मेमीयितुम् ;
[3]प्रमा-उपमा-अनुमा, प्रमितिः, मापना, मित्सा, मेमीया ;
प्रमाणम्, मापनम्, मित्सनम्, मेमीयनम् ;
मित्वा, मापयित्वा, मित्सित्वा, मेमीयित्वा ;
[4]प्रमाय, प्रमाप्य, प्रमित्स्य, प्रमेमीय्य ;
मायम् २, मित्वा २, } मापम् २, मापयित्वा २, } मित्सम् २, मित्सित्वा २, } मेमीयम् २ ; मेमीयित्वा २; }
[5]मेरुः, [6]मात्रा, [7]मासः।

---

1. यगन्ताच्छानशि ईकारे **मीयमानः** इति सिद्ध्यति। **क्षीरस्वामी** तु '**घुमा**स्था—' (6-4-66) इति सूत्रे नास्य धातोर्ग्रहणमिति 'सर्वत्र हि पा**मा**ग्रहणं लुग्विकरणस्य णत्ववर्जम्' इति वचनं किञ्चिदुपादाय **मायते** इति यकि रूपं साधितवान्। **भाष्यादिषु** नैतादृशं वचनमुपलभ्यते। **प्रक्रियाकौमुदीकारं** वर्जयित्वा सर्वेऽपि 'गा**मा**दाग्रहणेष्वविशेषः' (परि. 116) इति परिभाषामवलम्ब्य '**घुमा**स्था-' (6-4-66) इत्यादिषु सर्वत्र माग्रहणेष्वस्यापि ग्रहणमिच्छन्ति। स्पष्टमिदं **माधवधातुवृत्त्यादिषु**।

2. आ=समन्तात् मीयतेऽत्रेति **आमः**=अपक्वपदार्थः। अधिकरणे 'घञर्थे कविधानम्—' (वा. 3-3-58) इति कप्रत्यये, आकारलोपे रूपमेवम्।

3. स्त्रियां भावादौ, '**आतश्**चोपसर्गे' (3-3-106) इति क्तिन्नपवादोऽङ्प्रत्ययः। '**आतो** लोप इटि च' (6-4-64) इत्याकारलोपे अदन्तत्वेन टापि **प्रमा, उपमा** इत्यादिकं सिद्ध्यति। **प्रमितिः, उपमितिः, अनुमितिः** इत्यादयस्तु बाहुलकात् क्तिनि सिद्ध्यन्तीति ज्ञेयम्।

4. समासे क्त्वाप्रत्ययस्य ल्यबादेशे, 'न ल्यपि' (6-4-69) इतीकारनिषेधः।

5. '**मा**पो रुरी च' (द. उ. 1-157) इति रुप्रत्यये ईकारे चान्तादेशे गुणे रूपमेवम्। माति सूर्येन्दुभ्यामिति **मेरुः**=सुरगिरिः।

6. 'हुया**मा**—' (द. उ. 8.84) इति त्रन्प्रत्यये रूपमेवम्। मीयतेऽनेनेति **मात्रा**=अल्पपरिमाणम्।

7. मातीत्यर्थे '**मास**श्च' (द. उ. 9.27) इति सप्रत्ययो निपात्यते। **मासः**=त्रिंशद्दिनपरिच्छिन्नः कालविशेषः।

**(1241) "माक्षि काङ्क्षायाम्"** (I-भ्वादिः-669. सक. सेट्. पर.)

माङ्क्षकः-क्षिका, माङ्क्षकः-क्षिका, मिमाङ्क्षिषकः-षिका, मामाङ्क्षकः-क्षिका; माङ्क्षिता-त्री, माङ्क्षयिता-त्री, मिमाङ्क्षिषिता-त्री, मामाङ्क्षिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**काङ्क्ष**तिवत् (183) ज्ञेयानि। [A]ण्यति माङ्क्ष्यः।

**(1242) "माङ् माने शब्दे च"**

(III-जुहोत्यादिः-1038. सक-अक. अनि. आत्म.)

'**मिमीते** मायते माने माति तत्रैव शब्लुकि।
मयते प्रणिदानेऽर्थे—॥' (श्लो. 9) इति **देवः**।

मायकः-यिका, मापकः-पिका, मित्सकः-त्सिका, मेमीयकः-यिका; माता-त्री, मापयिता-त्री, मित्सिता-त्री, मेमीयिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि आदादिक**माति**वत् (1240) बोध्यानि। [1]मिमानः, [2]वातप्रमीः-वातप्रम्यौ-वातप्रम्यः, [3]प्रणिमानम्-प्रणिमापनम्, मेयम्, पाय्यम्, [B]व्योममायः, [4]चन्द्रमाः इमानि रूपाण्यधिकान्यत्रेति विशेषः। अस्य धातोः आत्मनेपदित्वात् शानचि-अनुमिमानः, मित्समानः, मास्यमानः, मित्स्यमानः, इति विशेषः।

---

1. शानचि, 'जुहोत्यादिभ्यः—' (2-4-75) इति शपः श्लुः। 'श्लौ' (6-1-10) इति द्विर्वचने, 'भृञामित्' (7-4-76) इत्यभ्यासस्येकारः। 'श्नाऽभ्यस्तयोरातः' (6-4-112) इत्याकारलोपः।
2. वातं प्रमिमीते इत्यर्थे 'क्विप् च' (3-2-76) इति कर्मण्युपपदे क्विपि '**घुमास्था**गापाजहातिसां हलि' (6-4-66) इतीकारे रूपमेवम्। 'ईत्वे वकारप्रतिषेधः—' (वा. 6-4-66) इति वचनं तु श्रूयमाणवकारादिप्रत्ययविषयकमिति नात्र प्रवर्तते। **वातप्रमीः** शमीवृक्षः, पक्षिविशेषश्च।
3. 'नेर्गदनदपतपदघु**मा**—' (8-4-17) इत्यादिना उपसर्गस्थान्निमित्तात् परस्य नेर्णत्वम्। एवं ण्यन्तेऽपि णत्वं ज्ञेयम्।
4. 'चन्द्रे **मो** डित्' (द. उ. 9-88) इत्यनेन चन्द्रशब्द उपपदे धातोरस्मात् असिप्रत्यये तस्य च डिद्वद्भावेन टिलोपे च रूपमेवम्।

A. 'सूर्य! त्वदीक्षा चिरकाङ्क्षिता नो वाञ्छाम्य**मा**ङ्क्षयान् न तु नीचलोकान्।' धा. का. 1.85.

B. 'जगाम सपरीवारो **व्योममाय**मिवोत्थितम्॥' भ.का. 6.88.



**(1243) "माङ् माने"** (IV-दिवादिः-1142. सक. अनि. आत्म.)

'मिमीते मायते माने माति तत्रैव शब्लुकि।' (श्लो. 9) इति **देवः**।
**दुर्गादयः केचि**देवामुं धातुं पठन्ति। **क्षीरस्वामि**प्रभृतयस्तु न पठन्ति। मायकः-यिका, मापकः-पिका, मित्सकः-त्सिका, मेमीयकः-यिका; माता-त्री, मापयिता-त्री, मित्सिता-त्री, मेमीयिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि आदादिक**माति**वत् (1240) ज्ञेयानि। शानचि, [1]मायमानः इति रूपम्।

**(1244) "मान पूजायाम्"**

(I-भ्वादिः-972. सक. सेट्. आत्म.) [अ]

'पूजायां मानयेत् मानेत् यौ, **मीमांसेत** तङ्सनोः।' (श्लो. 126) इति **देवः**। [2]मीमांसकः-सिका, मीमांसकः-सिका, मीमांसयिषकः-षिका, [3]मानकः-निका; मीमांसिता-त्री, मीमांसयिता-त्री, मीमांसयिषिता-त्री, मानयिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**दीदांस**तिवत् (832) ज्ञेयानि। अस्यात्मनेपदित्वात् शानजेव, न शतेति विशेषः। [4]माता।

---

1. शानचि, '**दिवादिभ्यः**—' (3-1-69) इति श्यनि, रूपमेवम्। अत्र श्यनोऽपित्सार्वधातुकत्वेन ङिद्वद्भावात् 'घु**मा**स्था—' (6-4-66) इति ईकारे सति **मीयमानः** इत्येव न्याय्यम्। 'गा**मा**दाग्रहणेष्वविशेषः' (परि. 116) इति वचनमप्यस्य ईकारेऽनुकूलम्। तथापि सर्वैरपि **वैयाकरणैः** 'घुमास्था—' (6-4-66) सूत्रे भौवादिकादादिकजौहोत्यादिक**मा**धातूनामेव ग्रहणस्योक्तत्वात् अत्र न ईकार इति ज्ञेयम्।
2. '**मा**न्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' (3-1-6) इति स्वार्थे सन्। अभ्यासकार्येषु प्रवृत्तेषु दीर्घश्चाभ्यासस्य भवति। एवमेवोत्तरत्र सर्वत्रापि ज्ञेयम्।
3. 'अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति' (**भाष्यम्** 3-1-6) इति वचनात् स्वार्थसन्नन्तादेवास्यात्मनेपदत्वम्, अर्थान्तरे तु चुरादिपाठ उन्नेयः। तदानीं 'शेषात् कर्तरि—' (1-3-78) इति परस्मैपदम्। स्वार्थसन्नपि अर्थान्तरे न भवति इत्यतः **मानकः-निका, मानयिता-त्री, मानयन्-न्ती** इत्यादीनि रूपाण्यूह्यानि।
4. 'नप्तृनेष्टृ—' (द. उ. 2-3) इत्यादिना तृन्तृचोः प्रत्यययोः नकारलोपे च रूपमेवम्। **माता** = जननी।

[अ] '**मानेर्जिज्ञासायाम्**' इति (**काशिका** 3-1-6) वचनात् पूजितविचारे धातोरस्य नित्यसन्नन्तत्वम्। न तु इच्छार्थकः सन्। 'नित्यसन्नन्तत्वसाधनाच्च धातोः पृथक् प्रयोगाभावात् पूजाद्यर्थपाठो व्यर्थः' इति **हरदत्तादयः**। स्वार्थसन्नन्तात् क्रमेण ण्यन्तस्य, इच्छासन्नन्तस्य च प्रयोगः प्रदर्शित इति ज्ञेयम्।

(1245) **" मान पूजायाम् "** (X-चुरादिः-1844. सक. सेट्. उभ.)

**आधृषीयः ।**

' पूजायां मानयेत् मानेत् णौ, मीमांसेत तङ्सनोः ।' (श्लो. 126) इति **देवः** । मानकः-निका, मिमानयिषकः-षिका, मानकः-निका, मिमानिषकः-षिका, मामानकः-निका ; मानयिता-त्री, मिमानयिषिता-त्री, मानिता-त्री, मिमानिषिता-त्री, मामानिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चीकयति**वत् (529) ज्ञेयानि । धातोरस्याधृषीयत्वेन 'आधृषाद्वा' (ग. सू. चुरादौ) इति णिज्विकल्पः । तेन णिजभावपक्षे क्रमेण शुद्धात्, शुद्धप्रकृतिकसन्नन्तात्, शुद्धप्रकृतिकयङन्तादपि रूपाणि विलिखितानीति ज्ञेयम् ।

(1246) **" मान्थ हिंसासंक्लेशनयोः "**

(I-भ्वादिः-46. सक. सेट्. पर.)

"—'मथि–' इत्यपि **दौर्गाः** " इति **क्षीरस्वामी । सिद्धान्तकौमुद्यादिषु**, धातुरयं न पठ्यते । '**हिंसा**=प्राण्युपघातः, **संक्लेशः**=बाधा ।' इति **क्षीरस्वामी** । मान्थकः-न्थिका, मान्थकः-न्थिका, मिमान्थिषकः-षिका, [1]मामाथकः-थिका ; मान्थिता-त्री, मान्थयिता-त्री, मिमान्थिषिता-त्री, मामाथिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि क्रैयादिक**कुथ्नाति**वत् (223) ज्ञेयानि । [2]मान्थित्वा-माथित्वा, [A]प्रमान्थनम् ।

(1247) **" मार्ग संस्कारगत्योः "**

(X-चुरादिः-1618. सक. सेट्. उभ.) [अ]

1. यङन्ते सर्वत्र यङ्निमित्तकः, 'अनिदिताम्—' (6-4-24) इत्युपधानकारलोपः । **क्षीरस्वाम्यु**पात्त**दौर्ग**मते तु धातोरिदित्त्वात् नोपधानकारलोपस्य प्रसक्तिः, तदानीम्, **मामान्थकः-न्थिका, मामान्थिता-त्री,** इत्यादीनि रूपाणि यथायथमूह्यानि ।
2. क्त्वायाम्, '**नोपधात् थफान्ताद् वा**' (1-2-23) इति कित्त्वविकल्पनाद् उपधानकारलोपपक्षे **माथित्वा** इति, तदभावपक्षे **मान्थित्वा** इति च रूपद्वयम् । **दौर्ग**मते तु **मा[म]न्थित्वा** इत्येकमेव रूपमिति ज्ञेयम् ।

A. 'स भोजराडथ हरिं मिमन्थिषुः **प्रमान्थनं** सेधतु, को निषेत्स्यति ॥' धा. का. 1-7.

[अ] चुरादिषु ' व्रज **मार्ग** संस्कारगत्योः ' इति पठ्यते । तत्र '**मार्ग**' इति पृथग्धातुरिति **बहूनां** पक्षः । तन्मतानुसारेणास्माभिरयमत्र लिख्यते ।



' अन्वेषणेऽर्थे मृगयेत णौ यो मार्गेर्भवेन्मार्गति **मार्गयेच्च** ॥ '

(श्लो. 44) इति **देवः** ।

मार्गकः-र्गिका, मिमार्गयिषकः-षिका ; मार्गयिता-त्री, मिमार्गयिषिता-त्री, इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**गर्जयति**वत् (378) ज्ञेयानि । यति–[A]मार्ग्यम् ।

(1248) **" मार्ग अन्वेषणे "**

(X-चुरादिः-1847. सक. सेट्. उभ. आधृषीयः)

' अन्वेषणेऽर्थे मृगयेत णौ यो मार्गेर्भवेन्**मार्गति मार्गयेच्च** ॥ ' (श्लो. 44) इति **देवः** । आधृषीयत्वादस्य धातोर्णिज्विकल्पः । णिजभावपक्षे धातोरस्य भौवादिकत्वमिति ज्ञेयम् ।

मार्गकः-र्गिका, मिमार्गयिषकः-षिका, मार्गकः-र्गिका, मिमार्गिषकः-षिका, मामार्गकः-र्गिका ; मार्गयिता-त्री, मिमार्गयिषिता-त्री, मार्गिता-त्री, मिमार्गिषिता-त्री, मामार्गिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चर्पयति**वत् (554) ज्ञेयानि ।

(1249) **" मार्ज शब्दार्थः "** (X-चुरादिः-1649. अक. सेट्. उभ.)

' शौचालङ्कारयोर्वा णौ मृजेर्मार्जति मार्जयेत् ॥

मार्ष्टि शुद्धौ तथा मार्जेः **शब्दार्थाद् मार्जयेण्णिचि** ।' (श्लो. 60.61) इति **देवः** ।

' **शुद्धौ** च इति **द्रुमे** ।' इति **धा. का. व्या.** (3-28) ।

मार्जकः-र्जिका, मिमार्जयिषकः-षिका ; मार्जयिता-त्री, मिमार्जयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**गर्जयति**वत् (378) ज्ञेयानि । [B]विमार्जनम् ।

(1250) **" माहृ माने "** (I-भ्वादिः-895. सक. सेट्. उभ.)

' **मानम्**=वर्तनम् । ' इति **क्षीरस्वामी** ।

माहकः-हिका, माहकः-हिका, मिमाहिषकः-षिका, मामाहकः-हिका ; माहिता-त्री, माहयिता-त्री, मिमाहिषिता-त्री, मामाहिता-त्री ; इत्यादि-

A. 'सुव्राजितेन मनसा **परिमार्ग्य** एषां तोषं व्यशुल्कयदसौ नयनप्रचम्पैः' ॥ धा.का.3.23.

B. ' इत्थं सुराजितमृदङ्ग**विमार्जनानि** —' धा. का. 3.28.

कानि सर्वाण्यपि रूपाणि भौवादिक**काशति**वत् (186) ज्ञेयानि । क्विपि प्रमाट्-प्रमाड्-प्रमाहौ-प्रमाहः इति रूपमिति विशेषः । अस्योभयपदित्वात् प्रमाहन्-न्ती-ती, माहिष्यन्-न्ती-ती, इत्यादीन्यपि रूपाणि शतरि स्यप्रत्यये च सम्भवन्ति । ण्यति-[A]अमाह्यः ।

(1251) " **मिच्छ उत्क्लेशे** " (VI-तुदादिः-1297. सक. सेट्. पर.)

' **उत्क्लेशः**=बाधनम् ' इति **क्षीरस्वामी** । अस्य मते सकर्मकत्वम् । **उत्क्लेशः**= पीडा ।' इति **धातुवृत्तिः** । तदानीमकर्मकत्वम् ।

[1]मिच्छकः-च्छिका, मिच्छकः-च्छिका, [2]मिमिच्छषकः-षिका, मेमिच्छकः-च्छिका ; मिच्छिता-त्री, मिच्छयिता-त्री, मिमिच्छिषिता-त्री, मेमिच्छिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**चिल्लति**वत् (528) ज्ञेयानि । शतरि-स्त्रियाम् , मिच्छन्-न्ती-ती, इति नुम् वा ।

(1252) " **मिजि भाषार्थः** " (X-चुरादिः-1757. सक. सेट्. उभ.)

**आस्वदीयः** । इदित्करणात् णिचो वैकल्पिकत्वम् ।
धातुरयं **क्षीरस्वामिना** नोपात्तः ।

[3]मिञ्जकः-ञ्जिका, मिमिञ्जयिषकः-षिका, मिञ्जकः-ञ्जिका, मिमिञ्जिषकः-षिका, मेमिञ्जकः-ञ्जिका ; मिञ्जयिता-त्री, मिमिञ्जयिषिता-त्री, मिञ्जिता-त्री, मिमिञ्जिषिता-त्री, मेमिञ्जिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कुंशयति**वत् (232) ज्ञेयानि ।

(1253) " **डु मिञ् प्रक्षेपणे** " (V-स्वादिः-1250. सक. अनि. उभ.)

' **मिनोति मिनुते स्वादेः** गतौ मयति माययेत् ।' (श्लो. 17) इति **देवः** ।

---

1. ' **मिछ** ' इत्येव धातुरुपदेशे पठ्यते । तस्य, ' **छे च** ' (6-1-73) इति **तुकि**, श्चुत्वे च **मिच्छ** इति सम्पद्यते । एवमेव सर्वत्रास्य तुग् ज्ञेयः ।
2. सन्नन्ते गुणात् पूर्वम्, अन्तरङ्गत्वात् तुकि लघूपधत्वाभावात् न गुणः । एवमेव सर्वत्र ज्ञेयम् ।
3. इदित्वान्नुमि, अनुस्वारे परसवर्णे च रूपमेवम् । एवमेव सर्वत्र ज्ञेयम् ।

A. ' या दासते मोदमत्राह्यधाम्नां गूढाशयानामपि तापसानाम् ॥ ' धा. का. 2.28.



| | | | |
|---|---|---|---|
| [1]मायकः-पिका, | [2]मापकः-पिका, | [3]मित्सकः-त्सिका, | [4]मेमीयकः-यिका ; |
| माता-त्री, | मापयिता-त्री, | मित्सिता-त्री, | मेमीयिता-त्री ; |
| [5]मिन्वन्-न्ती, | मापयन्-न्ती, | मित्सन्-न्ती ; | — |
| मास्यन्-न्ती-ती, | मापयिष्यन्-न्ती-ती, | मित्सिष्यन्-न्ती-ती ; | — |
| मिन्वानः, | मापयमानः, | मित्समानः, | मेमीयमानः ; |
| मास्यमानः, | मापयिष्यमाणः, | मित्सिष्यमाणः, | मेमीयिष्यमाणः ; |
| प्रमाः-प्रमौ-प्रमाः ; | — | — | — |
| [6]मितम्-[A]तः-तवान् , | मापितः, | मित्सितः, | मेमीयितः-तवान् ; |

---

1. ण्वुलि वृद्धौ सत्यां एजन्तत्वेन ' मीनाति**मिनोति**दीङाम्—' (6-1-50) इत्यनेन आत्वे, ' **आतो** युक् चिण्कृतोः ' (7-3 33) इति युगागमः । एवं घञादिष्वपि बोध्यम् ।
2. णिच्प्रत्ययोत्पत्तेरनन्तरं वृद्धौ कृतायाम् एजन्तत्वात् आत्वे, आदन्तलक्षणे पुगागमे च रूपमेवम् । ण्यन्ते सर्वत्र एवमेव प्रक्रिया ज्ञेया ।
3. ' इको झल् ' (1-2-9) इति सनः कित्वे, ' **अज्झनगमां सनि** ' ( 6-4-16) इति दीर्घे ' सनि **मीमा**—' (7-4-54) इति इस्भावे ' सः स्यार्धधातुके ' (7-4-49) इति सकारस्य तत्वे, ' अत्र लोपोऽभ्यासस्य ' (7-4-58) इत्यभ्यासलोपे च रूपम् । एवं सन्नन्ते सर्वत्र बोध्यम् । **माधवधातुवृत्तौ** सन्नन्तरूपप्रदर्शनावसरेऽत्र, "—**मित्सति, मित्सते**, ' इको झल् ' (1-2-9) इति सनः कित्वात्, ' अज्झनगमां सनि ' (6-4-16) इति दीर्घे—" इत्याद्युक्तम् । अस्यायं भावः । अनैमित्तिक आकारः प्रथमतो न प्रवर्तते । धातोः इगन्तत्वेन ' इको झल् ' (1-2-9) इत्यादिसूत्रे सनः कित्वात्, एज्विषय एवाकारविधानात् इति ।
4. यङन्ते ' अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घे द्विर्वचनादिकेषु च कृतेषु, ' गुणो यङ्लुकोः ' (7-4-82) इति गुणः ।
5. शतरि, ' **स्वादिभ्यः**—' (3-1-73) इति श्नुप्रत्यये, ' हुश्नुवोः सार्वधातुके ' (6-4-87) इति यणि च रूपमेवम् । शानजन्तेऽप्येवमेव ।
6. निष्ठायामाकारो न प्रवर्तते ; आकारविधायके सूत्रे (6-1-50) ' आदेच उपदेशेऽशिति ' (6-1-45) इत्यतः ' एचः ' इत्यनुवर्तनात्, तस्य च गुणयोग्यप्रत्ययेष्वेव परेषु आत्वमिति ज्ञापनात् । अतश्च निष्ठाप्रत्ययस्य कित्वात् न गुणः, तेन रूपमेवम् । स्पष्टमिदं प्रकृतसूत्रे (6-1-50) **भाष्ये** । एवमेव क्त्वाक्तिन्प्रभृतिष्वपि ज्ञेयम् ।

A. ' सुन्वत्प्रियं तमथ रागसिताशिताग्रम्
आरो**न्मित**स्त्रिनिचयास्तृतमानसान्ता । ' धा का. 2.68.

| | | | |
|---|---|---|---|
| [1]मयः, | [2]मायी, मापः, | मित्सुः, | [3]मेम्यः ; |
| मातव्यम्, | मापयितव्यम्, | मित्सितव्यम्, | मेमीयितव्यम् ; |
| [4]प्रणिमानीयम्, | प्रणिमापनीयम्, | मित्सनीयम्, | मेमीयनीयम् ; |
| [5]मेयम्, | माप्यम्, | मित्स्यम्, | मेमीय्यम् ; |
| [6]ईषत्प्रमयः-दुष्प्रमयः-सुप्रमयः ; | | — | — |
| मायमानः, | माप्यमानः, | मित्स्यमानः, | मेमीय्यमानः ; |
| [7]मयः, | मापः, | मित्सः, | मेमीयः ; |
| मातुम्, | मापयितुम्, | मित्सितुम्, | मेमीयितुम् ; |
| मितिः, | मापना, | मित्सा, | मेमीया ; |
| मानम्, | मापनम्, | मित्सनम्, | मेमीयनम् ; |
| मित्वा, | मापयित्वा, | मित्सित्वा, | मेमीयित्वा ; |
| [8]प्रमाय, | प्रमाप्य, | प्रमित्स्य, | प्रमेमीय्य ; |
| मायम् २, मित्वा २, | मापम् २, मापयित्वा २, | मित्सम् २, मित्सित्वा २, | मेमीयम् २ ; मेमीयित्वा २ ; |

1. पचाद्यचि, '**निमिमी**लियां **खलचोः** प्रतिषेधः' (वा. 6-1-50) इति आकारप्रतिषेधः। गुणेऽयादेशे च रूपमेवम्। अत्र **वार्तिके** 'अच्' पदेन पचाद्यचः (3-1-134), एरच (3-3-56) श्च ग्रहणमिति **कैयटादौ** प्रतिपादितम्। अत्र **वार्तिके** निपूर्वकस्यैव **मिनोतेः** ग्रहणाद्, उपसर्गान्तरे, उपपदे शुद्धे च आकार एव भवेदिति ज्ञायते। तदानीम्, '**आत**श्चोपसर्गे' (3-1-136) इति कप्रत्यये, '**आतो** लोप इटि च' (6-4-64) इत्याकारलोपे च **प्रमः** इति रूपमपि साध्विति प्रतिभाति।
2. नन्द्यादित्वात् कर्तरि णिनिप्रत्यये युगागमे च रूपमेवम्।
3. यङन्तात् पचाद्यचि यङो लुकि 'एरनेकाचः—' (6-4-82) इति यणि च रूपमेवम्।
4. 'नेर्गदनदपतपदघुमा—' (8-4-17) इति नेर्णत्वे रूपमेवम्।
5. यत्प्रत्यये, अनैमित्तिके आकारे, 'ईद् यति' (6-4-65) इतीकारे गुणे च रूपम्।
6. धातोरस्य सकर्मकत्वात् कर्मणि खल्प्रत्यये, '**निमिमी**लियां खलचोः प्रतिषेधः' (वा. 6-1-50) इति आकारप्रतिषेधे गुणायादेशयो रूपमेवम्।
7. धातोरस्येवर्णान्तात्वत्, घञपवादतया 'एरच्' (3-3-56) इति भावेऽच्प्रत्यये आकारप्रतिषेधे च रूपमेवम्।
8. ल्यपि, 'मीनाति**मिनोति**दीङां **ल्यपि च**' (6-1-50) इति आकारे रूपमेवम्। अन्यथा क्त्वाप्रत्ययादेशभूतस्य ल्यप एज्विषयत्वाभावेन आकारो न स्यात्, तदर्थमेव '**—ल्यपि च**' (6-1-50) इत्युक्तमिति ज्ञेयम्।



[1]वातप्रमीः, [2]मायुः-गोमायुः, [3]मयुः, [4]जामाता, [5]मीरः।

## (1254) "मिथृ मेधाहिंसनयोः"

(I-भ्वादिः-868. सक. सेट्. उभ.)

उत्तरत्र विलेखिष्यमाणस्य मेदृधातोः **क्षीरस्वामिसम्मतः** पाठ एवम्।
मेथकः-थिका, मेथकः-थिका, मिमिथिषकः-मिमेथिषकः-षिका, मेमिथकः-थिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**केटति**वत् (190) ज्ञेयानि। पचाद्यचि—**मेथः**। स्त्रियां गौरादित्वात् ङीषि **मेथी**=पशूनां पाशविशेषः। **मेथिः** इत्यपि तस्य क्वचिन्नाम।
'**मेथी**बद्धोऽपि हि भ्राम्यन् घासग्रासं करोति गौः।'
(सुभाषितावलिः 2958) इति **क्षीरस्वामिना** उद्धृतम्।

## (1255) "ञि मिदा स्नेहने" (I-भ्वादिः-743. सक. सेट्. आत्म.)

'**मेदते** मेद्यतीत्येते स्नेहने, मिन्दयेण्णिचि।
ऋदितो मेदते मेदेन्मेधाहिंसनयोर्द्वयोः॥' (श्लो. 104) इति **देवः**।
**हरदत्त**स्तु धातोरस्य भ्वादिषु पाठं नानुमेने इति 'निष्ठा शीङ्—' (1-2-19) इति सूत्रे **पदमञ्जर्यां** व्यक्तम्।
मेदकः-दिका, मेदकः-दिका, मिमेदिषकः-मिमिदिषकः-षिका, मेमिदकः-दिका; मेदिता-त्री, मेदयिता-त्री, मिमेदिषिता-मिमिदिषिता-त्री; मेमिदिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकक्ष्वेदतिवत् (326) ज्ञेयानि।

1. '**वातप्रमीः**' (उ. उ-1-85) इति सूत्रेण प्रपूर्वकात् वातशब्दे उपपदे वातं प्रमिणोतीत्यर्थे ईप्रत्यये निष्पन्नोऽयं शब्दः। **वातप्रमीः**=शमीवृक्षः, पक्षी च।
2. 'कृवापाजि**मि**—' (द. उ. 1-86) इत्युण्प्रत्यये युगागमः। मीयतेऽनेनेति **मायुः** मानम्। गां **मिनोति** = हिनस्तीति **गोमायुः**=श्रृगालः।
3. 'भृमृशीतृचरित्सरितनि**मि**—' (द. उ. 1-92) इत्युप्रत्यये बाहुलकादाकाराभावे गुणायादेशयोश्च रूपमेवम्।
4. 'नप्तृनेष्टृ—' (द. उ. 2-3) इति तृन्प्रत्यये तृच्प्रत्यये वा **जायां मिनोती**त्यर्थे जायाशब्दस्य जादेशे च निपातितोऽयं शब्दः। **जामाता**=दुहितुः पतिः।
5. 'शुषिचि**मिभ्यो** दीर्घश्च' (द. उ. 8.43) इति क्रन्प्रत्यये प्रकृतेर्दीर्घे च रूपमेवम्। मिनोति इति **मीरः**= देशसीमा।

निष्ठायाम्—[1]मिन्नः,[A] [2]प्रमेदितम्-प्रमिन्नम्-[अनेन], प्रमिन्नः, [B]प्रमेदितः, [3]मेदुरः,[C] [4]मेदः, [5]मेदिनी, [6]मित्रम्-मित्रा, [7]मेदः, इतीमानि धातोरस्माद् विशेषेण भवन्ति । अस्यात्मनेपदित्वात् शानचि मेदमानः, मेदिष्यमाणः, इत्यादीनि रूपाणि भवन्तीति ज्ञेयम् ।

(1256) **"ञि मिदा स्नेहने"** (IV-दिवादिः-1243. सक. सेट् .पर.)

'मेदते **मेद्यती**त्येते स्नेहने, मिन्दयेण्णिचि ।' (श्लो. 104) इति **देवः** । मेदकः-दिका, मेदकः-दिका, मिमेदिषकः-मिमिदिषकः-षिका, मेमिदकः-दिका; मेदिता-त्री, मेदयिता-त्री, मिमेदिषिता-मिमिदिषिता-त्री, मेमिदिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि दैवादिक**क्ष्विद्यति**वत् (327) ज्ञेयानि । शतरि—[8]प्रमेद्यन्-[D]न्ती, मेदिष्यन्-न्ती-ती, इति रूपाणि भवन्त्यस्येति विशेषः ।

---

1. '**ञीतः** क्तः' (3-2-187) इति वर्तमाने कर्तरि क्तप्रत्यये, '**आदितश्च**' (7-216) इति इण्निषेधे च, 'रदाभ्यां निष्ठातो नः, पूर्वस्य च दः' (8-2-42) इति निष्ठातकारधातुदकारयोर्नत्वे च रूपमेवम् ।
2. अस्यैव धातोर्निष्ठायाम् भावे आदिकर्मणि च, 'विभाषा भावादिकर्मणोः' (7-2-17) इतीड्विकल्पे, इट्पक्षे, 'निष्ठा शीङ्स्विदि**मिदि**क्ष्विदिधृषः' (1-2-19) इति सेटो निष्ठायाः कित्त्वनिषेधाद् गुणे **प्रमेदितम्, प्रमेदितः** इति भवतः । इडभावपक्षे तु कर्त्र्यर्थकक्तप्रत्ययान्तवत् प्रक्रिया ज्ञेया ।
3. 'भञ्जभास**मिदो** घुरच्' (3-2-161) इति तच्छीलादिषु कर्तृषु घुरच्प्रत्यये गुणे च रूपमेवम् । **मेदुरः**= वसाविशेषवान् पश्वादिः ।
4. कर्तरि पचाद्यचि गुणे च रूपमेवम् । **मेदः**=असुरविशेषः ।
5. ग्रह्यादित्वात् (3-1-134) कर्तरि णिनिप्रत्यये स्त्रियाम्, 'ऋन्नेभ्यः—' (4-1-5) इति ङीपि च रूपमेवम् । **मेदिनी**=भूमिः ।
6. 'अमिचि**मिदि**शसिभ्यः क्त्रः' (द. उ. 8.86) इति क्त्रप्रत्यये रूपमेवम् । मेदतीति **मित्रम्**= सुहृत् । सुहृदि अभिधेये नपुंसकलिङ्गत्वम्, सूर्ये तु पुँल्लिङ्गता, गन्धद्रव्ये तु स्त्रीलिङ्गत्वमस्यैव पदस्येति ज्ञेयम् ।
7. 'असुन्' (द. उ. 9-49) इत्यस्मादसुन्प्रत्यये गुणे च रूपमेवम् । **मेदः**=वसा ।
8. शतरि, 'दिवादिभ्यः—' (3-1-69) इति विकरणप्रत्यये श्यनि, तस्यापित्सार्वधातुकत्वेन ङिद्वद्भावाद् अङ्गस्य गुणनिषेधे प्राप्ते सति, '**मिदेर्गुणः**' (7-3-86)-इति गुणो विधीयते, तेन रूपमेवमिति ज्ञेयम् ।

A. 'उद्वृत्तनयनो **मिन्नान्** मन्त्रिणः स्वान् व्यसर्जयत् ॥' भ. का. 9.16.
B. '**प्रमेदिताः** सपुत्रास्ते सुस्वान्ता बाढविक्रमाः ।' भ. का. 9.17.
C. 'प्रद्योतनस्योदयमाप्य गोपाः श्वेतांशु**कोन्मेदुर**चारुवेषाः ।' धा. का. 2.1.
D. 'नभ्यांस्तुभ्य विभो जयेति नुवते क्लियन् **प्रमेद्य**द्गुजम्—॥' धा. का. 2.67.



(1257) **"मिदि स्नेहने"** (X-चुरादिः-1541. सक. सेट्. उभ.)

'मेदते मेद्यतीत्येते स्नेहने, **मिन्दयेण्णिचि** ।' (श्लो. 104) इति **देवः** । इदित्करणात् णिचो वैकल्पिकत्वम् । "—'मिद—' इति **कौशिकः** ।" इति **क्षीरस्वामी** । मिन्दकः-न्दिका, मिमिन्दयिषकः-षिका, मिन्दकः-न्दिका, मिमिन्दिषकः-षिका, मेमिन्दकः-न्दिका; मिन्दयिता-त्री, मिमिन्दयिषिता-त्री, मिन्दिता-त्री, मिमिन्दिषिता-त्री, मेमिन्दिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चिन्तयति**वत् (523) ज्ञेयानि । [A]मिन्दितः ।

(1258) **"मिदृ मेधाहिंसनयोः"** (I-भ्वादिः-868. सक. सेट्. उभ.)

'**ऋदितो मेदते मेदेन्मेधाहिंसनयोर्द्वयोः** ॥' (श्लो. 104) इति **देवः** । **क्षीरस्वामी** तु '**मिथृ**–' इति तवर्गद्वितीयान्तं पपाठ । 'षिद्भिदादिभ्योऽङ्' (3-3-104) इत्यत्र **न्यासकारस्तु** '**मिधृ**–' इति तवर्गचतुर्थान्तं पपाठ–मेधाशब्दनिष्पादनार्थम् । **दैव-पुरुषकार-दुर्ग-मा. धा. वृत्ति-सिद्धान्तकौमुद्याद्यनुसारेण** तवर्गतृतीयान्तपाठ एव प्रामाणिक इति कृत्वा अस्माभिरपि विलिख्यते । मेदकः-दिका, मेदकः-दिका, मिमेदिषकः-मिमिदिषकः-षिका, मेमिदकः-दिका; मेदिता-त्री, मेदयिता-त्री, मिमेदिषिता-मिमिदिषिता-त्री, मेमिदिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**क्रेटति**वत् (190) ज्ञेयानि ।

(1259) **"मिल श्लेषणे"** (VI-तुदादिः-1364. सक. सेट्. पर.) [अ]

---

A. '......तत्रास कुन्दकसुलालित**मिन्दित**श्रीः ॥' धा. का. 3.13.

[अ] चुरादिषु 'बहुलम्; एतन्निदर्शनम्' (ग. सू.) इति पठ्यते । तस्यायमर्थः—भ्वादिगणपठिता धातवो निदर्शनार्थाः । धातूनामसङ्ख्येयत्वात् बहुलमुपलम्भाच्च, अनुक्ता अपि धातवो यथासम्भवं तत्तद्विकरणेषु शिष्टप्रयोगानुसारेणोन्नेयाः इति । अत्रानुक्तेषु=अपठितेषु धातुष्वयमप्येक इति मत्वा **भोजप्रभृतिभिः** '**मिलन्त्या**शासु जीमूताः, विक्लबन्ते दिवि ग्रहाः ।' इत्यादीनां बहूनां धातूनां सङ्ग्राहकाः श्लोकाः पठिताः । परं तु **मिल**धातोरस्य तुदादावेव द्विवारं पाठोऽधुनोपलभ्यते । **क्षीरस्वामी** तु भ्वादावपि **मिल**धातुं 'मील—' धातुस्थाने पाठान्तरत्वेन पपाठ । **काव्यालङ्कारसूत्रवृत्तौ** (5-2-2) **वामनो**ऽपि—" तत्र **मिलि** क्लबिक्षपिप्रभृतीनां कथं

'**श्लेषे मिलेत्**, संगमे तु मिलते मिलतीति च ।' (श्लो. 160) इति **देवः** । मेलकः-लिका, मेलकः-लिका, मिमिलिषकः-मिमेलिषकः-षिका, मेमिलकः-लिका ; मेलिता-त्री, मेलयिता-त्री, मिमिलिषिता-मिमेलिषिता-त्री, मेमिलिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**किलति**वत् (193) ज्ञेयानि ।

(1260) **"मिल संगमे"** (VI-तुदादिः-1429. सक. सेट्. उभ.)

'श्लेषे मिलेत्, **संगमे तु मिलते मिलतीति च** ।' (श्लो. 160) इति **देवः**। मेलकः-लिका, मेलकः-लिका, मिमिलिषकः-मिमेलिषकः-षिका, मेमिलकः-लिका ; मेलिता-त्री, मेलयिता-त्री, मिमिलिषिता-मिमेलिषिता-त्री, मेमिलिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**किलति**वत् (193) ज्ञेयानि । "— '**मिल संश्लेषणे**' इति पठितस्येह पुनःपाठः—कर्त्रभिप्राये तङर्थः । इति **आत्रेयः** ।" इति **मा. धा. वृत्तिः** । **क्षीरस्वामी** त्वमुं धातुं न पठति । अस्य धातोरुभयपदित्वात् शानचि—[1]मिलमानः,[A] मिलिष्यमाणः, मिमिलिषमाणः, मिमेलिषमाणः, मिमिलिषिष्यमाणः, इत्यादीनि तत्तत्प्रत्यये रूपाण्यूह्यानि । [2]मेलनम् । [3]मेला-कुम्भमेला ।

---

धातुत्वम् ? गणापाठात्, गणपठितानामेव धातुसंज्ञाविधानात्। तत्राह धातुगणस्यासमाप्तेः। 'वर्धते धातुगणः' इति हि **शब्दविद** आचक्षते। तेनैषां गणपाठोऽनुमतः, शिष्टप्रयोगात्—इति।" इत्युक्तवान्। एतेन ज्ञायते—**मिल**प्रभृतीनां धातुपाठे औपदेशिकः पाठः प्राङ् नासीत् इति । **भोजवामन**ग्रन्थदर्शिभिः पाश्चात्यैः पुनः एकस्यैव धातोः एकविकरणकेऽपि गणे द्विवारमपि पाठोऽत्यल्पप्रयोजनकः प्रक्षिप्त इति। विद्वांसोऽत्र प्रमाणम्।

1. शानचि, '**तुदादिभ्यः**—' (3-1-77) इति विकरणप्रत्ययः शः। तस्य ङिद्वद्भावेनाङ्गस्य गुणो न।

2. ल्युटि अनादेशे गुणे च रूपमेवम्। '**परिमिलन**मप्राप्य हरितम्', 'मुक्तांशुजाल**मिलनाद्** रुचिरैः प्रवालैः बिम्बाधरं स्मितविशेषयुतं प्रियाणाम्।' (पादुकासहस्रे 552 श्लो.) इत्यादिषु 'संज्ञापूर्वको विधिरनित्यः' (परिः 95) इति गुणनिषेधः इति तत्तद्व्याख्यासु प्रतिपादितम्। **बोपदेव**व्याकरणे **मुग्धबोधे** तु **मिल**धातोः (**लिख**धातोश्च) **कुटादित्व**मङ्गीकृत्य, ल्युटि 'गाङ्**कुटादिभ्यो**ऽञ्णिन्ङित्' (1-2-1) इति ङिद्वद्भावेन गुणनिषेधः साधितः। अत एव '**लिखन**संक्षेपनिर्बन्धवतो **दीधितिकारस्य**—' इत्यादिकानि **गदाधरादि**वाक्यान्यपि साधून्येवेति ज्ञेयम्।

3. स्त्रियां भावादौ, भिदादेः (3-3-104) आकृतिगणत्वेन अङ्प्रत्ययः, उपधागुणश्च। मिलन्त्यत्रेति अधिकरणेऽङ्।

A. 'मित्रैः **सम्मिलमान** एत्य नगरोद्यानं विमुञ्चन् भियम्......।' धा. का. 2.85.



(1261) **"मिवि सेवने"** (I-भ्वादिः-589. सक. सेट्. पर.)

'—सेचने' इति क्षीरतरङ्गिणी । '**स्रंसने** इति **मैत्रेयः** ।' इति **धातुवृत्तिटीका** । **धातुवृत्तौ** तु "— '**सेवने**', इति क्षीरतरङ्गिण्याम् । '**सेचने**' इति पाठो **मैत्रेयस्य** च ।" इत्युक्तम् ।

मिन्वकः-न्विका, मिन्वकः-न्विका, मिमिन्विषकः-षिका, मेमिन्वकः-न्विका ; मिन्विता-त्री, मिन्वयिता-त्री, मिमिन्विषिता-त्री, मेमिन्विता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**जिन्वति**वत् (604) ज्ञेयानि ।

(1262) **"मिश शब्दे रोषकृते च"** (I-भ्वादिः-723. अक. सेट्. पर.)

'शब्दने रोषक्रियायाञ्चार्थे' इति **क्षीरस्वामी** । "—'शब्दकोपयोः' इति **द्रुमोक्त्या** **रोषकृतम्**=रोष एव ।" इति **धा. का. व्या.** (1-90) । मेशकः-शिका, मेशकः-शिका, मिमेशिषकः-मिमिशिषकः-षिका, मेमिशकः-शिका ; मेशिता-त्री, मेशयिता-त्री, मिमेशिषिता-मिमिशिषिता-त्री, मेमिशिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**केटति**वत् (190) ज्ञेयानि । कप्रत्यये **मिशः** = व्याजः । [A]मेशः ।

(1263) **"मिश्र संपर्के"** (X-चुरादिः-1921. सक. सेट्. उभ.)

अदन्तः ।

" '—संपर्चने' **संपर्चनम्** = श्लेषः ।" इति **क्षीरस्वामी** ।

मिश्रकः-श्रिका, मिमिश्रयिषकः-षिका, मिश्रयिता-त्री, मिमिश्रयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चित्रयति**वत् (525) बोध्यानि। [1]गुडमिश्रः ।

(1264) **"मिष स्पर्धायाम्"** (VI-तुदादिः-1352. सक. सेट्. पर.)

'**सेचने** मेषतीति स्यात् **स्पर्धायां मिषतीति** शे।' (श्लो. 174) इति देवः ।

---

1. गुडेन **मिश्रः** इत्यर्थे 'पूर्वसदृशसमोनार्थकलहनिपुण**मिश्र**—' (2-1-31) इति तृतीयान्तेन समस्यते ।

A. '.........**मेशो**द्धुतारिमशकस्य नृपस्य वृत्तम् ॥' धा. का. 1-90.

' —अयमुन्मीलनार्थोऽपि ' इति **धा. का.** (2.78) ।
मेषकः-षिका, मेषकः-षिका, मिमेषिषकः-मिमिषिषकः-षिका, मेमिषकः-षिका ; मेषिता-त्री, मेषयिता-त्री, मिमेषिषिता-मिमिषिषिता-त्री, मेमिषिता-त्री; इत्यादीनि रूपाणि तौदादिक**किलति**वत् (193) ऊह्यानि । [1]मेषः-मेषी, [2]निमेषः-[3]निमिषः, इमानि रूपाण्यधिकान्यत्रेति विशेषः ।

(1265) " **मिषु सेचने** " (I-भ्वादिः-699. सक. सेट्. पर.)

' —**सेवने** ' इति **धा. का.** (1-87) ।

'**सेचने मेषतीति** स्यात्, स्पर्धायां मिषतीति शे ।' (श्लो. 174) इति **देवः**।
मेषकः-षिका, मेषकः-षिका, मिमेषिषकः-मिमिषिषकः-षिका, मेमिषकः-षिका ; मेषिता-त्री, मेषयिता-त्री, मिमेषिषिता-मिमिषिषिता-त्री, मेमिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**जेमति**वत् (602) ज्ञेयानि । [4]मेषः-मेषी, शतरि-मेषन्, इत्यादीनि रूपाणि विशेषेण भवन्ति । ण्यति [A]मेष्यम् ।

(1266) " **मिह सेचने** " (I-भ्वादिः-992. सक. अनि. पर.)

मेहकः-हिका, मेहकः-हिका, मिमिक्षकः-क्षिका, मेमिहकः-हिका; मेढा-

1. पचादिषु '**मेष**' इति पाठात् कर्तर्यच्प्रत्यये रूपमेवम् । 'येषां धातूनां प्रयोगे गुणादिकं दृष्टं ते धातवः पचादेराकृतिगणत्वेन तत्र पाठादूह्याः ' इति **प्रक्रियासर्वस्वम्** । वस्तुतोऽत्र पचादिषु पाठो दृश्यत एवेत्यस्मिन् विषये आकृतिगणत्वेन समाधिर्नादर्तव्या । स्त्रियां जातिलक्षणे (4-1-63) ङीषि **मेषी** इति भवति ।
2. ' घञ्—**निमेषः** ।' इति **क्षीरतरङ्गिणी** । एवमेव **धातुवृत्ता**वपि ।
3. ' घञर्थे कविधानम्—' (वा. 3-3-58) इत्यत्र परिगणनानादरेण भावे घञपवादतया बाहुलकात् कप्रत्यये **निमिषः**, **आमिषम्** इत्यादयोऽपि साधवः । एवमेव **निमेष** इत्यपि बाहुलकादेव, यतोऽयं कप्रत्ययो घञपवादस्ततोऽत्रैव घञोऽप्रसक्तेरिति ज्ञेयम् ।
4. 'नन्दिग्रहिपचादिभ्यः ' (3-1-134) इति अच्प्रत्यये रूपमेवम् । **मेषट्** इति पचादिषु पाठात् टित्त्वात् स्त्रियां ङीषि-**मेषी** इति भवति ।

A. ' वेषैर्मेष्यतमैः प्रपोषदशुभप्रश्रेषिभिः श्लेषति...... ।' धा. का. 1.88. ...



मेढ्री, मेहयिता-त्री, मिमिक्षिता-त्री, मेमिहिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि प्रातिस्विकरूपाणि विना आदादिक**देग्धि**वत् (842) ज्ञेयानि । [1]मेघः, [2]मेढ्रम्, [3]मीढ्वान्, [4]मेहः, [5]मिहिरः इमानि रूपाणि अस्य धातोः विशेषेण संभवन्तीति विशेषः ।

(1267) " **मी गतौ** " (X-चुरादिः-1825. सक. सेट्. (अनि.) उभ.)

**आधृषीयः ।**

'—गतौ, मनने ' इति **क्षीरस्वामी** ।
' मीञो मीनाति मीनीते हिंसायां मीयते ङितः ॥
मिनोति मिनुते स्वादेः, गतौ **मयति माययेत्** ।' (श्लो. 16-17) इति **देवः** ।
मायकः-यिका, मिमाययिषकः-षिका, मायकः-यिका, [6]मिमीषकः-षिका,

1. धातोः इगुपधत्वेऽपि पचादिषु (3-1-134) पाठात् अच्प्रत्यये, गुणे, ' न्यङ्क्वादीनां च ' (7-3-53) इत्यत्र गणे पाठात् हकारस्य कुत्वेन घकारे च **मेघ** इति सिद्ध्यति । मेहति = वर्षति इति **मेघः** ।
2. ' दाम्नीशसयुयुजस्तुतुदसिसिच**मिह**पतदशनहः करणे ' (3-2-182) इति करणे ष्ट्रन्प्रत्यये गुणे, '**हो** ढः ' (8-2-31) इति धातुहकारस्य ढत्वे, धत्वष्टुत्वढलोपेषु च प्रवृत्तेषु ' पर्जन्यवल्लक्षणं प्रवर्तते ' (परि. 121) इति न्यायेन दीर्घे च रूपमेवम् मिह्यतेऽनेनेति **मेढ्रम्** ।
3. धातोरस्मात् कर्तरि लिटः क्वसौ वेदे भाषायां चाविशेषेण 'दाश्वान् साह्वान् **मीढ्वांश्च** ' (6-1-12) इति निपातनात्, द्वित्वाभावः, अनिट्त्वम्, ढत्वम्, उपधादीर्घश्चेति ज्ञेयम् । '**मीढ्व**स्तोकाय तनयाय मृडय—' इति वैदिकः प्रयोगः ।
4. ' हलश्च ' (3-3-121) इति संज्ञायां घञि गुणे च रूपमेवम् । **मेहः** = मधुमेहः, रोगविशेषः ।
5. मेहति, मेहयति वाऽयमिति **मिहिरः** = सूर्यः । ' इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमि**मिहि**—' (द. उ. 8-26) इत्यादिना किरच्प्रत्यये रूपमेवम् ।
6. ' सनि **मीमा**—' (7-4-54) इत्यत्र अचौरादिकैर्धातुभिः सह साहचर्यात् नास्य ग्रहणम् । अतोऽत्र न ' इस् ' भावादिकमित्यतः, ' इको झल् ' (1-2-9) इति सनः कित्त्वम्, ' अज्झनगमां सनि ' (6-4-16) इत्यनेन (पर्जन्यन्यायेन) दीर्घः । ' श्विडीङिवर्णेष्वथ शीङ्श्रियावपि ' (व्याघ्रभूतिकारिका, **भाष्ये**, 7-2-10) इति नियमाण्णिजभावपक्षे इडागमो नेत्यादिकं यथायथमूह्यम् ।

मेमीयकः-यिका ; मायथिता-त्री, मिमाययिषिता-त्री, [1]मेता-त्री, मिमीषिता-त्री, मेमीयिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि ण्यन्तात् ण्यन्तप्रकृतिकसन्नन्ताच्च **गोमयति**वत् (433) ज्ञेयानि। आधृषीयत्वेन णिज्विकल्पः। तेन णिजभावपक्षे शुद्धात्, शुद्धप्रकृतिकसन्नन्तात्, शुद्धप्रकृतिकयङन्ताच्च भौवादि**कनयति**वत् (680) सर्वाण्यपि रूपाणि (नयतेः प्रातिस्विकरूपाणि विना) ज्ञेयानि। णिजभावपक्षे तु—शतरि—[2]मयन्-न्ती इति रूपम्।

## (1268) " मीङ् हिंसायाम् "

(IV-दिवादिः-1137. सक. अनि. आत्म.)

'मीञो मीनाति मीनीते, **हिंसायां मीयते ङितः** ॥' (श्लो. 16) [इति **देवः** ।' **हिंसाऽत्र मृतिः** ।' इति **धा. का. व्याख्यायाम्** (2.58)।

मायकः-यिका, मायकः-यिका, मिमीषकः-षिका, [3]मित्सकः-त्सिका, मेमीयकः-यिका ; मेता-त्री, माययिता-त्री, मिमीषिता-त्री, मित्सिता-त्री, मेमीयिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**क्षयति**वत् (302) ज्ञेयानि। शतरि मीयन्-न्ती-ती इति रूपमिति विशेषः।

---

1. शुद्धे तृजन्ते इडभावात् गुणे रूपमेवम्।
2. णिजन्तस्थले धातोरस्योभयपदित्वेऽपि णिजभावपक्षे आत्मनेपदप्रवृत्तिनिमित्ताभावात्, 'शेषात् कर्तरि—' (1-3-78) इति परस्मैपदं शतेति ज्ञेयम्।
3. 'सनि **मीमा**—' (7-4-54) इत्यत्र मीनातिमिनोत्योरुभयोरपि **'मी'** इत्यनेन ग्रहणम्-इति **वृत्तिकारः**। तेन नास्य 'मी' इत्यनेन ग्रहणमिति ज्ञायते। **काश्यप-क्षीरस्वामि-वर्धमान**प्रभृतयस्तु धातोरस्यापि तत्र ग्रहणमिति कृत्वा, इस्भावे, अभ्यासलोपादिके, सकारस्य तकारे च कृते '**मित्सते**' इति सन्नन्ते रूपं प्रदर्शयन्ति। " लाक्षणिकमीरूपस्य मिनोतेः अग्रहणशङ्कापनोदनपरा **वृत्तिः** ; न त्वस्याग्रहणपरा।" इति तेषामुपपादनं **माधवधातुवृत्ति**प्रतिपादितमिहानुसन्धेयम्। वस्तुतस्तु '**इको झल्**' (1-2-9) इत्यत्र, 'मीनातिमिनोत्योः—' इति **भाष्यो**क्त्या, 'सनि **मीमा**—' (7-4-54) इत्यत्र मीनातिमिनोत्योर्द्वयोरेव ग्रहणं न्याय्यम्; अन्यथा निरुक्त**भाष्यस्यो**पलक्षणत्वापत्तेः। अस्य धातोरपि ग्रहणे उपलक्षकत्वकल्पनायां च प्रमाणाभावाच्चेत्यलम्। **अन्यत्र** विस्तरः।



## (1269) " मीञ् हिंसायाम् " (IX. क्र्यादिः-1476. सक. अनि. उभ.)

'**मीञो मीनाति मीनीते**, हिंसायां मीयते ङितः॥' (श्लो. 16) इति **देवः**।

[1]मायकः-यिका, [2]मापकः-पिका, [3]मित्सकः-त्सिका, [4]मेमीयकः-यिका ; माता-मात्री, मापयिता-त्री, मित्सिता-त्री, मेमीयिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि सौवादिक**मिनोति**वत् (1253) ज्ञेयानि। [5]मीनन्-प्रमीणन्-ती, प्रमीणानः, इति शतरि शानचि च रूपम्। मीतम्-मीतः-मीतवान्, मीत्वा, [6]प्रमाय, [7]ईषत्प्रमयः-दुष्प्रमयः-सुमयः, मयः-[A]प्रमयः, इत्यादीन्यस्य प्रातिस्विकरूपाणीति ज्ञेयानि।

## (1270) "मीमृ गतौ" (I-भ्वादिः-468. सक. सेट्. पर.)

'—शब्दे च' इति **क्षीरस्वामी**। शब्दार्थे त्वकर्मकः। '**मीम**—' इत्यपि **धातुकाव्ये** (1-60) पाठः।

मीमकः-मिका, मीमकः-मिका, मिमीमिषकः-षिका, मेमीमकः-मिका ; मीमिता-त्री, मीमयिता-त्री, मिमीमिषिता-त्री, मेमीमिता-त्री ;

---

1. '**मीनाति**मिनोतिदीङां ल्यपि च' (6-1-50) इति एज्विषये आकारः। युगागमः। एवमेव णमुल्प्रभृतिष्वपि ज्ञेयम्।
2. ण्यन्तेऽप्येज्विषयत्वेनाकारे, आदन्तलक्षणे पुगागमे च रूपमेवं सर्वत्र ज्ञेयम्।
3. 'सनि **मीमा**—' (7-4-54) इत्यनेन इस्, अभ्यासलोपतकारादिकं यथयथं सन्नन्ते सर्वत्र ज्ञेयम्।
4. यङ एज्विषयत्वाभावेन आकारो न। अभ्यासे गुणः। एवमेव यङन्ते सर्वत्र ज्ञेयम्।
5. शतरि, '**क्र्यादिभ्यः**—' (3-1-81) इति श्ना विकरणप्रत्ययः। प्रत्ययस्य शित्त्वेन ङिद्वद्भावादङ्गस्य गुणो न। '**श्नाऽभ्यस्तयोरातः**' (6-4-112) इत्याकारलोपः। **प्रमीणन्** इत्यत्र 'हिनु**मीना**' (8-4-15) इति णत्वम्। "........परनिमित्तकस्य आल्लोपस्य (च) पूर्वविधौ स्थानिवत्त्वाद् 'एकदेशविकृतस्यानन्यत्वात्' (परि. 37) वा णत्वम्।" इति **माधवो**क्तमिहानुसन्धेयम्। एवमेव **प्रमीणानः** इत्यत्रापि ज्ञेयम्।
6. '**मीनाति**मिनोतिदीङां **ल्यपि च**' (6-1-50) इत्यनेन ल्यप्यप्याकारः।
7. 'निमि**मी**लियां **खलचोरात्वं न**' (वा. 6-1-51) इति खल्प्रत्यये, अच्प्रत्यये चाकारनिषेधः। तेनैवं रूपम्। अत्र **वार्तिके** 'अच्' इत्यनेन पचाद्यचः (3-1-134), एरचः (3-3-57) च ग्रहणमिति ज्ञेयम्। **दुष्प्रमयः**=रिपुः।

A. '........मांसश्रियां **प्रमय**कृत् सितपीतचेलः।' धा. का. 3. 5.

इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकक्षीजतिवत् (309) ज्ञेयानि । क्विपि [1]प्रमीन्-प्रमीमौ-प्रमीमः इति रूपमिति विशेषः । [A]मीमितः ।

**(1271) "मील निमेषणे"** (I-भ्वादिः-517. अक. सेट्. पर.)

**निमेषणम्**=सङ्कोचः ।

मीलकः-लिका मीलकः-लिका, मिमीलिषकः-षिका, मेमीलकः-लिका ;
मीलिता-त्री, मीलयिता-त्री, मिमीलिषिता-त्री, मेमीलिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कीलति**वत् (195) ज्ञेयानि ।

**(1272) "मीव स्थौल्ये"** (I-भ्वादिः-564. सक. सेट्. पर.)

मीवकः-विका, मीवकः-विका, मिमीविषकः-षिका, मेमीवकः-विका ;
मीविता-त्री, मीवयिता-त्री, मिमीविषिता-त्री, मेमीविता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**जीवति**वत् (606) ज्ञेयानि । [B]मीवितः । [2]मीवरः ।

**(1273) "मुच प्रमोचने"** (X-चुरादिः-1744. अक. सेट्. उभ.) [अ]

'—मोदने च' इति **माधवधातुवृत्ति-सिद्धान्तकौमुद्यादिषु** पाठः ।

'कल्कने मुञ्चते मुञ्चेर्मोक्षे मुञ्चति मुञ्चते ।
**प्रमोचने चुरादेर्णौ मोचयत्येष न त्व्लदित् ॥**' (श्लो. 47) इति **देवः** ।

मोचकः-चिका, मुमोचयिषकः-षिका ; मोचयिता-त्री, मुमोचयिषिता-त्री ;
इत्यादिकानि समस्तान्यपि रूपाणि चौरादिक**च्योसयति**वत् (560) ज्ञेयानि ।

---

1. क्विपि '**मो नो धातोः**' (8-2-64) इति पदान्तनिमित्तको नकारः ।
2. बाहुलकादौणादिकेऽरप्रत्यये रूपमेवम् । '**मीवरः**=मानी ।' इति **मा. धा. वृत्तिः** ।

A. 'वनाद् वनं सानुममन् भ्रमन् गृहं व्याधोत्करोऽहम्मति**मीमित**ाशयः ।' धा. का. 1.60.

B. 'अपीवितां नाप्यति**मीवितां** श्रितं तनुं सुतीवोरुमनीवमध्यमाम् ॥' धा. का. 1.72.

[अ] अत्र **प्रमोचनम्**=शरादीनां सन्धानरूपं कायिकं कर्मेति **क्षीरतरङ्गिण्यां** '**मोचयति** शरान्' इत्युदाहरणदानेन ज्ञायते । **मा. धा. वृत्तौ** तु 'ऋणं **निर्मोचयति** प्रतिददातीत्यर्थः ।' इत्युदाहृतत्वात् मानसिकव्यापारविशेष इति प्रतीयते । उभयथाऽपि सकर्मकत्वं ज्ञेयम् ।



**(1274) "मुचि कल्कने"** (I-भ्वादिः-172. अक. सेट्. आत्म.)

'**कल्कने मुञ्चते मुञ्चेः** मोक्षे मुञ्चति मुञ्चते ।' (श्लो. 47) इति **देवः** ।

'मुच—' इति **चन्द्रसंमतः** पाठः । '**कल्कनम्** = दम्भः, क्थनं च ।' इति **क्षीरतरङ्गिणी** । 'शाठ्यम्' इति **मैत्रेयः** । "कत्थनं चेति **स्वामी** ।" इति **मा. धा. वृत्तिः** । 'कथनम् इत्यन्ये ।' इति **सिद्धान्तकौमुदी** । एवञ्च बह्वर्थकत्वं **कल्कन**शब्दस्येति ज्ञेयम् ।

मुञ्चकः-ञ्चिका, मुञ्चकः-ञ्चिका, मुमुञ्चिषकः-षिका, मोमुञ्चकः-ञ्चिका ;
मुञ्चिता-त्री, मुञ्चयिता-त्री, मुमुञ्चिषिता-त्री, मोमुञ्चिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि प्रातिस्विकरूपाणि विना भौवादिक**कुण्ठति**वत् (209) ज्ञेयानि । अस्यात्मनेपदित्वात् शानचि—मुञ्चमानः, मुञ्चिष्यमाणः, मुञ्चयमानः, मुञ्चयिष्यमाणः, मुमुञ्चिषमाणः, मुमुञ्चिषिष्यमाणः, मोमुञ्च्यमानः, मोमुञ्चिष्यमाणः ; इति रूपाणि यथायथं सम्भवन्तीति विशेषः । ल्युटि—[A]मुञ्चनम् ।

**(1275) "मुच्लृ मोक्षणे"** (VI-तुदादिः-1430. सक. अनि. उभ.)

**मुचादिः** ।

'कल्कने मुञ्चते मुञ्चेः, मोक्षे मुञ्चति मुञ्चते ।
प्रमोचने चुरादेर्णौ **मोचयत्येष न त्व्लदित्** ॥' (श्लो. 47) इति **देवः** ।

मोचकः-चिका, मोचकः-चिका, [1]मुमुक्षकः-मोक्षकः-क्षिका, मोमुचकः-चिका;
मोक्ता-मोक्त्री, मोचयिता-त्री, मुमुक्षिता-मोक्षिता-त्री, मोमुचिता-त्री ;
[2]मुञ्चन्-न्ती, मोचयन्-न्ती, मुमुक्षन्-मोक्षन्-न्ती ; —

---

1. सन्नन्ते, 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वे, गुणनिषेधे च रूपमेवं ज्ञेयम् । कर्मकर्तरि, कर्मणोऽविवक्षितत्वे वा **मुचि**रयमकर्मको भवति । तदानीम्, '**मुचो**ऽकर्मकस्य गुणो वा' (7-4-57) इति सकारादौ सनि परतः गुणे, 'अत्र लोपोऽभ्यासस्य' (7-4 58) इत्यभ्यासस्य लोपे च **मोक्षकः-क्षिका** इत्यादीनि रूपाणि यथायथं सर्वत्र भवन्तीति ज्ञेयम् ।
2. शतरि, '**तुदादिभ्यः**—' (3-1-77) इति शप्रत्यये 'शे **मुचादीनाम्**' (7-1-59) इति नुमि च **मुञ्चन्** इति रूपम् । एवमेव शानजन्तेऽपि **मुञ्चान** इत्यत्र प्रक्रियोह्या ।

A. '**अमुञ्चनै**र्मञ्चितचित्तयञ्चितत्रयीमतप्रस्तुचितैः शुभाजकैः ।' धा. का.1-24.

मोक्ष्यन्-न्ती-ती, मोचयिष्यन्-न्ती-ती, मुमुक्षिष्यन्-मोक्षिष्यन्-न्ती-ती ;—
मुच्यमानः, मोचयमानः, मुमुक्षमाणः-मोक्षमाणः, मोमुच्यमानः ;
मोक्ष्यमाणः, मोचयिष्यमाणः, मुमुक्षिष्यमाणः-मोक्षिष्यमाणः, मोमुचिष्यमाणः ;
विमुक्-विमुचौ-विमुचः ; — — —
मुक्तम्-मुक्तः-मुक्तवान्, [1]चक्रमुक्तः, [2]स्तोकान्मुक्तः-अल्पान्मुक्तः-कृच्छ्रान्मुक्तः,
मोचितः, मुमुक्षितः-मोक्षितः, मोमुचितः-तवान् ;
मुचः, [3]जलमुक्-पयोमुक्, [4]नखमुचानि (धनूंषि), [5]मुक्तः-मुक्ता, [6]मोचनः,
मोचः, [A]मुमुक्षुः-मोक्षुः, मोमोचः ; —
मोक्तव्यम्, मोचयितव्यम्, मुमुक्षितव्यम्-मोक्षितव्यम्, मोमुचितव्यम् ;
मोचनीयम्, मोचनीयम्, मुमुक्षणीयम्-मोक्षणीयम्, मोमुचनीयम् ;
[7]मोक्यम्-मोच्यम्, मोच्यम्, मुमुक्ष्यम्-मोक्ष्यम्, मोमुच्यम् ;
ईषन्मोचः-दुर्मोचः-सुमोचः ; — — —

---

1. चक्रान्मुक्त इत्यर्थे 'अपेतापोढमुक्त—' (2-1-38) इति पञ्चमीतत्पुरुषसमासः ।
2. अत्रापि पञ्चमीतत्पुरुषसमासे सति, 'सुपो धातुप्रातिपदिकयोः' (2-4-71) इति प्राप्तस्य सुब्लुकोऽपवादतया, 'पञ्चम्याः स्तोकादिभ्यः' (6-3-2) इति अलुक् । एवमेव **अल्पान्मुक्तः** इत्यादिष्वपि ज्ञेयम् ।
3. जलं मुञ्चतीत्यर्थे 'क्विप् च' (3-2-76) इति कर्मण्युपपदे क्विप् । कर्मण्यण् अत्र न भवति ।
4. नखानि मुञ्चतीत्यर्थे कर्मण्यणोऽपवादतया, 'कप्रकरणे—मूलविभुजादिभ्य उपसंख्यानम्' (वा. 3-2-5) इति कप्रत्यये किरवात् गुणनिषेधे च रूपमेवम् । मूलविभुजादिराकृतिगणः । **नखमुचानि**=मुष्टेर्बहिर्भूतानीत्यर्थः ।
5. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां क्तप्रत्यये रूपमेवम् । **मुक्तः**= प्रकृतिबन्धादुत्थित इत्यर्थः । **मुक्ता** इति तु संज्ञायां क्तप्रत्ययान्तात् टापि रूपमिति ज्ञेयम् । **मुक्ता**=मौक्तिकोत्पत्तिस्थानम् ।
6. चलनार्थकत्वादस्य '**चलन**शब्दार्थाद्—' (3-2-148) इति ताच्छीलिके युचि रूपमेवम् । अकर्मकत्वमपि विवक्षातोऽत्रेति ज्ञेयम् ।
7. निष्ठायामनिट्त्वादस्य, 'चजोः कु घिण्ण्यतोः' (7-3-52) इति ण्यति कुत्वे रूपमेवम् । एवमेव घञन्तेऽपि कुत्वमिति बोध्यम् । आवश्यकार्थे ण्यत्प्रत्यये तु कुत्वं न । ततः **मोच्यम्** इत्यपि साधुः । "—'**अमोच्य**मश्वं यदि मन्यसे........ ।' (रघुवंशे 3-65) इत्यत्रावश्यके ण्यः । 'ण्य आवश्यके' (7-3-65) इति कुत्वनिषेधः ।" इति **मा. धा. वृत्ति**वचनमिहानुसन्धेयम् ।

A. 'वाचंयमान् स्थण्डिलशायिनश्च युयुक्षमाणाननिशं **मुमुक्षून्** ।' भ. का. 3-41.



मुच्यमानः, मोच्यमानः, मुमुक्ष्यमाणः-मोक्ष्यमाणः, मोमुच्यमानः ;
मोकः-निर्मोकः, मोचः, मुमुक्षः-मोक्षः, मोमुचः ;
मोक्तुम्, मोचयितुम्, मुमुक्षितुम्-मोक्षितुम्, मोमुचितुम् ;
मुक्तिः, मोचना, मुमुक्षा-मोक्षा, मोमुचा ;
मोचनम्, मोचनम्, मुमुक्षणम्-मोक्षणम्, मोमुचनम् ;
मुक्त्वा, मोचयित्वा, मुमुक्षित्वा-मोक्षित्वा, मोमुचित्वा ;
विमुच्य, विमोच्य, विमुमुक्ष्य-विमोक्ष्य, विमोमुच्य ;
मोचम् २, } मोचम् २, } मुमुक्षम्-मोक्षम् २, } मोमुचम् २ ; }
मुक्त्वा २, } मोचयित्वा २, } मुमुक्षित्वा-मोक्षित्वा २, } मोमुचित्वा २ ; }
[1]मुचिः-नमुचिः, [2]मुचिरः, [3]मूलम् ।

## (1276) "मुज शब्दार्थः" (I-भ्वादिः-250. अक. सेट्. पर.) [अ]

मोजकः-जिका, मोजकः-जिका, मुमोजिषकः-मुमुजिषकः-षिका, मोमुजकः-जिका ; मोजिता-त्री, मोजयिता-त्री, मुमोजिषिता-मुमुजिषिता-त्री, मोमुजिता-त्री ; इत्यादीनि रूपाणि सर्वाणि भौवादिक**कुच**धातुवत् (200) ज्ञेयानि । यङ्लुकि शता-मोमुजन्[A] इति । [4]मुजितम् अनेनमोजितम्, इति वा ।

---

1. 'इगुपधात् कित्' [द. उ. 1-48) इति इन्प्रत्यये, तस्य कित्त्वेन गुणनिषेधे च रूपमेवम् । न मुञ्चतीति **नमुचिः** । 'न भ्राण्नपान्नवेदानासत्यानमुचि—' (6-3-75) इत्यादिना नञः प्रकृतिभावे रूपमेवम् ।
2. मुच्यन्तेऽनेन दुःखेभ्य इति **मुचिरः** = मोचकः । 'इषिमदि—' [द. उ. 8.26] इत्यादिना किरच्प्रत्यये रूपमेवम् ।
3. 'षिविमुच्योष्टेरू च' [द. उ. 8.83] इति ष्ट्रन्प्रत्यये टेरूकारे च रूपमेवम् । मुच्यते तदिति **मूत्रम्** । **मनोरमायां** तु **मूत्र**धातोरेव प्रकृतरूपे सिद्धेऽत्रैवं साधनं स्वरार्थमित्युक्तम् ।
4. निष्ठायाम् 'उदुपधात्—' (1-2-21) इति कित्त्वविकल्पनात् रूपद्वयम् ।

A. 'गर्जत्खरं गृञ्जितधेनु**मोमुज**द्वत्सोत्करं मुञ्जदजं वजन् व्रजम् ॥' धा. का. 1-33.

[अ] '**मज मुजि**' इति **क्षीरस्वामी, चन्द्रश्च** । '**मृज मृजी**त्यप्याहुः' इति **पुरुषकारः** (श्लो. 59) । **क्षीरतरङ्गिण्यां** तु '**मृज मृजी**त्यप्याहुः' इति पाठ उपलभ्यते । "मुद्रिते **चान्द्र**धातुपाठे तु '**मुज मुजि**' इति पाठ उपलभ्यते (चा. धा. सू. 1-80)" इति **क्षी. टीका** । **माधवीयधातुवृत्तौ** तु **स्वामिचन्द्रयो**र्मते '**मृज मृजी**ति' पाठः प्रदर्शितः । मूलशुद्धिस्त्वत्र कीदृशीति न विद्मः । युक्तायुक्तत्वे खलु सूरयः प्रमाणम् ।

**(1277) "मुजि शब्दार्थः"** (I-भ्वादिः-251. अक. सेट्. पर.)

मुञ्जकः-ञ्जिका, मुञ्जकः-ञ्जिका, मुमुञ्जिषकः-षिका, मोमुञ्जकः-ञ्जिका ; मुञ्जिता-त्री, मुञ्जयिता-त्री, मुमुञ्जिषिता-त्री, मोमुञ्जिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कुण्ठति**वत् (209) बोध्यानि । पचाद्यचि **मुञ्जः**=तृणविशेषः । घञि-मुञ्जः, निष्ठायां सेट्त्वात्, न्यङ्क्वादित्वात् कुत्वमत्रेति ज्ञेयम् ।

**(1278) "मुट प्रमर्दने"** (I-भ्वादिः-सक. सेट्. पर.)

'प्रमर्दने चाक्षेपे च मुटेद् आद्ये तु **मोटति** ॥' (श्लो. 71) इति **देवः** ।

दुर्गसंमतः पाठोऽयम् इति **क्षीरस्वामी** । "—'**मुड**' इति **धनपालः** । '**पुड**' इति........**शाकटायनः** । **क्षीरस्वामी** तु द्वावपि **इदितौ** पपाठ । **मैत्रेयस्तु** अमुं **टान्तमेव** पठित्वा........" इति **मा. धा. वृत्तिः** । दैवश्लोकात् (श्लो. 71) **मा. धा. वृत्तौ** '**मुट सञ्चूर्णने**' (चुरादौ) इत्यत्र 'मोटति इति **मर्दने** शपि' इत्युक्तत्वाच्च अयं धातुः स्वतन्त्र इति ज्ञायते। युक्तायुक्तत्वे त्वत्र सूरयः प्रमाणम् । '**पुड मुड**' इति अमुं **केचित्** पठन्ति । **सि. कौमुद्यादिषु** न पठितोऽयम् ।

मोटकः-टिका, मोटकः-टिका, मुमोटिषकः-मुमुटिषकः-षिका, मोमुटकः-टिका ; इत्यादीनि रूपाणि सर्वाणि भौवादिक**कोचति**वत् (200) ज्ञेयानि । प्रमुटितः-प्रमोटितः, आमोटनम् , इतीमानि रूपाण्यधिकान्यत्रेति ज्ञेयम् ।

**(1279) "मुट आक्षेपप्रमर्दनयोः"** (VI-तुदादिः-1374.सक. सेट्.पर.)

**कुटादिः** ।

'प्रमर्दने चाक्षेपे च **मुटेत्**, आद्ये तु मोटति ॥' (श्लो. 71) इति **देवः** ।

मोटकः-टिका, मोटकः-टिका, मुमुटिषकः-षिका, मोमुटकः-टिका ; मुटिता-त्री, मोटयिता-त्री, मुमुटिषिता-त्री, मोमुटिता-त्री ; इत्यादीनि रूपाणि सर्वाणि तौदादिक**कुटति**वत् (204) ज्ञेयानि ।

**(1280) "मुट सञ्चूर्णने"** (X-चुरादिः-1614. सक. सेट्. उभ.)

'सञ्चूर्णने चुरादेर्णौ **मोटयेद्**तङन्त्ययः ।' (श्लो. 72) इति **देवः** ।



**क्षीरस्वामिनं** विना इतरे सर्वेऽपि '**मुट**' इत्यस्यानुकूलाः । **पुट** इति **क्षीरस्वामी** इति **मा. धा. वृ. टिप्पण्याम्** ।

मोटकः-टिका, मुमोटयिषकः-षिका ; मोटयिता-त्री, मुमोटयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कोटयति**वत् (205) बोध्यानि । विमोटितः[A] ।

**(1281) "मुठि पालने"** (I-भ्वादिः-265. सक. सेट्. आत्म.)

'**—पलायने**' इति **क्षीरस्वामी** । '**काशकृत्स्नचन्द्रौ च**' इति **क्षी. टीका** । मुण्ठकः-ण्ठिका, मुण्ठकः-ण्ठिका, मुमुण्ठिषकः-षिका, मोमुण्ठकः-ण्ठिका ; मुण्ठिता-त्री, मुण्ठयिता-त्री, मुमुण्ठिषिता-त्री, मोमुण्ठिता-त्री ; इत्यादीनि रूपाणि सर्वाणि भौवादिक**कुण्ठति**वत् (209) ज्ञेयानि । अस्य धातोः आत्मनेपदित्वात् शानचि-मुण्ठमानः, मुण्ठिष्यमाणः; मुमुण्ठिषमाणः, मुमुण्ठिषिष्यमाणः, इति रूपाणीति विशेषः । क्विपि-पापमुन्[B]-पापमुण्ठौ पापमुण्ठः इति ।

**(1282) "मुडि मार्जने"** (I-भ्वादिः-275. सक. सेट्. आत्म.)

मार्जनम्=शुद्धिर्न्यग्भावश्च । '**— मज्जने**' इति **क्षीरस्वामी** । "—'**मज्जने**' इति **काशकृत्स्न**धातुपाठीयकन्नडटीकायां (पृष्ठ 100) पाठः । **मज्जनम्**=स्नानम् इत्यपि तत्रैव ।" इति **क्षी-टीका** ।

'**मुण्डते मार्जने** खण्डेः, खण्डने शपि मुण्डति ॥' (श्लो. 83) इति **देवः** ।

मुण्डकः-ण्डिका, मुण्डकः-ण्डिका, मुमुण्डिषकः-षिका, मोमुण्डकः-ण्डिका ; मुण्डिता-त्री, मुण्डयिता-त्री, मुमुण्डिषिता-त्री, मोमुण्डिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कुण्ठति**वत् (209) ज्ञेयानि । अस्य धातोः आत्मनेपदित्वात् मुण्डमानः, मुण्डिष्यमाणः, मुमुण्डिषमाणः, मुमुण्डिषिष्यमाणः; इति शानचि रूपाणि इति विशेषः ।

**(1283) "मुडि खण्डने"** (I-भ्वादिः-326. सक. सेट्. पर.)

'मुण्डते मार्जने मुण्डेः, **खण्डने शपि मुण्डति** ॥' (श्लो. 83) इति **देवः** ।

---

A. 'इत्यादिवादिषु जनेषु **विमोटितारिः**........ ।' धा. का. 3-23.

B. 'स **पापमुन्भिः** बुधहेड्भिरुन्मदैः अनेठितां क्ष्मां पुनरप्यहिण्डत ॥' धा. का. 1.35.

अर्थभेदात् पुनः पाठः । "अत एव, '**मुडि खण्डनप्रमर्दनयोः**' इति **भोजदेवः** । '**मुटि**' इति **कौशिकदुर्गौ**—मुण्टति।" इति **क्षीरतरङ्गिण्याम्** । '**मुड**' इति **धा. का. व्याख्यायाम्** (1-42) ।

मुण्डकः-ण्डिका, मुण्डकः-ण्डिका, मुमुण्डिषकः-षिका, मोमुण्डकः-ण्डिका; मुण्डिता-त्री, मुण्डयिता-त्री, मुमुण्डिषिता-त्री, मोमुण्डिता-त्री, इत्यादीनि सर्वाणि रूपाणि भौवादिक**कुण्ठति**वत् (209) बोध्यानि । [1]मुण्डयन्-न्ती, [2]यवनमुण्डः-का[क]म्बोजमुण्डः, इमानि रूपाण्यधिकान्यत्रेति विशेषः ।

(1284) "**मुण प्रतिज्ञाने**" (VI-तुदादिः-1334. सक. सेट्. पर.)

मोणकः-णिका, मोणकः-णिका, मुमोणिषकः-मुमुणिषकः-षिका, मोमुणकः-णिका ; मोणिता-त्री, मोणयिता-त्री, मुमोणिषिता-मुमुणिषिता-त्री, मोमुणिता-त्री ; इत्यादीनि सर्वाणि रूपाणि प्रातिस्विकरूपाणि विना तौदादिक**पुणति**वत् (1017) ज्ञेयानि । शतरि-[A]मुणन् इति ।

(1285) "**मुद हर्षे**" (I-भ्वादिः-16. अक. सेट्. आत्म.)

'संसर्गे णिचि मोदयेदिति भवेत् हर्षे पुनर्मोदते ॥' (श्लो. 113) इति **देवः** । मोदकः-दिका, मोदकः-दिका, मुमोदिषकः-मुमुदिषकः-षिका, मोमुदकः-दिका; मोदिता-त्री, मोदयिता-त्री, मुमोदिषिता-मुमुदिषिता-त्री, मोमुदिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कोकति**वत् (197) ज्ञेयानि । [3]कुमुदम् , [4]मोदनः, [5]प्रमुदितम्-प्रमोदितम्-[अनेन], प्रमुदितः-प्रमोदितः,

1. मुण्डं करोतीत्यर्थे, '**मुण्डमिश्र**—' (3-1-21) इत्यादिना णिच् । 'सनाद्यन्ता धातवः' (3-1-32) इति धातुसंज्ञायां शतरि रूपमेवम् ।
2. मुण्डो यवन इव इति समासे मयूरव्यंसकादित्वात् (2-1-72) विशेषणस्य परनिपातः । एवं **का[क]म्बोजमुण्ड** इत्यादिष्वपि ।
3. कुं मोदयतीति **कुमुदम्** । अन्तर्भावितण्यन्तात् मूलविभुजादित्वेन (वा. 3-2-5) कप्रत्यये रूपमेवम् । कौ = पृथिव्यां मोदते इत्यपि विगृह्णन्ति ।
4. 'अनुदात्तेतश्च हलादेः' इति तच्छीलादिषु कर्तृषु युच्प्रत्ययः ।
5. निष्ठायाम् '**उदुपधाद्भावादिकर्मणोः**—' (1-2-21) इति कित्त्वविकल्पनात् रूपद्वयम् । भावादिकर्मभ्यामन्यत्र **मुदितः**, **मुदितवान्** इत्येव भवति ।

A. 'ईशस्य पुण्यसुगमस्य वधं **मुणन्तो** मल्लाश्च यत्र चुकुणुः शुनका इवोच्चैः ।' धा. का. 2. 76.



प्रमुदितवान्-प्रमोदितवान् , [1]मुत्[A]-मुदौ-मुदः, [2]मुद्गः-मौद्गम् , [3]मुदिरः, [4]मुद्रा इत्यादीनि रूपाणि अस्य विशेषेण भवन्तीति विशेषः ।

(1286) "**मुद संसर्गे**" (X-चुरादिः-1741. सक. सेट्. उभ.)

'**संसर्गे णिचि मोदयेदि**ति भवेत् हर्षे पुनर्मोदते ॥' (श्लो. 113.) इति **देवः** । मोदकः-दिका, मुमोदयिषकः-षिका ; मोदयिता-त्री, मुमोदयिषिता-त्री ; इत्यादीनि रूपाणि शतरं विना चौरादिक**कोटयति**वत् (205) बोध्यानि । अस्य धातोः उभयपदित्वात् शतरि [सर्पिषा सक्तून्] मोदयन्-न्ती, मुमोदयिषन्-न्ती, मोदयिष्यन्-मुमोदयिषिष्यन्-न्ती-ती ; इति विशेषः ।

(1287) "**मुर संवेष्टने**" (VI-तुदादिः-1343. सक. सेट्. पर.)

'—परिवेष्टने' इति **मा. धा. वृत्तिः** ।

मोरकः-रिका, मोरकः-रिका, मुमोरिषकः-मुमुरिषकः-षिका, मोमुरकः-रिका ; मोरिता-त्री, मोरयिता-त्री, मुमोरिषिता-मुमुरिषिता-त्री, मोमुरिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**कुरति**वत् (229) ज्ञेयानि । क्विपि-मूः-मुरौ-मुरः ; [5]मुरः-मुरा, [6]मुरी इमानि रूपाण्यधिकानीति विशेषः ।

(1288) "**मुर्छा मोहसमुच्छ्राययोः**" (I-भ्वादिः-212. अक.सेट्.पर.)

मूर्छकः-र्छिका, मूर्छकः-र्छिका, मुमूर्छिषकः-षिका, मोमूर्छकः-र्छिका ; मूर्छिता-त्री, मूर्छयिता-त्री, मुमूर्छिषिता-त्री, मोमूर्छिता-त्री ; इत्यादीनि

1. स्त्रियाम्, 'संपदादिभ्यः—' (वा. 3-3-108) इति क्विपि रूपमेवम् ।
2. '**मुदिग्रोर्गग्गौ**' [द. उ. 3-66] इति गक्प्रत्यये रूपम् । कित्त्वान्न गुणः । मोदयन्त्यनेनेति **मुद्गः** = सस्यजातिविशेषः । मुद्गेन संसृष्टं = **मौद्गम्** ।
3. '**इषिमदिमुदि**—' [द. उ. 8-26] इत्यादिना किरच्प्रत्यये रूपम् । मोदन्तेऽनेनेति **मुदिरः** = मेघः ।
4. 'स्फायितञ्चि—' (द. उ. 8-31) इत्यादिना रक्प्रत्यये रूपमेवम् ।
5. '**इगुपध**ज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कप्रत्ययः । **मुरा** = ओषधिविशेषः ।
6. गौरादिपाठात् (4-1-41) स्त्रियां ङीषि रूपमेवम् ।

A. '**मुदा** स चेतो ददते चिरं हरौ स्वादास्सुरैः स्वर्दितमङ्गलोर्दने ।' धा. का. 1-4.

सर्वाणि रूपाणि भौवादिककूजतिवत् (239) बोध्यानि । [1]मूर्तम्-मूर्तः-मूर्तवान् । क्विपि, मूः-मूर्छौ-मूर्छः ; क्तिनि [2]मूर्तिः, [3]मूर्छितः,[A] मूर्छा, इत्यादीनि रूपाण्यस्य धातोः विशेषेण भवन्ति ।

(1289) " **मुर्वी बन्धने** " (I-भ्वादिः-575. अक. सेट्. पर.)

मूर्वकः-र्विका, मूर्वकः-र्विका, मुमूर्विषकः-षिका, मोमूर्वकः-र्विका ; मूर्विता-त्री, मूर्वयिता-त्री, मुमूर्विषिता-त्री, मोमूर्विता-त्री ; इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**गूर्वति**वत् (416) ज्ञेयानि । [4]मूर्वा, [5]**मौर्वी,** मूः-मुरौ-मुरः, इमानि रूपाणि अस्य धातोः विशेषः । शतरि [B]मूर्वन् इति ।

(1290) " **मुष स्तेये** " (IX-क्र्यादिः-1530. अक. सेट्. पर.) [अ]

'अयं द्विकर्मकः' इति **मा. धा. वृत्तिः ।**

मोषकः-षिका, मोषकः-षिका, [6]मुमुषिषकः-षिका, मोमुषकः-षिका ; मोषिता-त्री, मोषयिता-त्री, मुमुषिषिता-त्री, मोमुषिता-त्री ; इत्यादीनि सर्वाणि रूपाणि भौवादिक**पोषति**वत् (1026) ज्ञेयानि ।

---

1. निष्ठायाम्, 'न ध्याख्यापॄ**मूर्छि**मदाम्' (8-2-57) इति नत्वनिषेधे रूपमेवम् । 'राल्लोपः' (6-4-21) इति छकारस्य लोपः । दीर्घः ।
2. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति क्तिचि रूपमेवम् ।
3. मूर्छाऽस्य सञ्जाता इत्यर्थे 'तदस्य सञ्जातं तारकादिभ्य इतच्' (5-2-36) इतीतच्-प्रत्यये रूपम् ।
4. 'गुरोश्च हलः' (3-3-103) इत्यकारप्रत्ययः ।
5. मूर्वाया विकार इत्यर्थे 'तस्य विकारः' (4-3-134) इत्यणि ङीपि च रूपमेवम् ।
6. क्त्वासनोः 'रुदविदमुष—' (1-2-8) इति नित्यं कित्त्वविधानात्, 'रलो व्युपधात्—' (1-2-26) इति वैकल्पिकं कित्त्वं न । तेन सन्नन्ते सर्वत्र एकमेव रूपमिति ज्ञेयम् । एवं क्त्वाप्रत्ययेऽपि **मुषित्वा** इत्येकमेव रूपम् ।

A. 'अहूर्णचित्ताः परि**मूर्छित**व्रताः स्फूर्णमया अप्रयुशः कृतोञ्छनाः ।' धा. का. 1-29.

B. 'दुदूर्विधून् धूर्वितुमेव गूर्वणं **मूर्वन्त**मापूर्वितपर्वताध्वरम् ॥' धा. का. 1-73.

[अ] 'मुष हिंसार्थः' इति भ्वादिष्वपि **क्षीरस्वामी** पपाठ । अन्यैः सर्वैरप्यपाठादस्माभिरयं न लिखितः ।



[1]मुष्णन्[A]-ती, [2]आमोषी[B], मुषितम्-तः-तवान्, [3]मुष्टम्-ष्टः, मुषित्वा, मुष्टिः, [4]मूषिकः-षिका, [5]मुष्कः, इत्यादीनि रूपाणि अस्य धातोः प्रातिस्विकरूपाणि इति ज्ञेयम् । सन्नन्तादुप्रत्यये मुमुषिषुः[C] इति ।

(1291) " **मुस खण्डने** " (IV-दिवादिः-1220. सक. सेट्. पर.)

" **आत्रेयस्तु कातन्त्रे** मूर्धन्यान्तोऽयम् । तथा च 'राघवस्या**मुषः** कान्ताम्' (भ. का. 15-16) इति प्रयोगश्च, इति पाठान्तरमप्याह ।" इति **मा. धा. वृत्तौ ।**

मोसकः-सिका, मोसकः-सिका, मुमोसिषकः-मुमुसिषकः-षिका, मोमुसकः-सिका ; मोसिता-त्री, मोसयिता-त्री, मुमोसिषिता-मुमुसिषिता-त्री, मोमुसिता-त्री ; इत्यादीनि सर्वाणि रूपाणि भौवादिक**कोसति**वत् (234) ज्ञेयानि ।

---

1. 'क्र्यादिभ्यः—' (3-1-81) इति श्ना विकरणप्रत्ययः । '**श्नाऽभ्यस्तयोरातः**' (6-4-112) इत्याकारलोपः । णत्वम् ।
2. 'संपृचानुरुध........**आमुषा**भ्याहनश्च' (3-2-142) इत्यादिना तच्छीलादिषु घिनुण्प्रत्यये रूपमेवम् ।
3. 'आदितश्च' (7-2-16) इत्यत्र **चकारस्यानुक्तसमुच्चयार्थकत्वात् मुष्ट** इत्यादीनां सिद्धिः ; 'चोरिते **मुषितं मुष्टम्**—' इति **स्वामी** च ।' इति **प्रक्रियासर्वस्वे** (पु. 26) । तेन '**मुष्टं** प्रतिग्राहयता स्वमर्थं पात्रीकृतो दस्युरिवासि येन' इति **कालिदास** (५.) प्रयोग उपपद्यते ।
4. '**मुषे**र्दीर्घश्च' (द. उ. 3-14) इति किकन्प्रत्ययो धातोः दीर्घश्च भवति । मुष्णातीति **मूषिकः** । "'**मूष** स्तेये' भौवादिकः । तस्मात् किकन्प्रत्यये दीर्घवचनमन्तरेणापि **मूषिक**शब्दस्य सिद्धत्वात् दीर्घवचनं स्पष्टार्थम् । एवं च मूषेर्ण्वुलि **मूषकः** इत्यपि साधुः । इति **श्वेतवनवासी**" इति **द. उ. टिप्पण्याम् ।**
5. 'सृवृभूशुषिमुषिभ्यः कित्' (द. उ. 3-19) इति कप्रत्ययः किच्च भवति । **मुष्कः=चौरो, मांसलो वा** । 'अण्डः फलं च' इति **क्षीरस्वामी** ।

A. '......पुष्णन् मुदं मृगदृशां रिपुधाम **मुष्णन्** ।' धा. का. 3-12.

B. 'द्रोहि खद्योतसंपर्कि नयना**मोषि** दुःसहम् ॥' भ. का. 7-6.

C. 'किं **मुमुषिषुवद्** यात द्विषो नापचिकीर्षया ॥' भ. का. 7-99.

[1]मुसलम्-मुसली, [2]मुस्ता,[A] [3]मुस्तकम्, इत्यादीनि रूपाण्यस्य धातोः विशेषेण भवन्ति ।

**(1292) "मुस्त संघाते"** (X-चुरादिः-1632. सक. सेट्. उभ.)

**मा. धा. वृत्तिः** अमुं धातुं न पठति। **अन्ये सर्वेऽपि 'मुस्त'** इत्यस्यानुकूला एव। 'अस्त–' इत्यस्य पाठभेदः इति **मा. धा.**; **धा. का.** (3. 26) च। मुस्तकः-स्तिका, मुमुस्तयिषकः-षिका; मुस्तयिता-त्री, मुमुस्तयिषिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि **चौरादिककुस्मयतिवत्** (236) बोध्यानि। अस्य धातोः उभयपदित्वात् शतरि-मुस्तयन्-न्ती, मुमुस्तयिषन्-न्ती; मुस्तयिष्यन्-न्ती-ती, मुमुस्तयिषिष्यन्-न्ती-ती, इमानि रूपाण्यधिकानीति विशेषः ।

**(1293) "मुह वैचित्त्ये"** (IV-दिवादिः-1198. अक. वेट्. पर.)

**रधादिः । वैचित्त्यम्**=विचित्तता, अविवेकः ।

मोहकः-हिका, मोहकः-हिका, [4]मुमुहिषकः-मुमोहिषकः-मुमुक्षकः-क्षिका,

---

1. 'वृषादिभ्यश्चित्' (द. उ. 8-109) इति कलप्रत्यये **मुसलम्** इति रूपम्। गौरादिपाठान्ङीषि **मुसली** इति रूपम्। **मुसली**= गृहगोधिका।

2. बाहुलकात् औणादिके तन्प्रत्यये 'तितुत्र—' (7-2-9) इतीण्निषेधे रूपम्। अथवा, 'व्रातालातक्षुतपुतचित्तनिमित्त**मुस्त**—' इत्यादिना **भोजेन** क्तप्रत्यये निपातितः।' इति **धा. का. व्याख्यानात्** (2-66) एवं रूपमिति ज्ञेयम्।

3. 'संज्ञायाम्' (4-3-117) इति कन्प्रत्यये रूपं भवति। अर्धर्चादिगणे (2-4-31) पाठात् पुंनपुंसकलिङ्गत्वम्। 'भद्रं स्यान्मङ्गले हेम्नि **मुस्तके** करणान्तरे' इति **मेदिनी**।

4. '**रधादिभ्यश्च**' (7-2-45) इति इड्विकल्पः। इट्पक्षे, 'रलो व्युपधात्—' (1-2-26) इति कित्त्वविकल्पः। इडभावपक्षे, 'वा द्रुहमुह—' (8-2-33) इति घत्वपक्षे, चर्त्वे षत्वे च **मुमुक्षकः** इति रूपम्। इडभावपक्ष एव, ढत्वपक्षे, '**षढोः** कः सि' (8-2-41) इति कत्वेऽपि **मुमुक्षक** इति रूपं तुल्यमेव। एवं सन्नन्ते सर्वत्र रूपत्रय(चतुष्टय)स्य निष्पत्तिर्ज्ञेया।

A. '**मुस्ता**मोष्यमसः किटिस्त्वमसमो लुभ्यन् खलानोकसः ...... ॥' धा. का. 2.66.



मोमुहकः-हिका; मोहिता-त्री, [1]मोग्धा-ग्ध्री, मोढा-ढ्री, मोहयिता-त्री, मुमोहिषिता-मुमुहिषिता-मुमुक्षिता-त्री, मोमुहिता-त्री; मुह्यन्-न्ती, [2]मोहयन् परिमोहयन्-न्ती, [A]परिमोहयमाणः, इत्यादीनि सर्वाण्यपि प्रातिस्विकरूपाणि विना **दैवादिकद्रुह्यतिवत्** (885) ज्ञेयानि। [3]परिमोही,[B] क्विपि उन्मुक्, उन्मुट्, [4]मूर्खः इमानि रूपाण्यधिकान्यत्रेति विशेषः ।

**(1294) "मूङ् बन्धने"** (I-भ्वादिः-967. सक. सेट्. आत्म.)

मावकः-विका, मावकः-विका, [5]मुमूषकः-षिका, [6]मिमावयिषकः-षिका, मोमूयकः-यिका; मविता-त्री, मावयिता-त्री, मुमूषिता-त्री, मोमूयिता-त्री; इत्यादीनि सर्वाणि रूपाणि **भौवादिकपवतिवत्** (1033) ज्ञेयानि। [7]मूतम्-तः-तवान्, [8]जीमूतः, क्त्वाप्रत्यये मूत्वा, [9]मूषा इमानि रूपाण्यधिकान्यत्रेति विशेषः ।

---

1. रधादित्वादिड्विकल्पः। इडभावपक्षे घत्वविकल्पः। तेन रूपत्रयं तृजादिषु सर्वत्र ज्ञेयम्।
2. मोहस्य चित्तवत्कर्तृकत्वात् **मोहयन्** इत्यत्र, '**अणावकर्मकात् चित्तवत्कर्तृकात्**' (1-3-88) इति ण्यन्ताच्छतैव। **परिमोहयन् परिमोहयमाणः** इत्यत्र तु 'न पादम्याङ्यमाङ्यस**परिमुह**—' (1-3-89) इति परस्मैपद निषेधात् चित्तवत्कर्तृकत्वेऽकर्मकत्वेऽपि 'णिचश्च' (1-3-74) इति उभयपदं भवतीति ज्ञेयम्।
3. तच्छीलादिषु कर्तृषु 'सम्पृच—' (3-2-142) इत्यादिना घिनुण्प्रत्यये रूपमेवम्।
4. '**मुहेर्खो** मूर् च' [द. उ. 3-52] इति खप्रत्यये, धातोः 'मूर्' इत्यादेशे च रूपमेवम्।
5. सन्नन्ते 'सनि ग्रहगुहोश्च' (7-2-12) इतीण्निषेधः। 'इको झल्' (1-2-9) इति सनः कित्त्वात् गुणनिषेधः।
6. ण्यन्तात् सनि 'ओः पुयण्ज्यपरे' (7-4-80) इत्यनेन पवर्गपरकत्वात् अभ्यासस्य इकारः।
7. निष्ठायाम्, 'श्र्युकः क्किति' (7-2-11) इति इण्निषेधः। एवं क्त्वा क्तिन्प्रभृतिष्वपि ज्ञेयम्।
8. जीवनस्य मूतः **जीमूतः**=मेघः। पृषोदरादित्वात् (6-3-109) जीवनशब्दस्य '**जी**' इत्यादेशः।
9. '**मूङ्**श्चोर्लोपश्च' (द. उ. 9-17) इत्यूषन्प्रत्यये धातूकारलोपे च रूपमेवम्।

A. '**परिमोहयमाणाभी** राक्षसीभिः समावृताः ॥' भ. का. 8-63.
B. 'कुर्याद् योगिनमप्येष स्फूर्जावान् **परिमोहिनम्**।' भ. का. 7-10.

**(1295) "मूत्र प्रस्रवणे"** (X-चुरादिः-1909.अक.सेट्.उभ.) **अदन्तः ।**

मूत्रकः-त्रिका, मुमूत्रयिषकः-षिका ; मूत्रयिता-त्री, मुमूत्रयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कत्रयति**वत (161) ज्ञेयानि । मोमूत्रकः[1]-त्रिका, मोमूत्रितः[A] इमानि रूपाणि अस्य धातोः भवन्तीति विशेषः ।

**(1296) "मूल प्रतिष्ठायाम्"** (I-भ्वादिः-529. अक. सेट्. पर.)

'**मूलेः प्रतिष्ठितौ मूलेद्** रोहणे मूलयेदिति ।' (श्लो. 157) इति **देवः** ।

मूलकः-लिका, मूलकः-लिका, मुमूलिषकः-षिका, मोमूलकः-लिका ; मूलिता-त्री, मूलयिता-त्री, मुमूलिषिता-त्री, मोमूलिता-त्री, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कूलति**वत् (244) बोध्यानि । [2]मूलम्-अमूला-शतमूली, इमानि रूपाणि अस्य धातोः विशेषेण भवन्ति ।

**(1297) "मूल रोहणे"** (X-चुरादिः-1603. सक. सेट्. उभ.)

'मूलेः प्रतिष्ठितौ मूलेद् **रोहणे मूलयेदि**ति ।' (श्लो.157) इति **देवः** ।

'**मुल**—इति नन्दी' इति **क्षीरस्वामी** ।

मूलकः-लिका, मुमूलयिषकः-षिका, मूलयिता-त्री, मुमूलयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कूटयति**वत् (240) ज्ञेयानि । अस्य धातोः उभयपदित्वात् शतरि-मूलयन्-न्ती, मुमूलयिषन्-न्ती, मूलयिष्यन्-न्ती-ती, मुमूलयिषिष्यन्-न्ती-ती ; इति विशेषः । [3]मूलकः ।

**(1298) "मूष स्तेये"** (I-भ्वादिः-676. सक. सेट्. पर.)

मूषकः-षिका, मूषकः-षिका, मुमूषिषकः-षिका, मोमूषकः-षिका ;

1. 'सूचिसूत्रि**मूत्र्य**त्त्यर्त्यशूर्णोतिग्रहणं यङ्विधावनेका**जहला**द्यर्थम्' (वा. 3-1-22) इत्यनेनानेकाच्त्वेऽपि धातोः अस्य यङ् भवति । यङन्तात् ण्वुलि एवं रूपम् । एवमेव तृजादिष्वपि प्रक्रिया ऊह्या ।
2. पचाद्यचि रूपमेवम् । लिङ्गस्य लोकाश्रयत्वादजन्तत्वेऽपि क्लीबत्वमस्येति ज्ञेयम् । **अमूला** इति तु '**मूलान्नञः**' (ग-सू. 4-1-4) इति टापि रूपमेवम् । **शतमूली** इति तु 'पाककर्णपर्णपुष्पफल**मूल**—' (4-1-64) इत्यादिना ङीषि सिध्यति । एवं **दर्भमूली** इत्यादिष्वपि ज्ञेयम् ।
3. स्वार्थे कन्प्रत्यये रूपमेवम् । **मूलकः**=शाकविशेषः ।

A. '**मोमूत्रिता**रिरतिरूक्षणया रणेषु ।' धा. का. 3-59.



मूषिता-त्री, मूषयिता-त्री, मुमूषिषिता-त्री, मोमूषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**चूषति**वत् (552) ज्ञेयानि । [1]मूषा, [2]मूषकः-षिका, इमानि रूपाण्यधिकान्यत्रेति विशेषः ।

**(1299) "मृक्ष संघाते"** (I-भ्वादिः-664. अक. सेट्. पर.)

'मक्ष-इत्यप्येके इति **मैत्रेयः**' इति **धातुवृत्तिः** । '**म्रक्ष—इत्येके**' इति **धा. का.** (1-84) । **क्षीरस्वामी** तु धातुममुं न पठति । '........ **म्रक्षेत् संघाते** ........ ॥' (श्लो. 171) इति **देवः** ।

मृक्षकः-क्षिका, मृक्षकः-क्षिका, मिमृक्षिषकः-षिका, मरीमृक्षकः-क्षिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**तृक्षति**वत् (765) बोध्यानि । '**मक्ष**' इति पाठे [3]मक्षकः-मक्षिका ।

**(1300) "मृग अन्वेषणे"** (X-चुरादिः-1900. सक. सेट्. आत्म.)

**अदन्तः, कथादिः, आगर्वीयश्च ।** [अ]

'**अन्वेषणेऽर्थे मृगयेत णौ** यो मार्गेर्भवेन्मार्गति मार्गयेच्च ॥'
(श्लो. 44) इति **देवः** ।

मृगकः-गिका, मिमृगयिषकः-षिका ; मृगयिता-त्री, मिमृगयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कृपयति**वत् (251) ज्ञेयानि । अस्या-

1. 'गुरोश्च हलः' (3-3-103) इति अकारप्रत्ययः । 'तैजसावर्तनी **मूषा**' **इत्यमरः** ।
2. 'क्वुन् शिल्पिसंज्ञयोः—' (द. उ. 3-5) इति संज्ञायां क्वुन्प्रत्यये रूपमेवम् । स्त्रियां जातिलक्षणं ङीषं बाधित्वा टापि **मूषिका** इति रूपम् ।
3. संज्ञायाम्, 'क्वुन् शिल्पिसंज्ञयोः—' (द. उ. 3.5) इति क्वुन्प्रत्यये रूपमेवम् । स्त्रियां जातिलक्षणं ङीषं बाधित्वा 'अजाद्यतष्टाप्' (4-1-4) इति टापि **मक्षिका** इति रूपम् ।

[अ] '**मृग्यति** इति कण्ड्वादिपाठात् ।' इति **मैत्रेयः**— इति **धातुवृत्तौ** प्रतिपादितम् । दिवाद्यन्ते तु "—'दिवादयस्त्वपरिसमाप्ताः' इत्याहुः । तेन क्षीयते, **मृग्यते** इत्यादिसिद्धिरिति ।" इत्यप्युक्तम् । कण्ड्वादिष्वपि **मृगधातुः** न पठ्यते । "दिवादिस्तु भ्वादिवदाकृतिगणः । तेन क्षीयते **मृग्यती**त्यादिसिद्धिरित्याहुः ।" इति दिवाद्यन्ते **सिद्धान्तकौमुदी**वाक्यात् परस्मैपदमेव दिवादिपाठेऽप्येतस्येति ज्ञायते ।

गर्वीयत्वेन 'आगर्वादात्मनेपदिनः' (ग. सू. चुरादिः) इत्यात्मनेपदमेवेति विशेषः । [1]मृगया ।

## (1301) "मृङ् प्राणत्यागे" (VI-तुदादिः-1403. अक. अनि. आत्म.)

'मृणाति हिंसार्थे प्वादेर्मृङस्तु **म्रियते** पदम् ॥' (श्लो. 34) इति **देवः** । मारकः-रिका, मारकः-रिका, मुमूर्षकः-र्षिका, मेम्रीयकः-यिका ; मर्ता-मर्त्री, मारयिता-त्री, मुमूर्षिता-त्री, मेम्रीयिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि जौहोत्यादिक**पिपर्ति**वत् (1044) ज्ञेयानि । [2]म्रियमाणः[A], [3]मरिष्यन्-न्ती-ती, [श्वा][4]मुमूर्षन्, [5]अमृतम्, [6]मरः-अमरः, [B]दुर्मरम्,

---

1. 'परिचर्यापरिसर्या**मृगया**ऽटाट्यानामुपसंख्यानम्' (वा. 3-3-101) इति स्त्रियां भावादौ शप्रत्यये, अतो लोपे, णेर्गुणे च रूपम् । **मृगया** = आखेटकः । '**मृगि**-कम्प्योः शविधिः' इति वचनेन शप्रत्ययोऽत्रेति **क्षीरस्वामी** । नैतादृशं वचनं **भाष्यादिषु** दृश्यते । व्याकरणान्तरीयं वाक्यमिति **क्षी-टीका** ।
2. शानचि, '**तुदादिभ्यः**—' (3-1-77) इति शप्रत्यये, 'रिङ् शयग्लिङ्क्षु' (7-4-28) इति रिङादेशे इयङादेशे च रूपमेवम् ।
3. 'म्रियतेर्लुङ्लिङोश्च' (1-3-61) इत्यात्मनेपदस्य नियमितत्वात्, स्यप्रत्ययस्य च शित्प्रत्ययत्वादिनिदानाभावादत्र परस्मैपदं भवति । विस्तरस्तु **माधवधातुवृत्त्या-दिषु** बोध्यः । 'ऋद्धनोः स्ये' (7-2-70) इतीडागमोऽत्रेति विशेषः ।
4. सन्नन्ताच्छतरि, 'इको झल्' (1-2-9) इति सनः कित्त्वात्, 'अज्झनगमां सनि' (6-4-16) इति दीर्घे, 'उदोष्ठ्यपूर्वस्य' (7-1-102) इत्युकारे, रपरत्वे च, 'हलि च' (8-2-77) इति दीर्घः । अत्र, 'पूर्ववत् सनः' (1-3-62) इति शानज् न, **म्रियति**धातुमात्रस्यात्मनेपदनिमित्तत्वाभावात् शिल्लुङ्लिङां च निमित्तत्वात् । अतो यथासम्भवं परस्मैपदप्रयोग उपपन्नः । तथा च **भाष्ये** (3-1-7) प्रयुक्तम् '**श्वा मुमूर्षति**' इति । अत्र शुनश्चेतनत्वात् जीवितस्य प्रियत्वात् व्याध्याद्यभिभवेऽपि तिर्यक्त्वात् मर्तुमिच्छा नास्तीत्यत इच्छार्थकस्सन् न, अपि तु 'आशंकायाम्—' (वा. 3-1-7) इति **वार्तिकेन** आशंकने (आशंसने) सन्-इति बोध्यम् । शङ्के, श्वा मुमूर्षति (**मुमूर्षन्** अस्ति) इति वाक्यार्थः । स्पष्टमिदं 'धातोः कर्मणः—' (3-1-7) इत्यत्र **भाष्य-कैय-टादिषु** ।
5. न म्रियते इत्य**मृतम्** । 'मतिबुद्धिपूजार्थेभ्यश्च' (3-2-188) इत्यत्र **चका-रस्या**नुक्तसमुच्चयार्थत्वात् वर्तमाने क्तः । ततो नञ्समासः ।
6. पचाद्यचि—**मरः** । नञ्समासे **अमरः** = देवः ।

A. '**म्रियमाणः** स सुग्रीवं प्रोचे सद्भावमागतः ।' भ. का. 6.141.

B. 'अकाले **दुर्मर**महो यज्जीवामस्त्वया विना ॥' भ. का. 6.14.



[A]मुमूर्षा, [1]मरीचिः, [2]मरुः, [3]मृत्युः, [4]मरूकः, [5]मरुत्, [6]मर्तः-मर्त्यः इती-मान्यस्माद् भवन्तीति विशेषः ।

## (1302) "मृजू शुद्धौ" (II-अदादिः-1066. अक. वेट्. पर.) [अ]

'शौचालंकारयोर्वा णौ मृजेर्मार्जति मार्जयेत् ॥
**मार्ष्टि शुद्धौ** तथा मार्जेः शब्दार्थान्मार्जयेण्णिचि ।'
(श्लो. 60-61) इति **देवः** ।

मार्जकः-र्जिका, मार्जकः-र्जिका, [7]मिमार्जिषकः-षिका-मिमृक्षकः-क्षिका,

---

1. '**मृ**कणिभ्यामीचिः' [द. उ. 1-38] इतीचिप्रत्यये रूपमेवम् । म्रियते इति **मरीचिः** = रश्मिः, ऋषिविशेषश्च ।
2. 'भृमृ—' [द. उ. 1-92] इत्युप्रत्यये रूपम् । म्रियन्तेऽस्मिन् प्राणिनः सलिलार्थिन इति **मरुः** = जलतृणविवर्जितो देशः ।
3. 'भुजि**मृङ्भ्यां** युक्त्युकौ [द. उ. 1.135] इति त्युक्प्रत्यये, कित्त्वाद् गुणनिषेधे च रूपमेवम् ।
4. '**मृ**कणिभ्यामूकोकणौ' [द. उ. 3.44] इत्यूकप्रत्ययः । **मरूकः** = प्राणिविशेषः ।
5. '**मृ**ग्रोरुतिः' [द. उ. 6.1] इत्युतिप्रत्यये रूपमेवम् । **मरुत्** = वायुः, देवो वा ।
6. 'हसि**मृ**—' [द. उ. 6-7] इति तन्प्रत्यये रूपमेवम् । **मर्तः** = प्राणी । **मर्त**शब्दात्, 'नवसूर**मर्त**यविष्ठेभ्यो यत्' (वा. 5-4-36) इति स्वार्थे यत्प्रत्यये **मर्त्यः** इति सिद्ध्यति । **मर्त्यः** = मनुष्यः ।
7. धातोरस्य ऊदित्त्वेन, 'स्वरतिसूतिसूयतिधूञू**दितो** वा' (7-2-44) इतीड्विकल्पः । इट्पक्षे रूपमेवम् । इडभावपक्षे, झलादित्वेन सनः कित्त्वेन गुणनिषेधे, 'व्रश्चभ्रस्जसृज**मृज**—' (8-2-36) इत्यादिना षत्वे, 'षढोः कः सि' (8-2-41) इति ककारे षत्वे च रूपमेवम् । एवमेव सन्नन्ते सर्वत्र रूपद्वयस्योपपत्तिर्ज्ञेया ।

A. 'ज्याघुष्टकठिनाङ्गुष्ठं राममायान्**मुमूर्षया** ॥' भ. का. 5.57.

[अ] '**मृजूष्**—' इति **क्षीरस्वामी** षितममुं पठित्वा, उत्तरत्र, 'भिदादौ (3-3-104) **मृजा** ।' इत्यप्याह । अनूदितश्चायं पक्षः **पुरुषकारे** (श्लो. 61), खण्डितश्च । 'षकारोऽनर्थः ।' इति च **क्षीरस्वामि**वाक्यं किञ्चिदनूदितमत्र **पुरुषकारे** । परं तु **क्षीरतरङ्गिण्यां** नैतादृशं वाक्यमधुनोपलभ्यते । यदि धातोः षित्त्वं प्रामाणिकं स्यात्—तर्हि षित्त्वेनैव निदानेनाङ्सिद्धेर्भिदादिपाठपरिकल्पनमन्याय्यमिति तदाशयः । वस्तुतस्तु **क्षीरतरङ्गिण्यां** धातोरस्य षित्करणं लेखकदोषादापतितमिति भाति ।

[1]मरीमृजकः-जिका ;

[2]मार्जिता-मार्ष्टा-मार्ष्टी, मार्जयिता-त्री, मिमार्जिषिता-मिमृक्षिता-त्री, मरीमृजिता-त्री ;

[3]मार्जन्-मृजन्-ती, मार्जयन्-न्ती, मिमार्जिषन्-मिमृक्षन्-न्ती; मार्जिष्यन्-[4]मार्क्ष्यन्-न्ती-ती, मार्जयिष्यन्-न्ती-ती, मिमार्जिषिष्यन्-मिमृक्षिष्यन्-न्ती-ती ; —

[5]व्यतिमार्जानः, व्यतिमृजानः, मार्जयमानः, व्यतिमिमार्जिषमाणः-व्यतिमिमृक्षमाणः, मरीमृज्यमानः- [6]मर्मृज्यमानासः व्यतिमार्जिष्यमाणः-व्यतिमार्क्ष्यमाणः, मार्जयिष्यमाणः, व्यतिमिमार्जिषिष्यमाणः-व्यतिमिमृक्षिष्यमाणः, मरीमृजिष्यमाणः ;

[7]कंसपरिमृट्-कंसपरिमृड्-कंसपरिमृजौ-कंसपरिमृजः ; —

---

1. 'न धातुलोप आर्धधातुके' (1-1-4) इत्यत्रत्य**भाष्य**परामर्शनात् यङन्ते सर्वत्र वृद्धिविकल्पः इति ज्ञायत इति **बृहच्छब्देन्दुशेखरे** (पु. 1878) स्पष्टम् । ततश्चात्र सर्वत्र **मरीमार्जकः-र्जिका, मरीमार्जिता-त्री**; इत्यादीनि रूपाणि यथासम्भवं तत्तत्प्रत्ययेषु ज्ञेयानि । एवं '**मर्मृज्यते मर्मृज्यमानास** इति चोपसंख्यानम्' (वा. 7-4.91) इत्युक्तत्वात् ण्वुलादिष्वप्यस्य रुकि रूपनिष्पत्तिर्भवतीति न मन्तव्यम् ; यतोऽत्र निपातनस्थलेष्विव स्वरूपग्रहणात्, निर्दिष्टरूपस्यैव साधुत्वज्ञापनात्, यङ्लुकि विहितस्य रुको यङन्तेऽपि निर्दिष्टयोरुभयोर्विषयेऽप्युपसंख्यानार्थमेव **वार्तिका**वताराच्च इति स्पष्टं **कैयटादौ** ।
2. तृजादिष्वप्यूदित्त्वादिड्विकल्पः । इडभावपक्षे, इट्पक्षेऽपि लघूपधलक्षणं गुणं बाधित्वा, '**मृजेर्वृद्धिः**' (7-2-114) इति वृद्धिः । एवमेव तव्यदादिष्वपि ज्ञेयम् ।
3. शतरि, '**अदिप्रभृतिभ्यः**—' (2-4-72) इति शब्लुकि, 'इहान्ये **वैयाकरणाः मृजे**रजादौ सङ्क्रमे विभाषा वृद्धिमारभन्ते' (भाष्यवाक्यम् 1-1-3) इति वृद्धिविकल्पः । वृद्ध्यभावपक्षे, शतुरपित्सार्वधातुकत्वेन ङिद्वद्भावादङ्गस्य गुणो न ।
4. स्यप्रत्यये इडभावपक्षे षत्वकत्वषत्वेषु रूपमेवम् ।
5. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच् । वृद्धिविकल्पः ।
6. यङन्ताच्छानचि, 'मर्मृज्यते **मर्मृज्यमानास** उपसंख्यानम्' (वा. 7-4-91) इति वचनात् रीगपवादतया पाक्षिके रुकि, बहुवचने जसः, 'आज्जसेरसुक्' (7-1-50) इत्यसुकि रूपमेवम् । "छन्दोऽधिकारः 'आज्जसेरसुक्' (7-1-50) इति यावत् ।" इति **काशिकायाम्** (7-1-38) उक्तत्वात् वैदिकेष्वेवास्य प्रयोग इति ज्ञेयम् ।
7. कंसं परिमार्ष्टि इत्यर्थे, 'क्विप् च' (3-2-76) इति कर्मण्युपपदे क्विप् । पदान्तनिमित्तके षत्वे जश्त्वे चर्त्वविकल्पे च रूपमेवम् ।



[1]मृष्टम्-मृष्टः-मृष्टवान्, मार्जितः, मिमार्जिषितः-मिमृक्षितः, मरीमृजितः-तवान्;

परिमार्जः, [2]तुन्दपरिमृजः[A]-तुन्दपरिमार्जः, [3]परिमार्क्ष्णुः, [4]मार्जनः, मार्जः, मिमार्जिषुः-मिमृक्षुः, मरी[मार्जः]मृजः ;

मार्जितव्यम्-मार्ष्टव्यम्, मार्जयितव्यम्, मिमार्जिषितव्यम्-मिमृक्षितव्यम्, मरीमृजितव्यम् ;

मार्जनीयम्, मार्जनीयम्, मिमार्जिषणीयम्-मिमृक्षणीयम्, मरीमृजनीयम्; [5]मृज्यः-[B]मार्ग्यः, [6]अवश्यमार्ज्यः, मार्ज्यम्, मिमार्जिष्यम्-मिमृक्ष्यम्, मरीमृज्यम् ;

ईषन्मार्जः-दुर्मार्जः-सुमार्जः ; — — —

मृज्यमानः, मार्ज्यमानः, मिमार्जिष्यमाणः-मिमृक्ष्यमाणः, मरीमृज्यमानः ;

---

1. ऊदित्त्वेनेड्विकल्पनात् निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्निषेधः । षत्वे ष्टुत्वे च रूपमेवम् ।
2. तुन्दं परिमार्ष्टीत्यर्थे, '**तुन्द**शोकयोः **परिमृजा**पनुदोः' (3-2-5) इति कर्मण्युपपदे अणोऽपवादतया कप्रत्ययः । कित्त्वेन गुणनिषेधः । 'आलस्यसुखाहरणयोः—' (वा. 3-2-5) इति वचनात् आलस्यविशिष्टे कर्तर्येवायं प्रत्यय इति ज्ञेयम् । तदभावपक्षे **तुन्दपरिमार्जः** इत्यत्र, 'कर्मण्यण्' (3-2-1) इति अण्प्रत्यये वृद्धौ च रूपम् । अत्र कप्रत्ययस्य कित्त्वात्, '**मृजे**रजादौ सङ्क्रमे विभाषा वृद्धिम्—' (**भाष्य**वाक्यम् 1-1-3) इति वचनात् आलस्यरूपार्थे एव वृद्धिविकल्पमाशङ्क्य, 'सा भवत्येव सत्यभिधाने' इति **उद्द्योते** (3-1-5) समाहितम् । उत्तरत्र च यद्यनभिधानमभिमतम्, तदानीम्, 'इको गुणवृद्धी' (1-1.3) इति सूत्रे **भाष्य**स्वारस्यात् निरुक्त**भाष्य**वाक्ये '**अजादौ**' इत्यस्य आतिदेशिकक्ङिदजादिप्रत्यये इत्यर्थपरकत्वमाश्रित्य, अत्र कप्रत्ययस्यौपदेशिककित्त्वेन वृद्धिनिषेध एवेति च समाहितम् ।
3. ताच्छीलिके, "–'परिक्षिपच्**परिमृजः** क्स्नुः' इति क्स्नुप्रत्ययः । **परिमार्क्ष्णुः** ।" इति **प्रक्रियाकौमुदी** । **भाष्यादिषु** तु नैतादृशं वचनमुपलभ्यते ।
4. बाहुलकात्, नन्द्यादेः (3-1-134) आकृतिगणत्वाद्वा ण्यन्तात् कर्तरि ल्युप्रत्यये रूपमेवम् ।
5. '**मृजे**र्विभाषा' (3-1-113) इति विभाषा क्यप् । पक्षे ण्यति निष्ठायामनिट्त्वात् 'च**जोः** कु घिण्**ण्यतोः**' (7-3-52) इति कुत्वे वृद्धौ च **मार्ग्यः** इति रूपम् ।
6. आवश्यकार्थे ण्यति, 'ण्य आवश्यके' (7-3-65) इति कुत्वनिषेधः ।

A. 'इह युवतिवदनकान्तिभिराप्यायित**तुन्दपरिमृजः** शेते ।' अनर्घराघवे 7-110.

B. 'मन्युस्तस्य त्वया **मार्ग्यो मृज्यः** शोकश्च तेन ते ॥' भ.का. 6-57.

मार्गः, [1]अपामार्गः, मार्जः, मिमार्जिषः-मिमृक्षः, मरीमर्जः ; मार्जितुम्-मार्ष्टुम्, मार्जयितुम्, मिमार्जिषितुम्-मिमृक्षितुम्, मरीमृजितुम् ; [2]मृजा,[A] मृष्टिः, मार्जना, मिमार्जिषा-मिमृक्षा, मरीमृजा ; परिमार्जनम्- [3]सम्मार्जनी, [4]सांमार्जनम्, मार्जनम्, मिमार्जिषणम्-मिमृक्षणम्, मरीमृजनम् ; मार्जित्वा-मृष्ट्वा, मार्जयित्वा, मिमार्जिषित्वा-मिमृक्षित्वा, मरीमृजित्वा ; विमृज्य-अपमृज्य, विमार्ज्य, विमिमार्जिष्य-विमिमृक्ष्य, विमरीमृज्य ;

मार्जम् २, मार्जित्वा २-मृष्ट्वा २, } मार्जम् २, मार्जयित्वा २, } मिमार्जिषम् २-मिमृक्षम् २, मिमार्जिषित्वा २-मिमृक्षित्वा २, } मरीमृजम् २ ; मरीमृजित्वा २; } [5]मर्जूः, [6]मार्जारः, [7]मार्जालीयः ।

1. 'हलश्च' (3-3-121) इति संज्ञायां घञि, कुत्वे, 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (6-3-122) इति 'अप' इत्युपसर्गान्त्याकारस्य दीर्घे रूपमेवम्। अपमृज्यतेऽनेन व्याध्यादिरिति **अपामार्गः** = ओषधिविशेषः ।
2. स्त्रियां भावादौ भिदादिपाठात् (3-3-104) अङि, औपदेशिकङित्त्वादस्य प्रत्ययस्य '**मृजे**रजादौ—' (**भाष्य**वाक्यम् 1-3-5) इत्यत्र नास्य ग्रहणमिति निर्णयात्, 'क्ङिति च' (1-1-5) इति वृद्धिनिषेधे च रूपमेवम्। बाहुलकात् क्तिनि वृद्धौ च **मार्ष्टिः** इत्यपि रूपमिति ज्ञेयम्। **मा. धा. वृत्तौ** तु '**मार्ष्टि**रिति चुरादौ वक्ष्यते' इत्युक्तम्। चुरादिषु तु कुत्रापि **मार्ष्टि**शब्दनिष्पत्तिः तेन न क्रियते। **मृष्टि**रिति तु बाहुलकात् क्तिनि, क्तिचि वा निष्पद्यत इति ज्ञेयम् ।
3. **सम्मार्जनी** इति करणल्युडन्तात् स्त्रियां टित्त्वेन ङीपि रूपम्। **सम्मार्जनी** = शोधनसाधनी ।
4. सम्पूर्वकादस्माद् भावे 'अभिविधौ भाव इनुण्' (3-3-44) इतीनुणि, तदन्तात् 'अण् इनुणः' (5-4-15) इति स्वार्थिके अण्प्रत्यये, 'इनण्यनपत्ये' (6-4-164) इति नान्तस्य प्रकृतिभावे च रूपमेवम्। क्लीबत्वं लोकादत्रेति ज्ञेयम्। **काशिकायाम्** (6-4-164) उदाहृतमिदं पदम्।
5. '**मृजेर्गुणश्च**' (द. उ. 1-165) इत्यूप्रत्यये, वचनादेव वृद्ध्यपवादे गुणे च रूपम्। **मर्जूः**=शुद्धिः ।
6. 'कञ्जि**मृजिभ्यां** चित्' (द. उ. 8-67) इत्यारन्प्रत्यये रूपसिद्धिः। मार्ष्टि भवनमिति **मार्जारः**=बिडालः ।
7. 'स्थाचति**मृजेः** आलवालजालीयरः' (द. उ. 10-1) इत्यनेन यथासंख्यमालीयर् प्रत्यये रूपमेवम्। मार्ष्टि अशुभं रक्षांसि चेति **मार्जालीयः** = अग्निः ।

A. 'पयोधरांश्चन्दनपङ्कदिग्धान् वासांसि **चामृष्टमृजानि** दृष्ट्वा ।' भ. का. 11.27.



(1303) "**मृजू शौचालङ्कारयोः**" (X-चुरादिः-1849. सक. सेट्. उभ.)

**आधृषीयः ।**

'**शौचालङ्कारयोर्वा णौ मृजेर्मार्जति मार्जयेत् ॥**' (श्लो. 60) इति **देवः** ।

'**मृजूष्**—' इति **क्षीरस्वामी** । ऊदित्त्वस्य ण्यन्ते प्रयोजनाभावात्, शुद्ध एवोपयोगाच्चास्य णिज्विकल्प इति ज्ञेयम्। यद्वा, आधृषीयत्वेनेड्विकल्प इति बोध्यम् ।

मार्जकः-र्जिका, मिमार्जयिषकः-षिका, मार्जकः-र्जिका, मिमार्जिषकः-षिका, मिमृक्षकः-क्षिका, मरीमृजकः-मरीमार्जकः-र्जिका ; मार्जयिता-त्री, मिमार्जयिषिता-त्री, मार्जिता-त्री, मार्ष्टा-मार्ष्ट्री, मिमार्जिषिता-मिमृक्षिता-त्री, मरीमृजिता-मरीमार्जिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि यथासम्भवमूह्यानि । णिजभावपक्षे पूर्वलिखितादादिक**मार्ष्टि**वत् (1302) सन्नन्ते, यङन्ते च रूपाणि बोध्यानि । ण्यन्तात्, ण्यन्तप्रकृतिकसन्नन्ताच्च, णिन्निमित्तकं लघूपधलक्षणं गुणं बाधित्वा, '**मृजेर्वृद्धिः**' (7-2-114) इति वृद्धिरिति विशेषः । वृद्धिविधायके सूत्रे उत्सृष्टानुबन्धस्य **मृजे**रविशेषेण ग्रहणमिति विवेकः ।

(1304) "**मृड सुखने**" (VI-तुदादिः-1327. अक. सेट्. पर.)

'मृडेर्मृड्णाति सुखने तत्रैव **मृडतीति शे** ॥' (श्लो. 87) इति **देवः** ।

मर्डकः-र्डिका, मर्डकः-र्डिका, मिमर्डिषकः-षिका, मरीमृडकः-डिका ; मर्डिता-त्री, मर्डयिता-त्री, मिमर्डिषिता-त्री, मरीमृडिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि प्रातिस्विकरूपाणि विना भौवादिक**गर्जति**वत् (422) ज्ञेयानि । [1]मृडः-मृडानी, क्तिनि-[2]मृढिः, [3]मृडित्वा,[A] इमानि रूपाण्यधिकान्यत्रेति विशेषः ।

1. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कप्रत्यये रूपम्। मृडस्य स्त्री इति विवक्षायां 'इन्द्रवरुणभवशर्वरुद्र**मृड**—' (4-1-49) इत्यादिना पुंयोगे ङीषि आनुगागमे **मृडानी** इति रूपं भवति ।
2. 'तितुत्र—' (7-2-9) इतीण्निषेधे ढत्वे ष्टुत्वे च रूपमेवम् ।
3. '**मृड**मृद—' (1-2-7) इति सेटः क्त्वायाः कित्त्वात् गुणनिषेधे रूपमेवम्। 'न क्त्वा सेट्' (1-2-18) इत्यस्य प्रतिषेधः ।

A. '**अमृडित्वा** सहस्राक्षं क्लिशित्वा कौशलैर्निजैः ।' भ. का. 7.96.

(1305) **"मृड क्षोदे"** (IX-क्र्यादिः-1516. सक. सेट्. पर.)

'मृड सुखे चेति **केचित्** ।' इति **मा. धा. वृत्तिः** । '—सुखने' इति **क्षीरस्वामी, पुरुषकारश्च** । तत्र (पुरुषकारे श्लो. 87) "अन्ये.........क्षोदे, मृड सुखने च" इति पठन्ति इति ।

'**मृडेर्मृड्णाति सुखने** तत्रैव मृडतीति शे ॥' (श्लो. 87) इति **देवः** ।

मर्डकः-र्डिका, मर्डकः-र्डिका, मिमर्डिषकः-षिका, मरीमृडकः-डिका ; मर्डिता-त्री, मर्डयिता-त्री, मिमर्डिषिता-त्री, मरीमृडिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**तृपति**वत् (772) ज्ञेयानि । [1]मृड्णन्-ती-न्ती, व्यतिमृडाणः, [2]मृडीकम्-मृडङ्कणः, इमानि रूपाणि अस्य धातोः विशेषः ।

(1306) **"मृण हिंसायाम्"** (VI-तुदादिः-1331. सक. सेट्. पर.)

मर्णकः-र्णिका, मर्णकः-र्णिका, मिमर्णिषकः-षिका, मरीमृणकः-णिका ; मर्णिता-त्री, मर्णयिता-त्री, मिमर्णिषिता-त्री, मरीमृणिता-त्री ; इत्यादीनि सर्वाणि रूपाणि प्रातिस्विकरूपाणि विना तानादिक**तर्णोति**वत् (766) बोध्यानि । [3]मृणालम् ।

(1307) **"मृद क्षोदे"** (IX-क्र्यादिः-1515. अक. सेट्. पर.) [अ]

'**क्षोदनम्**=सञ्चूर्णनम्' इति **धा. का.** (3-10) ।

मर्दकः-र्दिका, मर्दकः-र्दिका, मिमर्दिषकः-षिका, मरीमृदकः-दिका ; मर्दिता-त्री, मर्दयिता-त्री, मिमर्दिषिता-त्री, मरीमृदिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**तृपति**वत् (772) ज्ञेयानि । क्विपि-

1. शतरि, 'क्र्यादिभ्यः श्ना' (3-1-81) इति श्ना विकरणप्रत्ययः । '**श्नाऽभ्यस्तयोरातः**' (6-4-112) इत्याकारलोपे णत्वे च रूपम् ।
2. '**मृडः** कीकन् कङ्कणौ' (द. उ. 10-11) इति कीकन् कङ्कणः इत्येतौ प्रत्ययौ भवतः । **मृडीकम्**=हिरण्यम् । **मृडङ्कणः**=शिशुः ।
3. 'तमिविडिविलि**मृणि**—' (द. उ. 8-115) इत्यादिना कालच्प्रत्यये रूपम् । **मृणालम्**=बिसम् ।

[अ] **क्वचित् सिद्धान्तकौमुद्यां 'मृद मर्दने'** इति भ्वादिष्वपि (767) पठ्यते । वस्तुतस्तत्र '**म्रद**—' इति भाव्यम् इत्याशयेनास्माभिर्नायं विलिखित इति ज्ञेयम् ।



मृत्-मृद्-मृदौ-मृदः, [1]मृत्तिका, मृत्सा-मृत्स्ना, [2]मुरमर्दनः, मर्दनम्, [3]मृद्यः, [4]महिषासुरमर्दनी, [5]मृदित्वा, [6]मृदङ्गः, इत्यादीनि रूपाणि अस्य धातोः विशेषेण भवन्ति ।

(1308) **"मृधु उन्दने"** (I-भ्वादिः-874. सक. सेट्. उभ.)

**उन्दनम्**=क्लेदनम् ।

मर्धकः-र्धिका, मर्धकः-र्धिका, मिमर्धिषकः-षिका, मरीमृधकः-धिका ; मर्धिता-त्री, मर्धयिता-त्री, मिमर्धिषिता-त्री, मरीमृधिता-त्री ; इत्यादीनि प्रातिस्विकरूपाणि विना सर्वाण्यपि रूपाणि तानादिक**तर्णोति**वत् (766) ज्ञेयानि । शतरि-मर्धन्-न्ती, [A]मृद्धम्-द्धः-मृद्धवान्, [7]मर्धित्वा-मृद्ध्वा, [8]मृधम्, इमानि रूपाणि अस्य धातोः भवन्तीति विशेषः ।

(1309) **"मृश आमर्शने"** (VI-तुदादिः-1425. सक. अनि. पर.)

**आमर्शनम्**=स्पर्शः ।

मर्शकः-र्शिका, मर्शकः-र्शिका, [9]मिमृक्षकः-क्षिका, मरीमृशकः-शिका ;

1. '**मृद**स्तिकन्' (5-4-39) इति मृच्छब्दात् स्वार्थे तिकन्प्रत्यये रूपमेवम् ।
2. नन्द्यादेः (3-1-134) आकृतिगणत्वात् कर्तरि ल्युप्रत्ययः । मुरं मर्दयतीति **मुरमर्दनः** ।
3. 'ऋदुपधात्—' (3-1-110) इति क्यप्प्रत्ययः ।
4. बाहुलकात् 'कृत्यल्युटो बहुलम्' (3-3-113) इति कर्मण्युपपदे कर्तरि ल्युटि, स्त्रियां टित्त्वात् ङीपि च रूपमेवम् ।
5. 'मृड**मृद**—' (1-2-7) इति सेटः क्त्वायाः कित्त्वात् गुणनिषेधे रूपमेवम् ।
6. 'विडादिभ्यः कित्' (द. उ. 3-61) इति अङ्गच्प्रत्ययः । **मृदङ्गः**=वाद्यविशेषः ।
7. '**उदितो** वा' (7-2-56) इति क्त्वायामिड्विकल्पः । इट्पक्षे 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधात् गुणे **मर्धित्वा** इति रूपम् । तेन रूपद्वयं ज्ञेयम् ।
8. 'घञर्थे कविधानम्' (वा. 3-3-58) इति कप्रत्यये रूपमेवम् । बाहुलकाद्वा भावे कप्रत्ययः । **मृधम्** = समरः इति **क्षीरस्वामी** ।
9. सन्नन्तात् ण्वुलि, 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वात् '—अकिति' (6-1-59) इत्युक्तत्वात् अमभावे 'व्रश्च—' (8-2-36) इत्यादिना धातुशकारस्य षकारे 'षढोः कः सि' (8-2-41) इति ककारे षत्वे च रूपमेवम् । एवं सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया ।

A. 'या नेदितोर्वीपरिशर्धिवीची**विमृद्ध**वृक्षादिविबोध्यशैल्या ॥' धा. का. 2.26.

[1]म्रष्टा-मर्ष्टा-र्ष्टूं, मर्शयिता-त्री, मिमृक्षिता-त्री, मरीमृशिता-त्री, इत्यादीनि सर्वाणि रूपाणि भौवादिक**कर्षति**वत् (255) ज्ञेयानि । शतरि-[2]आमृशन्-न्ती-ती, म्रक्ष्यन्-मर्क्ष्यन्-न्ती-ती ; इति विशेषः ।

## (1310) "मृष तितिक्षायाम्" (IV-दिवादिः-1164. सक. सेट्. उभ.)

'— —क्षमायां यौ मर्षेन्मर्षेत मर्षयेत् ।
**मृष्यते मृष्यतीति** स्यात् स्नेहने शपि मर्षति ॥' (श्लो. 173) इति **देवः** ।

मर्षकः-र्षिका, मर्षकः-र्षिका, मिमर्षिषकः-षिका, मरीमृषकः-षिका ; मर्षिता-त्री, मर्षयिता-त्री, मिमर्षिषिता-त्री, मरीमृषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि दैवादिक**तृष्यति**वत् (775) ज्ञेयानि । [3]परिमृष्यन्-न्ती, [4]मर्षितः-मर्षितवान्, [A]अपमृषितम् (वाक्यम्), [5]दुर्मर्षणः,

---

1. 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' (6-1-59) इति वा अमागमः । ततः यण् । तेन रूपद्वयं बोध्यम् । एवमेव अकिति झलादिप्रत्यये परतः सर्वत्र अमागमो विकल्पेन भवति ।
2. '**तुदादिभ्यः** शः' (3-1-77) इति शः विकरणप्रत्ययः । अपित्सार्वधातुकस्य शस्य ङिद्वद्भावाद् अङ्गस्य गुणो न । स्त्रियां नुम्विकल्पे रूपद्वयं ज्ञेयम् ।
3. '**परेर्मृषः**' (1-3-82) इति परिपूर्वकस्यास्य कर्तृगामिन्यपि क्रियाफले **परस्मैपदं** शतैव । तेन शतरि, श्यनि अङ्गस्य गुणनिषेधे च रूपमेवम् ।
4. '**मृषस्तितिक्षायाम्**' (1-2-20) इति सेटो निष्ठायाः कित्त्वनिषेधात् गुणे रूपमेवम् । अत्र धातुपाठ एवास्य धातोस्तितिक्षार्थनिर्देशात्, भौवादिक**मर्षते**-रुदित्त्वेन निष्ठायामिटः प्राप्त्यभावात्, पारिशेष्यात् दैवादिकस्यास्यैव ग्रहणस्य सम्भवेन (1-2-20) सूत्रे पुनः '**तितिक्षायाम्**' इत्युपादानं व्यर्थं सत् धातोरर्थान्तरत्वे गमकमिति **शाब्दिकाः** । तेन तितिक्षा (क्षमा) भिन्नार्थे निष्ठायाः कित्त्वमेव । यथा— '**अपमृषितं** वाक्यमाह' इति । अत्र धातोरुपसर्गयोगवशात् अविस्पष्टरूपार्थान्तरे वृत्तिरिति ज्ञेयम् ।
5. ईषदाद्युपपदेषु, 'भाषायां शासियुधिदृशिधृषि**मृषिभ्यो** युज् वाच्यः' (वा.3-3-130) इति खलपवादो युच् । 'वा **इत्येके**' इति **प्रक्रियाकौमुदी** । तन्मते **ईषन्मर्षः-दुर्मर्षः-सुमर्षः** इति रूपाण्यपि बोध्यानि ।

A. 'विहितं मयाऽद्य सदसीद**मपमृषित**मच्युतार्चनम् ।' शि. व. 15-46.



[1]मर्षित्वा-मृषित्वा, [2]मर्षणः, इतीमान्यस्य विशेषरूपाणीति ज्ञेयम् । [A]मृष्यमाणः ।

## (1311) "मृष तितिक्षायाम्" (X-चुरादिः-1850. सक. सेट्. उभ.)

**आधृषीयः** । तेन णिज्विकल्पः ।

'—क्षमायां यौ मर्षेन्मर्षेत मर्षयेत् ।' (श्लो. 173) इति **देवः** ।

मर्षकः-र्षिका, मिमर्षयिषकः-षिका, मर्षकः-र्षिका, मिमर्षिषकः-षिका, मरीमृषकः-षिका ; मर्षयिता-त्री, मर्षिता-त्री, मिमर्षयिषिता-त्री, मिमर्षिषिता-त्री, मरीमृषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चर्षति**वत् (554) ज्ञेयानि । णिजभावपक्षे क्विपि-मृट्-मृड्-मृषौ-मृषः, मृषित्वा-मर्षित्वा, इत्यादीनि रूपाण्यस्य धातोरिति विशेषः ।

## (1312) "मृषु सेचने सहने च" (I-भ्वादिः-707. सक. सेट्. पर.)

'—**हिंसाक्लेशदैन्येषु** इत्येके' इति **धा. का.** (1.88) । '—**स्नेहने**' इति **देव**सम्मतः पाठः (श्लो. 173) इति ज्ञायते ।
'मृष्यते मृष्यतीति स्यात्, **स्नेहने शपि मर्षति** ॥' (श्लो. 173) इति **देवः** ।

मर्षकः-र्षिका, मर्षकः-र्षिका, मिमर्षिषकः-षिका, मरीमृषकः-षिका ; मर्षिता-त्री, मर्षयिता-त्री, मिमर्षिषिता-त्री, मरीमृषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**पर्षति**वत् (1054) ज्ञेयानि । युचि-मर्षणः, [3]मृष्टम्-ष्टः-मृष्टवान्, [4]मर्षित्वा-मृष्ट्वा, इमानि रूपाण्यधिकानीति विशेषः ।

---

1. क्त्वायाम्, 'तृषि**मृषि**कृशेः **काश्यपस्य**' (1-2-25) इति कित्त्वविकल्पः । तेन रूपद्वयम् ।
2. नन्द्यादेः (3-1-134) आकृतिगणत्वात्, बाहुलकाद् वा कर्तरि, ण्यन्तात्, शुद्धाद्वा ल्युप्रत्यये रूपमेवम् ।
3. उदित्त्वेन क्त्वायामिड्विकल्पनात्, निष्ठायाम् 'यस्य विभाषा' (7-2-15) इतीण्निषेधः । ष्टुत्वं च ।
4. '**उदितो** वा' (7-2-56) इति क्त्वायामिड्विकल्पः । इट्पक्षे 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधात् गुणः । तेन रूपद्वयम् ।

A. 'तन्**मृष्यमाणा**स्त्वथ शुच्यदङ्गका भृत्याः सुनद्धं बहुरक्तमंशुकम् ।' धा. का. 2.61.

(1313) "**मॄ हिंसायाम्**" (IX-क्र्यादि:-1492. सक. सेट्. पर.)

प्वादि:, ल्वादिश्च ।

'**मृणाति हिंसार्थे प्वादेर्मृङस्तु म्रियते पदम्** ॥' (श्लो. 34) इति **देवः** ।

मारकः-रिका, मारकः-रिका, मुमूर्षकः-मिमरिषकः-मिमरीषकः-षिका, मोमुरकः-रिका ; मरिता-मरीता-त्री, मारयिता-त्री, मुमूर्षिता-मिमरिषिता-मिमरीषिता-त्री, मोमुरिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि जौहोत्यादिक **पिपर्ति**वत् (1055) ज्ञेयानि । [1]मृणन्-मृणती, [2]मूर्णम्-मूर्णः-मूर्णवान्, [3]मूर्णिः, इतीमानि रूपाण्यस्माद् भवन्ति ।

(1314) "**मेङ् प्रणिदाने**" (I-भ्वादि:-961. सक. अनि. आत्म.)

'मिमीते मायते माने, माति तत्रैव शब्लुकि ।

**मयते प्रणिदानेऽर्थे**............................॥' (श्लो. 9) इति **देवः** ।

"**प्रणिदानम्**=विनिमयः । 'प्रत्यर्पणम्' इत्य**परे** ।" इति **मा. धा. वृत्तिः** । "–**प्रतिदाने**-इति **काशकृत्स्नः** । तथैव **कातन्त्रे**, **चान्द्रे** च । 'प्रणिधाने' इति पाठान्तरम् ।" इति **क्षी. टीका** ।

मायकः-यिका, मापकः-पिका, मित्सकः-त्सिका, मेमीयकः-यिका ; माता-मात्री, माययिता-त्री, मित्सिता--त्री, मेमीयिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि आदादिक**माति**वत् (1240) ज्ञेयानि । शानचि-[4]मयमानः-प्रणिमयमानः, [5]अपमित्य,[A] अपमाय वा याचते । याचित्वा अपमयते ।

---

1. शतरि क्र्यादित्वात् श्नाप्रत्यये, '**प्वादीनां** ह्रस्वः' (7-3-80) इति ह्रस्वे, '**श्नाभ्यस्तयोरातः**' (6-4-112) इत्याकारलोपे णत्वे च रूपमेवम् ।
2. धातोरुत्वे रपरत्वे '**ल्वादिभ्यः**' (8-2-44) इति निष्ठानत्वे, दीर्घे णत्वे च रूपमेवम् ।
3. '**ॠल्वादिभ्यः** क्तिन् निष्ठावद् वाच्यः' (वा. 8-2-44) इति क्तिनस्तकारस्य नत्वे उत्वादिके च रूपमेवम् ।
4. शानचि, शपि अयादेशे च रूपमेवम् । '—अशिति' (6-1-45) इत्युक्तत्वात् आत्वं नेति ज्ञेयम् । **प्रणिमयमानः** इत्यत्र 'नेर्गदनदपतपदघु**मा**—' (8-4-17) इत्यादिना नेर्णत्वम् ।
5. अपपूर्वकादस्मात्, '**उदीचां माङो** व्यतीहारे' (3-4-19) इति क्त्वाप्रत्यये, तस्य सामासिके ल्यपि, '**मयते**रिदन्यतरस्याम्' (6-4-70) इति इकारेऽन्तादेशे च **अपमित्य** इति रूपम् । पक्षे **अपमाय** इति च । अपूर्वकालार्थं वचनमिदम् । अत्र (3-4-19) '**उदीचाम्**' इत्युक्तत्वात्, **प्राचां** मते तु 'याचित्वाऽपमयते' इत्यपि प्रयोगः साधुः । '**उदीचाम्**—' (3-4-19) इति सूत्रे '**माङ्**' इति, **मेङः** कृतात्वस्य निर्देश इति 'दाधा घ्वदाप्' (1-1-20) सूत्रे **भाष्ये** स्पष्टम् ।

A. '**अपमित्य** तपोवित्तैरस्या भागं भगीरथः ।' सुभद्राहरणे ।



[1]धान्यमायः, इतीमानि रूपाण्यस्माद् भवन्तीति ज्ञेयम् ।

(1315) "**मेदृ मेधाहिंसनयोः**" (I-भ्वादि:-869. सक. सेट्. उभ.)

'**ऋदितो मेदते मेदेन्मेधाहिंसनयोर्द्वयोः** ॥' (श्लो. 104) इति **देवः** । **क्षीरस्वामी** 'मेथृ—' इति पपाठ ।

मेदकः-दिका, मेदकः-दिका, मिमेदिषकः-षिका, मेमेदकः-दिका ; मेदिता-त्री, मेदयिता-त्री, मिमेदिषिता-त्री, मेमेदिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**केपति**वत् (261) ज्ञेयानि ।

(1316) "**मेधृ सङ्गमे च**" (I-भ्वादि:-870. सक. सेट्. उभ.)

अत्र **चकारात्** धातुपाठे पूर्वधातुगतं **मेधाहिंसन**रूपमर्थद्वयं विवक्षितम् । **भोजराज**स्तु 'यतोऽङ्विधौ **मेधा**शब्दसाधनार्थं मिधृधातोर्गुणं विधत्ते' तेन ज्ञायते—नास्यायं धातुः संमत इति । **कौमारा**श्चात्रैवानुकूलाः । स्पष्टमिदं प्रकृतस्थले **मा. धा. वृत्तौ** ।

मेधकः-धिका, मेधकः-धिका, मिमेधिषकः-षिका, मेमेधकः-धिका ; मेधिता-त्री, मेधयिता-त्री, मिमेधिषिता-त्री, मेमेधिता-त्री ; इत्यादीनि समस्तान्यपि रूपाणि भौवादिक**केपति**वत् (261) ज्ञेयानि । [2]**मेधा**, [3]**गृहमेधी**, [4]अश्वमेधः, [5]मेधिः, [6]मेध्यः-(पशुः), [A]प्रमेधितः इतीमानि धातोरस्य विशेषरूपाणीति ज्ञेयम् ।

---

1. कर्मणि उपपदे आदन्तलक्षणं कप्रत्ययं बाधित्वा, 'ह्वावाम**श्च**' (3-2-2) इत्यण् । आत्वे कृते, '**आतो** युक् चिण्कृतोः' (7-3-33) इति युगागमः ।
2. 'गुरोश्च हलः' (3-3-103) इति स्त्रियां भावादौ अकारः । **मेधा**=बुद्धिः ।
3. गृहान्=दारान् मेधति=सङ्गच्छत इति **गृहमेधी**=गृहस्थः । 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिप्रत्ययः ।
4. अश्वं मेधयति=हिंसयतीत्यर्थे ण्यन्तात्, अन्तर्भावितण्यन्तात् शुद्धाद्वा धातोः 'कर्मण्यण्' (3-2-1) इत्यण्प्रत्यये रूपमेवम् । **अश्वमेधः**=तन्नामको यज्ञविशेषः । एवमेव **पुरुषमेधः** इत्यत्रापि ज्ञेयम् । **पितृमेधः** इत्यत्र तु पितृभिः सह मेधः (मेधति=संगच्छते इत्यर्थे) इति पचाद्यजन्तेन समासो ज्ञेयः ।
5. 'इक् कृष्यादिभ्यः' (वा. 3-3-108) इति भावे स्त्रियाम् इक्प्रत्यये रूपम् । **मेधिः**=पशूनां बन्धविशेषे साधनीभूतो रज्जुविशेषः ।
6. कर्मणि ण्यत्प्रत्यये रूपमेवम् । **मेध्यः**=यज्ञार्ह इत्यर्थः ।

A. 'नित्यं प्रमोहामिदितोरुमेदैः **प्रमेधिता** सद्भिरनिद्यमानैः ।' धा. का. 2.26.

(1317) **“ मेपृ गतौ ”** (I-भ्वादिः-371. सक. सेट्. आत्म.)

मेपकः-पिका, मेपकः-पिका, मिमेपिषकः-षिका, मेमेपकः-पिका ; मेपिता-त्री, मेपयिता-त्री, मिमेपिषिता-त्री, मेमेपिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**केपति**वत् (261) ज्ञेयानि ।

(1318) **“ मेवृ सेवने ”** (I-भ्वादिः-505. सक. सेट्. आत्म.)

**मा. धा. वृत्तौ** तु **मैत्रेय**सम्मतपाठत्वेनायमुपात्तः ।

मेवकः-विका, मेवकः-विका, मिमेविषकः-षिका, मेमेवकः-विका ; मेविता-त्री, मेवयिता-त्री, मिमेविषिता-त्री, मेमेविता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**क्षेवति**वत् (320) ज्ञेयानि। [1]मेवितम्-तः-तवान्, मेवमानः, मेवित्वा, इतीमान्यस्य विशेषरूपाणीति ज्ञेयम् । [A]मेव्यम् ।

(1319) **“ मोक्ष असने ”** (X-चुरादिः-सक. सेट्. उभ.)

**सिद्धान्तकौमुद्यादिषु** धातुरयं नोपात्तः । **‘—सहने’** इति पाठान्तरम् । मोक्षकः-क्षिका, मुमोक्षयिषकः-षिका ; मोक्षयिता-त्री, मुमोक्षयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**पक्षयति**वत् (956) ज्ञेयानि। युचि—[B]मोक्षणा ।

(1320) **“ म्ना अभ्यासे ”** (I-भ्वादिः-929. अक. अनि. पर.)

प्रायेणायमाङ्पूर्वक एव प्रयुज्यते । **‘अभ्यासः**=पारम्पर्येण वृत्तिः ।’ इति **क्षीरस्वामी** ।

म्नायकः-यिका, म्नापकः-पिका, मिम्नासकः-सिका, माम्नायकः-यिका ; म्नाता-त्री ; म्नापयिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि प्रातिस्विकरूपाणि

---

1. अस्य धातोः सेट्त्वात् निष्ठायामेवं रूपम् ।

A. ‘सेव्यं सतां शङ्करलेव्यमब्जभूर्गेव्यं सुरैः पेव्यममेव्यमुन्मदैः ।’ धा. का. 1-65.

B. ‘उत्तंसभूषण**विमोक्षणया**ऽर्हिताभौ ।’ धा. का. 3.40.



विना भौवादिक**धमति**वत् (924) ज्ञेयानि । [1]आमनन्-ती, [2]व्यत्यामनमानः, [3]निम्नम्, [4]द्युम्नम्, [5]सुम्नम्, [6]आम्नायः इतीमानि रूपाण्यस्येति विशेषः ।

(1321) **“ म्रक्ष म्लेच्छने ”** (X-चुरादिः-1662. अक. सेट्. उभ.)

**‘म्लेच्छनम्**=अपशब्दनम् ।’ इति **धातुवृत्तिः** । ‘म्रक्ष रोषे’ इति **चान्द्र**सम्मतः पाठ इति **क्षीरतरङ्गिणी**तो ज्ञायते ।

‘म्रक्ष **च्छेदने**’ इत्यपि **क्वचित्**पठ्यते—इति **मा. धा. वृत्तिः** ।

**‘म्लेच्छने म्रक्षयेत्**, [7]म्रक्षेत् संघाते—॥’ (श्लो. 171) इति **देवः** ।

म्रक्षकः-क्षिका, मिम्रक्षयिषकः-षिका ; म्रक्षयिता-त्री, मिम्रक्षयिषिता-त्री ; इत्यादीनि समस्तान्यपि रूपाणि चौरादिक**पक्षयति**वत् (956) ज्ञेयानि । [8]अनयम्रक्[B]-म्रक्षौ-म्रक्षः ।

---

1. शतरि, शपि ‘पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठ**मन**—’ (7-3-78) इत्यादिनाऽस्य **मना**देशे पररूपे च रूपमेवम् ।
2. ‘कर्तरि कर्मव्यतीहारे’ (1-3-14) इति शानचि, शपि **मनादेशे** रूपमेवम् ।
3. नीचभावमभ्यस्तीति **निम्नम्** । ‘सुपि—’ (3-2-4) इति योगविभागात्, ‘आतश्चोपसर्गे’ (3-1-136) इति वा कप्रत्यये, ‘**आतो** लोप इटि च’(6-4 64) इत्याकारलोपे च रूपमेवम् । अत्र **धातुवृत्तौ** तु—“—‘**आतो**ऽनुपसर्गे कः’ (3-2-3) इति वा कः । नेर्नीचभाववचनत्वेन मन्य (न ?) त्यर्थस्याविशेषणान्न तं प्रतीहोपसर्गत्वम् ।” इत्युक्तम् । तदिहावधेयम् ।
4. दिने आम्नायते इति **द्युम्नम्** । द्युशब्दो दिनवचनः । अत्रापि कप्रत्यये रूपम् ।
5. सुतरामाम्नायते इति **सुम्नम्**=सुखम् । ‘घञर्थे कविधानम्—’ (वा. 3-3-58) इति घञर्थे कप्रत्यये रूपम् ।
6. आ=समन्तात् म्नायते इति **आम्नायः**=वेदः । घञि ‘**आतो** युक्—’ (7-3-33) इति युगागमे च रूपमेवम् ।
7. **देव**श्लोकदर्शनेनास्य भ्वादिषु ‘**म्रक्ष संघाते**’ इति पाठः संमत इति ज्ञायते । परं तु सर्वत्र धातुपाठेषु भ्वादिष्वस्य **मृक्ष** इत्येव पाठ उपलभ्यते । **मा. धा. वृत्तौ** तु चुरादिषु **म्रक्ष**धातुप्रस्तावे ‘**म्रक्षति** इति संघाते शपि ।’ इत्युक्तम् । **धातुवृत्ता**वेव भ्वादिषु **म्रक्ष** इत्येव पाठो दृश्यते । ईदृशेषु स्थलेषु कतमः पाठः सर्वसम्मत इति दुर्निरूपं भवति ।
8. क्विपि संयोगान्तलोपे रूपमेवम् ।

A. ‘सोऽजुहोत् कृष्णवर्त्मानिम् **आमनन्** मन्त्रमुत्तमम् ॥’ भ. का. 17.30.

B. ‘धर्मेतरम्यग् **अनयम्रगयं** हि राजा ।’ धा. का. 3-30.

(1322) "**म्रद मर्दने**" (I-भ्वादिः-767. सक. सेट्. आत्म.)

**घटादिः, षिच्च** ।

'**मृद—**' इति **बालमनोरमा**पाठः । स च 'अत् स्मृदृत्वरप्रथ**म्रद—**' (7-4-95) इति सूत्रे **म्रद** इत्यनेनास्यैव ग्रहणस्य सर्वैरप्युक्तत्वात् चिन्त्यः ।

म्रादकः-दिका, म्रदकः-दिका, मिम्रदिषकः-षिका, माम्रदकः-दिका ;
म्रदिता-त्री, म्रादयिता-त्री, मिम्रदिषिता-त्री, माम्रदिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**क्नपति**वत् (272) ज्ञेयानि । [1]मृदुः ।

(1323) "**म्रुचु गत्यर्थः**" (I-भ्वादिः-195. सक. सेट्. पर.)

म्रोचकः-चिका, म्रोचकः-चिका, मुम्रोचिषकः-मुम्रुचिषकः-षिका, मोम्रुचकः-चिका ;
म्रोचिता-त्री, म्रोचयिता त्री, मुम्रोचिषिता-मुम्रुचिषिता-त्री, मोम्रुचिता-त्री ;
इत्यादिकानि समस्तान्यपि रूपाणि भौवादिक**ग्रोचति**वत् (443) ज्ञेयानि । [2]म्रुक्तः-म्रुक्तवान् ।

(1324) "**म्रुन्चु गत्यर्थः**" (I-भ्वादिः-193. सक. सेट्. पर.)

अयं नोपधः, सन्धिवशाञ्ञकार इति ज्ञेयम् ।

म्रुञ्चकः-ञ्चिका, म्रुञ्चकः-ञ्चिका, मुम्रुञ्चिषकः-षिका, मोम्रुचकः-चिका ;
म्रुञ्चिता-त्री, म्रुञ्चयिता-त्री, मुम्रुञ्चिषिता-त्री, मोम्रुचिता-त्री ;
इत्यादिकानि समस्तान्यपि रूपाणि भौवादिक**ग्लुञ्चति**वत् (447) ज्ञेयानि । [A]म्रुक्तम् ।

---

1. '**प्रथिम्रदि—**' (द. उ. 1.113) इति कुप्रत्ययः, सम्प्रसारणं च । म्रदते ऽसाविति **मृदुः** = अकठिनः ।

2. उदित्त्वेन क्त्वायामिड्विकल्पनात् निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्निषेधः । **माधवधातुवृत्तौ** तु "भावादिकर्मणोः '**उदुपधात्—**' (1-2-21) इति कित्त्वविकल्पनात् '**म्रुचित**मनेन **म्रोचित**मनेन' इत्यादि ।" इत्युक्तम् । अत्र, 'निषेधाश्च बलीयांसः' (परि. 122) इति न्यायेन, पुरस्तादिण्निषेधकाण्डारम्भसामर्थ्यात्, 'उदुपधात्—' (1-2-21) इति सूत्रे उदिद्भिन्नस्योदुपधस्य धातोरेव सर्वैरपि व्याख्यातृभिः उदाहरणप्रत्युदाहरणसमये उपादानाच्च, अत्रापि इण्निषेध एव भावादिकर्मणोः निष्ठायां प्रामाणिक इति प्रतिभाति ।

A. 'आवक्रचञ्चूपुटतश्चदारवत्वक्तत्वगम्रुक्तशिखैर्लताद्रुमैः ।' धा. का. 1-26.



(1325) "**म्रेट्ट उन्मादे**" (I-भ्वादिः-अक. सेट्. पर.)

**सिद्धान्तकौमुद्या**द्यनुपात्तत्वेऽपि प्राचीनैः **मैत्रेय-क्षीरस्वामि-सायण-**प्रभृतिभिरुपात्तत्वादयं धातुरस्माभिरप्यत्र विलिख्यते । '**मेट्ट—**' इति **दुर्ग-नारायणभट्टादि**संमतः पाठः ।

म्रेटकः-टिका, म्रेटकः-टिका, मिम्रेटिषकः-षिका, मेम्रेटकः-टिका ;
म्रेटिता-त्री, म्रेटयिता-त्री, मिम्रेटिषिता-त्री, मेम्रेटिता-त्री ;
इत्यादिकानि सर्वाणि रूपाणि भौवादिक**केपति**वत् (261) ज्ञेयानि ।

(1326) "**म्रेड्ट उन्मादे**" (I-भ्वादिः-293. अक. सेट्. पर.)

'मेड्ट—' इति **काशकृत्स्न**सम्मतः पाठः ।

म्रेडकः-डिका, म्रेडकः-डिका, मिम्रेडिषकः-षिका, मेम्रेडकः-डिका ;
म्रेडिता-त्री, म्रेडयिता-त्री, मिम्रेडिषिता-त्री, मेम्रेडिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**केपति**वत् (261) ज्ञेयानि । [A]आम्रेडितम् ।

(1327) "**म्लुचु गत्यर्थः**" (I-भ्वादिः-196. सक. सेट्. पर.)

म्लोचकः-चिका, म्लोचकः-चिका, मुम्लोचिषकः-मुम्लुचिषकः-षिका, मोम्लुचकः-चिका ; म्लोचिता-त्री, म्लोचयिता-त्री, मुम्लोचिषिता-मुम्लुचिषिता-त्री, मोम्लुचिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**ग्रोचति**वत् (443) ज्ञेयानि । [1]मलिम्लुचः ।

(1328) "**म्लुन्चु गत्यर्थः**" (I-भ्वादिः-194. सक. सेट्. पर.)

म्लुञ्चकः-ञ्चिका, म्लुञ्चकः-ञ्चिका, मुम्लुञ्चिषकः-षिका, मोम्लुचकः-चिका ;
म्लुञ्चिता-त्री, म्लुञ्चयिता-त्री, मुम्लुञ्चिषिता-त्री, मोम्लुचिता-त्री ; इत्यादीनि

---

1. 'कप्रकरणे मूलविभुजादिभ्यः—' (वा. 3-2-5) इति कप्रत्यये रूपमेवम् । '**मलिम्लुच**' शब्दव्युत्पादनाऽवसरे **अमरसुधायां** '**म्लुच स्तेये**' (भ्वा. से. पर.) इति कश्चन धातुः उपात्तः । परन्तु धातुपाठकोशेषु कुत्रापि स नोपलभ्यते ।

A. 'प्रशौटदुल्लागणयौटितान्तिकान् मेटद्वृषा**म्रेडित**घोषमेदुरान् ।' धा. का. 1-39.

सर्वाण्यपि रूपाणि भौवादिकग्लुञ्चतिवत् (447) ज्ञेयानि । कर्तरि क्तप्रत्यये [1]म्लुक्तः[A] इति ।

(1329) "**म्लेच्छ अव्यक्ते शब्दे**" (I-भ्वादिः-205. अक. सेट्. पर.)

'**अव्यक्तायां वाचि**' इति **क्षीरस्वामी** ।

[2]म्लेच्छकः-च्छिका, म्लेच्छकः-च्छिका, मिम्लेच्छिषकः-षिका, मेम्लेच्छकः-च्छिका ; म्लेच्छिता-त्री, म्लेच्छयिता-त्री, मिम्लेच्छिषिता-त्री, मेम्लेच्छिता-त्री ; इत्यादीनि समस्तान्यपि रूपाणि दैवादिकक्लिश्यतिवत् (287) ज्ञेयानि । [3]म्लिष्टम्, शतरि-म्लेच्छन्-न्ती, क्विपि—[4]म्लेट्-म्लेड्-म्लेडौ-म्लेडः, इति विशेषः । [5]म्लेच्छितवै ।

(1330) "**म्लेच्छ अव्यक्तायां वाचि**"

(X-चुरादिः-1663. अक. सेट्. उभ.)

---

1. उदित्त्वेन क्त्वायामिड्विकल्पनात् निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्निषेधः । उपधानकारलोपः ।
2. धातुरयमुपदेशे **म्लेछ** इत्येव पठ्यते । पश्चात्, 'दीर्घात्' (6-1-75) इति तुक् । तुकश्चुत्वेन चकारे सर्वत्र **म्लेच्छ** इति श्रूयते ।
3. 'क्षुब्धस्वान्तध्वान्तलग्न**म्लिष्ट**विरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ता**विस्पष्ट**स्वरानायासभृशेषु' (7-2-18) इत्यादिना यथासम्भवमस्य निष्ठायाम्, अविस्पष्टार्थे इडभावो निपात्यते । षत्व-ष्टुत्वादिकेषु **म्लिष्टम्** इति भवति । अन्यत्र **म्लेच्छितम्** इत्यपि साधुः ।
4. क्विपि, 'च्छ्वोः शूडनुनासिके च' (6-4-19) इति सतुक्कस्य छकारस्य शकारे, षत्वे, जश्त्वचर्त्वयोश्च रूपमेवम् ।
   "**वृत्तिप्रदीपे तु** वितुक्कस्य शादेश उक्तः, तुगभावस्तु 'अकृतव्यूहाः **पाणिनीयाः** (परि 57...) कृतमपि शास्त्रं निवर्तयन्तीति ।" इति **मा. धा. वृत्तौ** अत्र पक्षभेदः प्रोक्त इहावधेयः ।
5. 'कृत्यार्थे तवैकेन्केन्यत्वनः' (3-4-14) इति च्छन्दसि विषये धातोरस्मात् तवैप्रत्यये इडागमे च रूपमेवम् । तथा च किञ्चित् श्रुतिवाक्यमुपात्तं **महाभाष्ये** (1-1-1) "तस्माद् ब्राह्मणेन न **म्लेच्छितवै** नापभाषितवै, **म्लेच्छो** ह वा एष यदपशब्दः ।" इति ।

A. '**अम्लुक्त**रश्मौ शशिना निमुम्रुचे निमुम्लुचेऽर्केण च यत्र सन्ततम् ॥' धा.का. 1.26.



'इहाव्यक्तवागपशब्दनम् ।' इति **माधवः** । **चान्द्रास्तु** धातुममुमत्र (चुरादौ) न पठन्तीति **क्षीरतरङ्गिण्यां** स्पष्टम् ।

म्लेच्छकः-च्छिका, मिम्लेच्छयिषकः-षिका ; म्लेच्छयिता-त्री, मिम्लेच्छयिषिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चित्रयति**वत्(525)ज्ञेयानि ।

(1331) "**म्लेट् उन्मादे**" (I-भ्वादिः-292. अक. सेट्. पर.)

'**म्लेड्**—' इति **कुत्रचिद्** दृष्टः पाठः । **धातुवृत्तौ**—'म्रेट् म्रेड् **म्लेट्** उन्मादे' इत्युपादाय, '**म्लेडति**' इत्युदाहृतम् । **धातुवृत्तावेव** प्राचीन-मुद्रणे '**म्रेट्**—' इति नोपात्तम् ।

म्लेटकः-टिका, म्लेटकः-टिका, मिम्लेटिषकः-षिका, मेम्लेटकः-टिका ; म्लेटिता-त्री, म्लेटयिता-त्री, मिम्लेटिषिता-त्री, मेम्लेटिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**गेपति**वत् (429) ज्ञेयानि । [A]म्लेटकः ।

(1332) "**म्लेवृ सेवने**" (I-भ्वादिः-506. सक. सेट्. आत्म.)

म्लेवकः-विका, म्लेवकः-विका, मिम्लेविषकः-षिका, मेम्लेवकः-विका ; म्लेविता-त्री, म्लेवयिता-त्री, मिम्लेविषिता-त्री, मेम्लेविता-त्री ; इत्यादिकानि सर्वाण्यपि रूपाणि भौवादिकक्लेवतिवत् (291) ज्ञेयानि । [B]म्लेवितम् ।

(1333) "**म्लै हर्षक्षये**" (I-भ्वादिः-904 अक. अनि. पर.)

"—'**गात्रविनामे**' **विनामः**=कान्तिक्षयः ।" इति **क्षीरस्वामी** ।

'**हर्षक्षयः**=धातुक्षयः ।' इति **माधवः** ।

म्लायकः-यिका, म्लापकः-पिका, मिम्लासकः-सिका, माम्लायकः-यिका ; म्लाता-त्री, म्लापयिता-त्री, मिम्लासिता-त्री, माम्लायिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**ग्लायति**वत् (452) ज्ञेयानि । अस्य मित्संज्ञा-

---

A. '**अम्लेटकै**श्चाकटुचाटुभाषितैरटैः पटत्सम्रटिताञ्जनोत्करैः ॥' धा. का. 1-39.

B. '**प्रम्लेवितं** रेवितवत्समण्डलीं मव्यद्भिराभीरजनैरसूर्क्ष्यकैः ॥' धा. का. 1-65.

विधानाभावात् मित्संज्ञाकार्यं नेति विशेषः। तेन ण्यन्ते म्लायकः-यिका, इत्यादिकानि एकविधान्येव रूपाणि। [1]म्लानिः।

## (1334) "यक्ष पूजायाम्" (X-चुरादिः-1693. सक. सेट्. आत्म.)

**आकुस्मीयः।** [अ]

यक्षकः-क्षिका, यियक्षयिषकः-षिका; यक्षयिता-त्री, यियक्षयिषिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**पक्षयति**वत् (956) बोध्यानि। [2]यक्षः, यक्ष्मा[3], [A]यक्ष्यम्, इमानि रूपाण्यधिकानीति विशेषः।

## (1335) "यज देवपूजासङ्गतिकरणदानेषु"

(I-भ्वादिः-1002. सक. अनि. उभ.)

याजकः-जिका, याजकः-जिका, [4]यियक्षकः-क्षिका, यायजकः-जिका;
[5]यष्टा-यष्ट्री, याजयिता-त्री, यियक्षिता-त्री, यायजिता-त्री;
यजन्-न्ती, याजयन्-न्ती, यियक्षन्-न्ती; —
यक्ष्यन्-न्ती-ती, याजयिष्यन्-न्ती-ती, यियक्षिष्यन्-न्ती-ती; —
यजमानः, याजयमानः, [B]यियक्षमाणः, यायज्यमानः;
यक्ष्यमाणः, याजयिष्यमाणः, यियक्षिष्यमाणः, यायजिष्यमाणः;

---

1. बाहुलकात् क्तिनस्तकारस्य नकारे रूपमेवम्।
2. 'अकर्तरि च कारके संज्ञायाम्' (3-3-19) इति कर्मणि घञ्प्रत्यये रूपमेवम्। यक्ष्यतेऽसौ इति **यक्षः**।
3. 'अर्तिस्तु......' (द. उ. 7-26.) इति मन्प्रत्यये रूपमेवम्। **यक्ष्मा** = व्याधिः।
4. सन्नन्ते सर्वत्र, 'व्रश्चभ्रस्जसृजमृज**यज**राजभ्राजच्छशां षः' (8-2-36) इति षत्वे, 'षढोः कः सि' (8-2-41) इति ककारे, षत्वे च रूपनिष्पत्तिरिति ज्ञेयम्।
5. तृजादिषु, 'व्रश्च—' (8-2-36) इति षत्वे, ष्टुत्वे च रूपम्। एवं तव्यदादिष्वपि प्रक्रियोह्या।

A. '........भ्रूणस्य शाठ्यजन**यक्ष्यम**वेक्ष्य गात्रम्।' धा. का. 3-35.
B. '**यियक्षमाणेनाहूतः** पार्थेनाथ द्विषन्मुरम्।' शि. व. 2. 1.
[अ] "अत्रा**त्रेयः**—'**केचित् रामायणे यक्ष**शब्दस्य भक्षणार्थत्वेन व्युत्पादनादन्तस्थादिमाहुः; तच्चिन्त्यम्।' इत्युक्तवान्।' **रामायणोक्तिस्तु** 'यक्ष पूजायाम्' इत्यस्यानेकार्थत्वाश्रयणेन निर्वाह्या।" इति 'जक्ष—' धातौ (अदादिषु) **माधवो**क्तमिहावधेयम्।



[1]देवेट्-देवेड्-देवेजौ-देवेजः; — —
[2]इष्टम्-इष्टः-इष्टवान्-इष्टी, याजितः, यियक्षितः, यायजितः-तवान्;
यजः, [3]सोमयाजी-हविर्याजी[A], अग्निष्टोमयाजी, [4]यज्वा,[B] [5]यजमानः,
[6]ऋत्विक्, 'त्वं यज्ञे वरुणस्य [7]अवया असि।' [8]उपयट्, [9]साधुयाजी,
याजः, यियक्षुः, [10]यायजूकः,[C] यायजः;

---

1. देवान् यजतीति **देवेट्**। कर्मण्युपपदे, 'क्विप् च' (3-2-76) इति क्विपि 'वचिस्वपि**यजादीनां** किति' (6-1-15) इति यकारस्य सम्प्रसारणे, 'सम्प्रसारणाच्च' (6-1-108) इति पूर्वरूपे, षत्वे, जश्त्वे च रूपमेवम्।
2. निष्ठायाम्, **यजादि**त्वेन सम्प्रसारणे पूर्वरूपे, षत्वे ष्टुत्वे च रूपमेवम्। 'इष्टादिभ्यश्च' (5-2-88) इतीन्प्रत्यये **इष्टी** इति रूपम्। एवमेव क्त्वाप्रभृतिष्वपि प्रक्रिया ज्ञेया।
3. 'भूते' (3-2-84) इत्यधिकारे, 'करणे **यजः**' (3-2-85) इति णिनिप्रत्यये रूपमेवम्। सोमेन इष्टवान् **सोमयाजी**। एवमेव **अग्निष्टोमयाजी** इत्यादिसिद्धिरूह्या।
4. भूतार्थे, 'सुयजोर्ङ्वनिप्' (3-2-103) इति ङ्वनिप्प्रत्यये प्रथमैकवचने उपधादीर्घे नकारलोपे च **यज्वा** इति रूपम्।
5. तच्छीलादिषु कर्तृषु 'पूङ्**यजोः** शानन्' (3-2-128) इति शानन्प्रत्ययः। शित्वात् शपि, 'आने मुक्' (7-2-82) इति मुगागमे **यजमानः** इति रूपम्। यस्त्वसकृत् यागादिकं करोति स एवमुच्यते।
6. ऋतौ यजते, ऋतुं यजते, ऋतुप्रयुक्तो वा यजतीत्यर्थे धातोरस्मात् ऋतुशब्द उपपदे, '**ऋत्विक्**—' (3-2-59) इत्यादिना क्विन्। सम्प्रसारणे, पूर्वरूपे च कृते, निपातनात्, व्रश्चादिषत्वापवादतया 'क्विन्प्रत्ययस्य कुः' (8-2-62) इति कुत्वे च **ऋत्विक्** इति सिद्ध्यति।
7. '**अवे यजः**' (3-2-72) इति मन्त्रे ण्विन्प्रत्यये, उपधावृद्धौ '**अवयाः** श्वेतवाः पुरोडाश्च' (8-2-67) इति निपातनाद्रुत्वे च रूपमेवम्। छन्दस्येवायं प्रयोगः।
8. 'विजुपे छन्दसि (3-2-73) इति छन्दसि विषये उपोपपदे धातोरस्य विच्प्रत्यये षत्वे जश्त्वे च रूपमेवम्।
9. 'साधुकारिण्युपसंख्यानम्' (वा. 3-2-78) इति णिनिप्रत्यये रूपमेवम्।
10. '**यज**जपदशां यङः' (3-2-166) इति यङन्तादूकप्रत्यये, 'दीर्घोऽकितः' (7-4-83) इत्यभ्यासदीर्घे च रूपमेवम्।

A. 'मृषाऽसि त्वं **हविर्याजी** राघव च्छद्मतापसः।' भ. का. 6-129.
B. '**यज्वा**नश्च ससुत्वानो यानगोपीन्मखेषु सः॥' भ. का. 5-37.
C. 'तं **यायजूकाः** सह भिक्षुमुख्यैस्तपःकृशाः शान्त्युदकुम्भहस्ताः।' भ. का. 2-20.

यष्टव्यम्, याजयितव्यम्, यियक्षितव्यम्, यायजितव्यम्;
यजनीयम्, याजनीयम्, यियक्षणीयम्, यायजनीयम्;
[1]याज्यम्, [2]देवयज्या, [3]याज्या, याज्यम्, यियक्ष्यम्, यायज्यम्;
ईषद्यजः-दुर्यजः-सुयजः; — —
[4]इज्यमानः, याज्यमानः, यियक्ष्यमाणः, यायज्यमानः;
[5]यागः-अनुयागः-प्रयागः, [6]प्रयाजः-अनुयाजः, [7]उपांशुयाजः-पत्नीसंयाजः-ऋतुयाजः-उपयाजः, [8]यज्ञः, याजः, यियक्षः, यायजः;
यष्टुम्, [9]यष्टुं, याजको [वा याति], याजयितुम्, यियक्षितुम्, यायजितुम्;

---

1. ण्यति, '**यज**याचरुच—' (7-3-66) इति कुत्वनिषेधः।
2. देवशब्द उपपदे छन्दसि विषये कर्मणि यत्प्रत्यये रूपमेवम्। निपातनात् स्त्रीलिङ्गत्वम्।
3. यजन्त्यनेनेति **याज्या** = ऋक्। बाहुलकात् करणे ण्यत्।
4. कर्मणि, यगन्ताच्छानचि सम्प्रसारणे पूर्वरूपे च रूपम्।
5. 'हलश्च' (3-3-121) इति संज्ञायां घञि, 'चजोः कु घिण्ण्यतोः' (7-3-52) इति कुत्वे च रूपमेवम्। **अनुयागः**=भोजनम्, उपसर्गवशाद्धातोरर्थान्तरे वृत्तिः। **प्रयागः**=क्षेत्रविशेषः। अत्र सङ्गतिकरणं धातोरर्थः। नदीत्रयसङ्गतिकरणं ह्यत्र देशे वदन्ति।
6. घञि, '**प्रयाजानुयाजौ** यज्ञाङ्गे' (7-3-62) इति निपातनात् यज्ञाङ्गविषये कुत्वं न। पञ्च **प्रयाजाः**। त्रयोऽ**नुयाजाः**। 'उपसर्गस्य घञि—' (6-3-122) इति दीर्घे **अनूयाज** इत्यपि भवति।
7. "**प्रयाजानुयाज**ग्रहणं प्रदर्शनार्थम्— अन्यत्राप्येवंप्रकारे कुत्वं न भवति। 'एकादश **उपयाजाः**', '**उपांशुयाज**मन्तरा यजति', 'अष्टौ **पत्नीसंयाजा** भवन्ति' '**ऋतुयाजै**श्चरन्ति'—इत्येवमादि सिद्धं भवति।' इति **काशिका**-(7-3-62) वाक्यमिहावधेयम्। तेनैतेषां साधुत्वं बोध्यम्। 'जाघन्या **पत्नीः संयाजयन्ति**' (शतपथब्राह्मणे-3-7-6-1) इति श्रौतनिर्वचनपर्यालोचनायां तु पत्नीः संयाजयन्तीति **पत्नीसंयाजः** इति ण्यन्तात् 'कर्मण्यण्' (3-2-1) इत्यणेवात्रेति न कुत्वप्रसक्तिः। अतोऽत्रेतरेषां विषये कुत्वाभावस्योपपत्तिकल्पनेऽपि **पत्नीसंयाज**शब्दविषये नोपपत्तिकल्पनपरिश्रमः कार्यः इति ज्ञेयम्।
8. भावे, '**यज**याच—' (3-3-90) इत्यादिना नङ्प्रत्यये, जकारस्य श्चुत्वे च रूपमेवम्।
9. 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (3-3-10) इति क्रियार्थक्रियायां तुमुन्, ण्वुल् च भवतः। **यष्टुं याति**—यागाय यातीत्यर्थः।



[1]इष्टिः- [2]इज्या[A], [3]यष्टिः, याजना, यियक्षा, यायजा;
यजनम्, याजनम्, यियक्षणम्, यायजनम्;
इष्ट्वा, याजयित्वा, यियक्षित्वा, यायजित्वा;
अन्विज्य, प्रयाज्य, प्रयियक्ष्य, प्रयायज्य;
याजम् २, इष्ट्वा २, } याजम् २, याजयित्वा २, } यियक्षम् २, यियक्षित्वा २, } यायजम् २; यायजित्वा २; }
[4]यजेणुः; [5]यज्युः, [6]यजत्रम्, [7]यजुः।

## (1336) "यत निकारोपस्कारयोः"

(X-चुरादिः-1736. सक. सेट्. उभ.) [अ]

'—खेदे च' इति **क. क. द्रुमे**।

---

1. '**श्रुयजी**षिस्तुभ्यः—' (वा. 3-3-95) इति करणे क्तिन्प्रत्यये सम्प्रसारणादिके च रूपम्।
2. 'व्रज**यजो**र्भावे क्यप्' (3-3-98) इति स्त्रियां भावे क्यपि, कित्त्वेन सम्प्रसारणादिकेषु चैवं रूपम्।
3. बाहुलकादौणादिके [द. उ. 1-74] तिप्रत्यये रूपमेवमिति **क्षीरतरङ्गिणी**।
4. बाहुलकादौणादिके [द. उ. 1-133] एणुप्रत्यये रूपम्। **यजेणुः**=याजकः, ऋत्विक्।
5. '**यजि**मनि—' [द. उ. 1-134] इति युच्प्रत्यये, प्रत्ययस्याननुनासिकत्वेनानादेशाभावे च रूपमेवम्। **यज्युः**=अध्वर्युः।
6. 'अमिनक्षि**यजि**—' [द. उ. 8-56] इत्यत्रन्प्रत्ययः। इज्यन्तेऽस्मिन् देवता इति **यजत्रम्**=यज्ञस्थानम्। अग्निहोत्रमिति **केचित्**।
7. 'अर्त्तिपृवपि**यजि**—' [द. उ. 9-39] इत्युसिप्रत्ययः। **यजुः**=वेदः।

A. 'निर्व्याज**मिज्या** ववृते वचश्च भूयो बभाषे मुनिना कुमारः॥' भ. का. 2-37.

[अ] '**निराकारे**' इति **दैव**पाठमुपाश्रित्य **पुरुषकारे** व्याख्यातम्—"...'निराकारः=परिभवः।' इति च **क्षीरस्वामी**।. उपस्कारोपसंस्कारयोः पुनः पाठकृतः (=ग्रान्थिकाः) विप्रवदन्ते। तथा च **आख्यातनिघण्टुः**—'यत्ने प्रैषे निराकारे यातयेदप्युपस्कृतौ।' इति। **श्लोकधातुपाठश्च**—'**यत** उपसंस्कारनिकारार्थः स निरश्च धान्यधनवाची।' इति।" इति। अत्रेदमवधेयम्—**माधवधातुवृत्ति-प्रौढमनोरमा**प्रभृतिष्वप्येवमेव **क्षीरस्वामि**पाठ उद्ध्रियते। परं तु **क्षीरतरङ्गिण्या**मधुना पाठोऽन्यादृश एवोपलभ्यत इत्युपर्येव प्रदर्शितम्। प्रायः सर्वेऽप्याधुनिकाः वैयाकरणाः धातुविषये **क्षीरस्वामि**मतं **पुरुषकारो**पात्तस्थलेषु **पुरुषकार**वाक्यानुसारेणैवोद्धरन्ति; न तु स्वयं दृष्टत्वेनेत्यपि ज्ञायते।

'यतते तु प्रयत्नार्थे, **निराकारे तु यातयेत्** ।' (श्लो. 96) इति **देवः** । '**निकारः**=स्वेदनम् ।' इति **क्षीरस्वामी** । 'यत्नः प्रैषो वा **निकारः**' इति **बालमनोरमा** । 'परिभवसंस्कारौ तौ' इति **धा. का. व्याख्या** (3-40) । यातकः-तिका-यियातयिषकः-षिका ; यातयिता-त्री, यियातयिषिता-त्री ; इत्यादिकानि रूपाणि समस्तान्यपि चौरादिक**कालयति**वत् (175) ज्ञेयानि । यातना=तीव्रवेदना । 'ण्यासश्रन्थः—' (3-3-107) इति युचि रूपम् ।

(1337) "**यती प्रयत्ने**" (I-भ्वादिः-30. अक. सेट्. आत्म.)

'**यतते तु प्रयत्नार्थे**, निराकारे तु यातयेत् ।' (श्लो. 96) इति **देवः** । यातकः-तिका, यातकः-तिका, यियतिषकः-षिका, यायतकः-तिका ; यतिता-त्री, यातयिता-त्री, यियतिषिता-त्री, यायतिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**चेतति**वत् (524) ज्ञेयानि । [1]यत्यम्, [2]यत्नः, [3]आयत्तः-आयत्तवान्, [4]यतिः, [5]यतमानः, इतीमानि रूपाण्यस्माद् भवन्तीति विशेषः ।

(1338) "**यत्रि सङ्कोचने**" (X-चुरादिः-1536. अक. सेट्. उभ.) [अ]

यन्त्रकः-न्त्रिका, यियन्त्रयिषकः-षिका ; यन्त्रयिता-त्री, यियन्त्रयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**तन्त्रयति**वत् (698) ज्ञेयानि । यति—[A]अयन्त्र्यम् ।

(1339) "**यभ मैथुने**" (I-भ्वादिः-980. अक. अनि. पर.) [अ]

याभकः-भिका, याभकः-भिका, [1]यियप्सकः-प्सिका, यायभकः-भिका ; [2]यब्धा-यब्ध्री, याभयिता-त्री, यियप्सिता-त्री, यायभिता-त्री ; इत्यादिकानि सर्वाण्यपि रूपाणि प्रातिस्विकरूपाणि विना भौवादिक**तपति**वत् (703) ज्ञेयानि । [B]याभः ।

---

1. '**तकिशसिचतियतिजनीनामुपसंख्यानम्**' (वा. 3-1-97) इति हलन्तलक्षणण्यदपवादतया यत्प्रत्यये रूपमेवम् ।
2. भावे, 'यजयाच**यत**विच्छप्रच्छरक्षो नङ्' (3-3-90) इति नङ्प्रत्यये रूपम् ।
3. निष्ठायाम्, '**श्वीदितः**—' (7-2-14) इति इण्निषेधः ।
4. सर्वधातुभ्यो विहित औणादिके कर्तरि इन्प्रत्यये रूपमेवम् ।
5. '**ताच्छील्य**वयोवचनशक्तिषु चानश्' (3-2-129) इत्यनेन ताच्छील्यार्थे चानश्प्रत्यये रूपमेवम् । शानच्प्रत्ययेऽप्येवमेव । **यतमानः**=यमनियमाद्यङ्गविशिष्टयोगाभ्यासकविशेषः ।

[अ] '**यन्तृ**—' इति ऋदिदत्र पाठ इति **आभरणकार**मतत्वेन **धातुवृत्ता**वुपादाय—"अयं पाठः चिरन्तनव्याख्यानेषु न दृश्यते ; प्रत्युत **यन्त्रणा**दिशब्दमस्मादेव **मैत्रेयादयो** व्युदपादयन् ।" इति विवेचितम् । "अत्रापि पूर्ववत् (चितिधातुवत्) इदित्करणात् **यन्त्रती**त्याद्यपि भवति ।" इति **मा. धा. वृत्तिः** । "**यन्त्र**—इति पठितुं युक्तम् । यत्तु-इदित्करणात् **यन्त्रतीति माधवेनो**क्तम्—तच्चिन्त्यम् ।" इति **सिद्धान्तकौमुद्यु**क्तिरेव साधुः । यतः—'**चिन्त्यात्**' इत्यादौ उपधानकारसद्भावेन, णिजभावपक्षे नलोपव्यावृत्त्या सार्थकतां लभमान इकारः णिजभावं चिन्तेर्ज्ञापयतीति सूचितम् । इह तु रेफस्यैवोपधात्वप्रसङ्गेन नलोपप्रसक्त्यभावात्—इति ज्ञेयम् ।

---

1. '—अथ मैथुने **यभिः**' इत्यनिट्कारिकासु (**भाष्ये** 7-2-10) पाठात् धातोरस्यानिट्त्वम् । 'खरि च' (8-4-55) इति चर्त्वेन भकारस्य पकारः ।
2. तृजादिषु, 'झषस्तथोर्धोऽधः' (8-2-40) इति धत्वेन धकारे, 'झलां जश् झशि' (8-4-53) इति जश्त्वे च रूपनिष्पत्तिर्ज्ञेया ।

A. 'संचोरयन्तमरिगर्वमशेषभद्रं चिन्तन्तमन्तकमिवाप्त**मयन्त्र्य**वीर्यम् ।' धा. का. 3-13.

B. '**याभा**द्यकामैर्नमनाद् गताद्यैः सृप्योऽसि विष्णो यमिभिर्वितापैः ॥' धा. का.2-39.

[अ] '**यभ विपरीतमैथुने**' इति **क्षीरस्वामि-माधवादि**सम्मतः पाठः । '—विपरीते मैथुने' इति **धा. का. व्याख्या** (2-39) दृष्टः पाठः । "**भय** विपरीतो मैथुने' ; विपरीत इति—**यभ** इत्यर्थः ।" इति **पुरुषकारः** । '**जभ** –' इति चवर्गतृतीयादिं **केचित्** पठन्ति । **धनपाल-काश्यपादयः** '**यभ**—' इति पठित्वा, '**जभ** च' इति पठन्तीति ग्रन्थेषु तत्र तत्रोदाहरणाज्ज्ञायते । 'रभिश्च भान्तेष्वथ मैथुने **यभिः**' (अनिट्कारिका, **भाष्ये** 7-2-10) इत्यत्र **वृत्त्यादिषु यभते**रेवोदाहरणात् '**जभ**—' इति पाठोऽप्रामाणिक इति च **पुरुषकारे** (श्लो. 145) निरूपितम् । 'जभि—' इत्यपि कुत्रचिद् दृष्टः पाठः । "—'विपरीत इति । विपरीतानुष्ठित इत्यर्थः ।' इति **मैत्रेयः** ॥" इति **धातुवृत्तिः** । "तच्च पुरुषायितम् ।" इति **धा. का व्याख्या** । एवं बहुधाऽत्र धातौ, स्वरूपविषयेऽर्थविचारे च विप्रतिपत्तिः ग्रन्थकृतां दृश्यते । प्रसिद्धपाठस्तु **यभ** इत्येवेति प्रामाणिकाः । '**यभस्व** नित्यं यदि शक्तिरस्ति—' (मुक्तकम्) इत्यादिषु धातोरस्यात्मनेपदप्रयोगो दृश्यते । तत्र प्रमाणं मृग्यम् ।

(1340) "**यम उपरमे**" (I-भ्वादि: 819-984. सक. अनि. पर.) [अ]
'यमेरुपरमे यच्छेद् यमयेत् परिवेषणे ।' (श्लो. 148) इति **देवः** ।
यामकः-मिका, [1]यमकः-मिका, [2]आयामकः-मिका, [3]यियंसकः-सिका, [4]यंयमकः-यँय्यमकः-मिका ;
[5]यन्ता-यन्त्री, यमयिता-आयामयिता-त्री, यियंसिता-त्री, यंयमिता-त्री ;

---

1. '**यमोऽपरिवेषणे**' (ग. सू. भ्वादौ) इति पठ्यते । तस्य चायमर्थः— 'न कम्यमिचमाम्' (ग. सू. भ्वादौ) इत्यतो नेति वर्तते । उपरमार्थे पठितो यो **यम**धातुः स एव परिवेषणरूपार्थभिन्नार्थ एव घटादिपाठं न प्राप्नोति—अर्थात् परिवेषणार्थे घटादिः—इति । तथा च '**नियमयन्** ब्राह्मणान्' इत्यादिषु परिवेषणार्थकत्वात् घटादित्वम् । तेन मित्त्वात्, 'मितां ह्रस्वः' (6-4-92) इति णौ उपधाह्रस्वे रूपमेवं सर्वत्र बोध्यम् । यदा तु परिवेषणभिन्नार्थकत्वं—तदानीं **आयामयन्** (=द्राघयन्, व्यापारयन् वा इत्यर्थः) इत्यादिषु मित्त्वनिषेधात् उपधावृद्धिरेवेति बोध्यम् । एवमुत्तरत्रापि ।
2. **मैत्रेयरक्षित - काशिकाकार - न्यासकार-धातुवृत्तिकार - सिद्धान्तकौमुदीकार**मतानुसारेणात्र प्रयोगे मित्त्वनिषेधात् रूपमेवम् । **क्षीरस्वामी** तु '**यमोऽपरिवेषणे**' (ग. सू. भ्वादिः) इत्यत्र पूर्वस्मात् गणसूत्रात् '**न**' इत्यननुवर्त्य **आयमयन्** इत्येव साधुरिति विपरीतेन साधयति—तथाहि— "**यमयति, नियमयति,** परिवेषणे तु—**यामयति** श्राद्धेऽन्नम्, **आयामयति** चन्द्रम् ।" इति । तदेतत् **पुरुषकारा**दिषु बहुधा खण्डितमिति नेह प्रतन्यते ।
3. सन्नन्तात् द्वित्वादिके मकारस्य नत्वे, 'नश्चापदान्तस्य—' (8-3-24) इति अनुस्वारे च रूपमेवम् ।
4. यङन्तात् '**नुगतोऽनुनासिकान्तस्य**' (7-4-85) इति नुगागमः, तस्य पदान्तवद्भावेन परसवर्णविकल्पः ।
5. तृजादिषु '**यमिरमिनमन्तेष्वनिडेक इष्यते**' (व्याघ्रभूतिकारिका, **भाष्ये** 7-2-10) इति वचनाद् धातोरनिट्त्वम् । मकारस्यानुस्वारे परसवर्णे चैवं रूपम् ।

[अ] '**यमो गन्धने**' (1-2-15) इति सूत्रे **गन्धन**रूपस्य (**गन्धनम्** = सूचनम्' परदोषाविष्कार इति यावत् ।) अर्थस्याप्युपादानात्, धातोरस्योपसर्गवशात्, स्वभावाद् वा तत्राप्यर्थे वृत्तिरिति ज्ञेयम् । भ्वादिष्वेव पुरस्तात् (819 संख्यायां) '**यमोऽपरिवेषणे**' (ग. सू. भ्वादौ) इति यत् पठ्यते—तत्तु '**यम उपरमे**' इत्युत्तरत्रात्रैव विकरणे पठितस्यार्थविशेषे घटादिपाठ-तन्निषेधार्थरूपप्रयोजनद्वयवशादिति ज्ञेयम् । उत्तरत्र चैतद् व्यक्तीभविष्यति । 'परिवेष्टने एव मित्' इति **काशकृत्स्नः** । इति **केचित्** ।



[1]यच्छन्-न्ती, नियमयन्-यामयन्-न्ती, यियंसन्-न्ती ; —
यंस्यन्-न्ती-ती, नियमयिष्यन्-यामयिष्यन्-न्ती-ती, यियंसिष्यन्--न्ती-ती ;—
[2]आयच्छमानः,[A] [[3]भार्याम्] उपयच्छमानः, [[4]पाणिम्] आयच्छमानः, [व्रीहीन्] [5]संयच्छमानः, [भारम्] उद्यच्छमानः, [वस्त्रम्] आयच्छमानः,
यमयमानः, नियमयमानः, [6]आयामयमानः, [7]आयियंसमानः, यंयम्यमानः ;
आयंस्यमानः, उपयंस्यमानः, संयंस्यमानः-उद्यंस्यमानः-आयंस्यमानः,
आयामयिष्यमाणः, यमयिष्यमाणः-नियमयिष्यमाणः, आयियंसिष्यमाणः, यंयमिष्यमाणः ;

---

1. शतरि, 'इषगमियमां छः' (7-3-77) इति छकारेऽन्तादेशे तुकि, तस्य श्चुत्वेन चकारे च रूपमेवम् । एवं शानजन्तेष्वपि प्रक्रियोह्या ।
2. '**आङो यम**हनः' (1-3-28) इति अकर्मकादस्मादाङ्पूर्वकादात्मनेपदे शानच् । अकर्मकादित्युक्तत्वात् '**आयच्छन्** कूपाद् रज्जुम्' इत्यत्र शतैव ।
3. '**उपाद् यमः** स्वकरणे' (1-3-56) इत्यात्मनेपदम् । **स्वकरणम्** = स्वीकरणम् । पाणिग्रहणमिति **भट्टोजिप्रभृतयः** । तत्तु **भाष्या**द्यनारूढत्वादुपेक्ष्यमिति **शेखरकारादयः** । स्वकरणभिन्नार्थे 'देवदत्तो यज्ञदत्तस्य भार्या**मुपयच्छन्**' इत्यत्र शतैव ।
4. 'स्वाङ्गकर्मकाच्च—' (वा. 1-3-27) इति वचनादात्मनेपदम् ।
5. '**समुदाङ्भ्यो यमोऽग्रन्थे**' (1-3-75) इति सम् उत् आङ् पूर्वकादस्मात् **यम**धातोः ग्रन्थभिन्नविषये वर्तमानात् आत्मनेपदम् । 'अग्रन्थे' इत्युक्तत्वात् '**उद्यच्छन्** चिकित्सां वैद्यः' इत्यादिषु शतैव । 'स्वान् व्रीहीन् **संयच्छन्**' इत्यादिषु तु 'विभाषोपपदेन प्रतीयमाने' (1-3-77) इति पक्षे शताऽपि साधुरेवेति ज्ञेयम् ।
6. 'न पादम्याङ्यम—' (1-3-89) इति ण्यन्तात् परस्मैपदनिषेधः । 'अणावकर्मकात् चित्तवत्कर्तृकात्' (1-3-88) इति प्राप्तस्य परस्मैपदस्यापवादोऽयम् । **केचित्** तु कर्त्रभिप्रायक्रियाफलार्थतया अत्रात्मनेपदमिति न ; परं तु परगामिनि क्रियाफले परस्मैपदमपीति वदन्ति ।
7. 'पूर्ववत् सनः' (1-3-62) इति सनः प्रकृतेर्ङिदान एव सन्नन्तादत्रापि शानजिति ज्ञेयम् ।

A. '**श्रियमायच्छमाना**भिरुत्तमाभिरनुत्तमाम् ॥' भ. का. 8. 46.

[1]रिपुयत्-रिपुयतौ-रिपुयतः ; [2]वियत्-वियतौ-वियतः ;
[3]यतम्-यतः-यतवान्, नियमितः-आयामितः, यियंसितः, यंयमितः-तवान् ;
[4]यमः, [5]वाचंयमः[A], [6]यतिः, [7]आयामी, [8]वाग्यामः, यमः,
नियमः-आयामः, [9]संयमनः, यियंसुः, यंयमः ;
यन्तव्यम्, यमयितव्यम्-आयामयितव्यम्, यियंसितव्यम्, यंयमितव्यम् ;
यमनीयम्, यमनीयम्-यामनीयम्, यियंसनीयम्, यंयमनीयम् ;
[10]यम्यम्, [11]अनियम्यम्-विनियम्यम्, नियाम्यम्, यम्यम्-आयाम्यम्,
यियंस्यम्, यंयम्यम् ;

---

1. रिपून् यच्छति = उपरतं करोति इत्यर्थे कर्मण्युपपदे, 'क्विप् च' (3-2-76) इति क्विप्। 'गमादीनाम्—' (वा. 6-4-40) इति वचनादनुनासिकलोपे तुकि रूपमेवम्।
2. 'अन्येभ्योऽपि दृश्यन्ते' (3-2-75) इति क्विपि रूपमेवम्। **वियत्** = विष्णुपदम्।
3. निष्ठायाम्, 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' (6-4-37) इत्यनुनासिकलोपे रूपम्। एवमेव क्त्वाक्तिन्प्रभृतिष्वपि रूपनिष्पत्तिर्ज्ञेया।
4. यच्छतीति **यमः**। कर्तरि पचाद्यच्।
5. 'वाचि **यमो** व्रते' (3-2-40) इति वाग्रूपे कर्मण्युपपदे खच्प्रत्ययः। '**वाचंयम**-पुरन्दरौ च' (6-3-69) इत्यनेनामन्तत्वं निपात्यते। निपातनाद् द्वितीयायाः अलुक्। **वाचंयमः**=मौनव्रती।
6. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति कर्तरि संज्ञायां क्तिच्प्रत्ययः, बाहुलकात् 'न क्तिचि दीर्घश्च' (6-4-39) इति न प्रवर्तते। नितरां मन आदिकं यच्छतीति **यतिः**। अनुनासिकलोपोऽपि बाहुलकादेवेति ज्ञेयम्। **केचित्** तु 'स्त्रियां क्तिन्' (3-3-94) इति क्तिन्, बाहुलकात् पुँल्लिङ्गत्वमिति वदन्ति।
7. तच्छीलादिषु कर्तृषु, 'सम्पृचानुरुधाङ्**यम**—' (3-2-142) इत्यादिना, आङ्पूर्वकादस्माद् घिनुण्प्रत्यये रूपमेवम्।
8. व्रतभिन्नार्थे विवक्षिते, वाचं यच्छतीत्यर्थे 'कर्मण्यण्' (3-2-1) इत्यण्प्रत्यये रूपमेवम्।
9. ण्यन्तात्, नन्द्यादित्वात् (3-1-134) कर्तरि ल्युप्रत्यये अनादेशे च रूपम्।
10. 'गदमदचर**यमश्चानुपसर्गे**' (3-1-100) इति हलन्तलक्षणण्यदपवादतया यत्प्रत्ययः। यद्यपि, '**पोरदुपधात्**' (3-1-98) इत्येवात्र यत् सिद्धः, तथापि स यत् अनुपसृष्टादेव धातोरिति समर्थनाय पृथक् **यम**धातोरुपादानमिति ज्ञेयम्। एवं निरूढत्वात्, उपसृष्टे तु **नियाम्यम्** इत्यादिकानि ण्यदन्तान्येव साधूनि।
11. '—अनुपसर्गे' (3-1-100) इत्युक्तत्वात्, कथमत्र सोपसर्गस्थले यत्प्रत्ययस्योपपत्तिरिति शङ्कित्वा, 'तेन न तत्र भवेद् **विनियम्यम्**।' इति **व्याघ्रभूतिकारिकायां** '**विनियम्यम्**' इत्युक्तत्वात्, विपूर्वकात्, निपूर्वकाच्च यदेवेति **व्याख्यातारः** समर्थयन्ति। तेन, '**अनियम्यस्य** नायुक्तिः—' (न्यायकुसुमाञ्जलिः 3-19) 'त्वया **नियम्या** ननु दिव्यचक्षुषा—' इत्यादिप्रयोगा उपपन्ना इति ज्ञेयम्।

A. '**वाचम्यमान्** स्थण्डिलशायिनश्च युयुक्षमाणाननिशं मुमुक्षून्।' भ. का. 3-41.



ईषद्यमः-दुर्यमः-सुयमः ; — — —
यम्यमानः, यम्यमानः-आयाम्यमानः, यियंस्यमानः, यंयम्यमानः ;
आयामः, [1]उद्यमः, [2]संयामः[A]-उपयमः-उपयामः-नियमः-नियामः,
यमः-यामः, यियंसः, यंयमः ;
यन्तुम्, यमयितुम्-आयामयितुम्, यियंसितुम्, यंयमितुम् ;
[3]यतिः, [4]संयत्, यमना-आयामना, यियंसा, यंयमा ;
यमनम्, [B]यमनम्-आयामनम्, यियंसनम्, यंयमनम् ;
[5]यत्वा, यमयित्वा-यामयित्वा, यियंसित्वा, यंयमित्वा ;
[6]प्रयत्य-प्रयम्य, [7]प्रयमय्य-प्रयाम्य, प्रयियंस्य, प्रयंयम्य ;

---

1. उत्पूर्वकादस्माद् घञि, यद्यपि वृद्धौ सत्याम्—**उद्यामः** इति न्याय्यम्; तथापि 'अड **उद्यमे**' (भ्वादिः. अक. सेट्.) इत्यादिनिर्देशबलादत्र भावेऽबेवेति व्याख्यानेषु समर्थितम्
2. '**यमः समुपनिविषु च**' (3-3-63) इति वैकल्पिकोऽप्प्रत्ययः। पक्षे घञ्। तेन रूपद्वयमत्र सर्वत्रेति ज्ञेयम्। बाहुलकात्, संज्ञायां पुंसि घप्रत्यये वा **यमः** इत्यपि साधुः। यमोऽस्यास्तीति **यमी**।
3. स्त्रियां भावादौ क्तिन्प्रत्ययेऽनुनासिकलोपे च रूपमेवम्। **यतिः**=वृत्तेषु विच्छित्तिविशेषद्योतकोऽवसानविशेषः।
4. 'सम्पदादिभ्यः—' (वा. 3-3-108) इति भावे स्त्रियां क्विपि, 'गमादीनामिति वक्तव्यम्' (वा. 6-4-40) इत्यनुनासिकलोपे तुकि च रूपमेवम्। बाहुलकादत्र क्विबिति ज्ञेयम्। **संयत्** = युद्धम्। सुरूपिणी कन्या च।
5. क्त्वायामनुनासिकलोपे रूपमेवम्। "उदिदिति **श्रीभोजः**। **यत्वा, यमित्वा**।" इति **क्षीरस्वामी**। तन्मते धातोरस्य वलाद्यार्धधातुकेषु सर्वत्र **यमिता-यन्ता** इत्यादिकानि रूपाणि ज्ञेयानि। परं तु **भाष्ये** (7-2-10) अनिट्कारिकाप्रकरणे **यम**धातोरस्योपसंग्रहणात् पक्षोऽयमप्रामाणिक इति, **यमित्वा** इत्यादयः प्रयोगा अपाणिनीया इति, यदि तेषां प्रामाणिकत्वं, तदा व्याकरणान्तररीत्या, बाहुलकाद्वा निर्वाहः करणीय इति च ज्ञेयम्।
6. 'वा ल्यपि' (6-4-38) इत्यत्र व्यवस्थितविभाषाश्रयणात्, मकारान्तानामनिटां विकल्पेनानुनासिकलोपः। तेनानुनासिकलोपपक्षे तुकि, तदभावपक्षे च रूपद्वयमत्रेति ज्ञेयम्।
7. ण्यन्ताल्ल्यपि, मित्त्वपक्षे उपधाह्रस्वे, 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः।

A. '**संयाम**वन्तो **यति**वत्, निनादानपरेऽमुचन्॥' भ. का. 7. 57.
B. 'निशम्यया मञ्जुगिरा कदा नः स **यामये**द्वा **यमना**दिकार्ये॥' धा. का. 2.18.

यामम् २, यत्वा २, } [1]यमम् २-यामम् २-आयामम् २, यमयित्वा २-यामयित्वा २, } यियंसम् २, यियंसित्वा २, }
[2]यमुना, [3]यन्त्रम्, [4]यमकम् । यंयमम् २; यंयमित्वा २; }

(1341) "**यम च परिवेषणे**" (X-चुरादिः-1626. सक. सेट्. उभ.) [अ]

'यमेरुपरमे यच्छेत् **यमयेत् परिवेषणे** ।' (श्लो. 148) इति **देवः** ।

यमकः-यमिका, यियमयिषकः-षिका, यमयिता-त्री, यियमयिषिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चहयति**वत् (515) ज्ञेयानि । शतरि [A]सुयमयन् ।

(1342) "**यसु प्रयत्ने**" (IV-दिवादिः-1210. अक. सेट्. पर.)

यासकः-सिका, यासकः-सिका, यियसिषकः-षिका, यायसकः-सिका; यस्ता-यस्त्री, यासयिता-त्री, यियसिषिता-त्री, यायसिता-त्री;

---

1. ण्यन्तात् मित्त्वपक्षे, 'चिण्णमुलोः—' (6-4-93) इति दीर्घविकल्पनाद्रूपद्वयमिति बोध्यम् ।
2. 'अजि**यमि**शीङ्भ्यश्च' [द. उ. 5-61] इत्युनन्प्रत्ययः । **यमुना**=नदीविशेषः ।
3. 'गृधूवीपचिवचि**यमि**—' [द. उ. 8.89] इति त्रप्रत्ययः । यच्छतीति **यन्त्रम्**=शरीरसाधनम्, पीडनञ्च ।
4. 'क्वुन् शिल्पिसंज्ञयोः—' [द. उ. 3.5] इति संज्ञायां क्वुनि रूपमेवम् । **यमकम्**=शब्दालङ्कारविशेषः ।

A. 'चण्डातकं **सुयमयन्** चहको बभाषे ।' धा. का. 3-25.

[अ] चुरादिषु ज्ञपादिपञ्चकधातुप्रकरणे '**यम च परिवेषणे**' (ग. सू. चुरादौ) इति पठ्यते । तस्यायमर्थः—**परिवेषणे** = परिवेष्टनेऽर्थे **यम**धातुश्चुरादिषु बोध्यः; तस्य च क्रमप्राप्तो मित्त्वादिस्तु भवतीति । परिवेषणभिन्नार्थे तु औत्सर्गिके भ्वादिपाठे, तस्माद्धेतुमण्णिचि **नियामयति, नियामकः** इत्यादिकानि रूपाणि तिङन्तादिषु भवन्तीति ज्ञेयम् । '**यम च**—' इति **दुर्गादि**सम्मतः पाठः । चकाररहितपाठस्तु **क्षीरतरङ्गिणी**दृष्टः । '**अपरिवेषणे**' इत्यपि केषाञ्चित्पाठ इति **क्षीरतरङ्गिण्यादितो** ज्ञायते; स च पाठः **पुरुषकार-माधवधातुवृत्ति**प्रभृतिषु खण्डित इत्यलम् । **परिवेषणम्**=वेष्टनम् । भ्वादिषु पठितस्य '**यमोऽपरिवेषणे**' इत्यस्य तु '**परिवेषणम्**=भोजनम्' इत्यर्थ इति बोध्यम् ।



इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**ग्रसति**वत् (440) ज्ञेयानि । शतरि—[1]यस्यन्-न्ती, यसन्-न्ती, प्रयस्यन्-[A]आयस्यन्-न्ती, [2]संयस्यन्-संयसन्-न्ती, [3]आयासी,[B] [4]आयासयन्-न्ती, आयासयमानः, [5]यस्त्वा-यसित्वा, [6]प्रयासी, यस्तः-यस्तवान् इतीमानि रूपाण्यस्य विशेषेण भवन्तीति ज्ञेयम् ।

(1343) "**या प्रापणे**" (II-अदादिः-1049. सक. अनि. पर.)

**प्रापणम्**=गतिः ।

यायकः-यिका, यापकः-पिका, यियासकः-सिका, यायायकः-यिका; याता-त्री, यापयिता-त्री, यियासिता-त्री; यायायिता-त्री, इत्यादिकानि सर्वाण्यपि रूपाणि

---

1. शतरि दिवादित्वात् नित्यं श्यन्प्रत्यये प्राप्ते, '**यसोऽनुपसर्गात्**' (3-1-71) इति विकल्पेन श्यन् । पक्षे औत्सर्गिके शपि **यसन्-न्ती** इति रूपमिति बोध्यम् ।
2. '**संयसश्च**' (3-1-72) इति संपूर्वकादपि श्यन्विकल्पः । '—अनुपसर्गात्' (3-1-71) इत्युक्तत्वात् अप्राप्तेऽनेन सूत्रेण सम्पूर्वकस्यापि वैकल्पिकः श्यन् इति ज्ञेयम् ।
3. तच्छीलादिषु कर्तृषु 'सम्पृचानुरुधाङ्य**माङ्यस**—' (3-2-142) इत्यादिना घिनुण्प्रत्यये रूपमेवम् ।
4. प्रयत्नस्य चित्तवत्कर्तृकत्वादस्मात् ण्यन्तात् 'अणावकर्मकात्—' (1-3-88) इत्यादिना परस्मैपदे प्राप्ते, 'न पादम्याङ्य**माङ्यस**—' (1-3-89) इत्यादिना आङ्पूर्वकात् परस्मैपदनिषेधः । तेन परगामिनि क्रियाफले परस्मैपदम्, आत्मगामिनि क्रियाफले तु 'णिचश्च' (1-3-74) इति आत्मनेपदं भवतीति ज्ञेयम् । एतच्च **माधवा**द्यनुरोधेनोक्तम् । **क्षीरस्वामी** तु—"—'न पादमि—' (1-3-89) इति तङ्—**आयासयते** ।" इत्युक्तवान् । तेनास्य मते परस्मैपदनिषेधादात्मनेपदमेव न्याय्यमिति ज्ञायते । वस्तुतस्तु **माधवो**क्तमेव न्याय्यमित्यलम् ।
5. '**उदितो** वा' (7-2-56) इति क्त्वायामिड्विकल्पः । तेन रूपद्वयम् । एतेन निष्ठायामिण्निषेधे **यस्तः, यस्तवान्** इति रूपनिष्पत्तिरिति ज्ञेयम् ।
6. बाहुलकात्, ग्रह्यादेराकृतिगणत्वेन 'आवश्यकाधमर्ण्ययोर्णिनिः' (3·3·170) इत्यनेनावश्यकार्थे वा प्रपूर्वकादस्मात् णिनिप्रत्यये **प्रयासी** इति रूपम् । वस्तुतः प्रपूर्वकादस्माद्घञि, घञन्तात् मत्वर्थीय इनिप्रत्ययेऽपि रूपनिष्पादनं न्याय्यमिति बोध्यम् ।

A. '**अथायस्यन्** कषायाक्षः स्विन्नःस्वेदकणोल्बणः ।' भ. का. 5. 83.

B. 'संज्वारिणेव मनसा ध्वान्त**मायासिना** मया ।' भ. का. 7. 6.

आदादिकभातिवत् (1153) ज्ञेयानि । [1]प्रणियान्-ती-न्ती, [2]यानीयः, [3]येयः, [4]अध्वन्यतुरङ्गयायी,[A] अनुयायी, [5]प्रयायी-प्रतियायी, [6]सङ्ग्रामयायी,[B] [7]शुभंयाः अभियाः[C], [8]यायावरः,[D] प्रयाणम्, [9]प्रयापणम्-प्रयापनम्,

---

1. शतरि, अदादित्वाच्छपो लुकि, 'नेर्गदनदपतपदघुमास्यतिहन्तियाति—' (8-4-17) इत्यादिना उपसर्गस्थान्निमित्तात् परस्य नेर्णत्वे रूपमेवम् । स्त्रियाम्, 'आच्छीनद्योः—' (7-1-80) इति नुम्विकल्पः ।
2. 'कृत्यल्युटो बहुलम्' (3-3-113) इति बाहुलकत्वाभ्यनुज्ञानादत्र करणेऽनीयर्-प्रत्ययः । यान्त्यनेनेति **यानीयः**=अश्वः ।
3. कर्मणि यत्प्रत्यये, 'ईद् यति' (6-4-65) इतीकारे गुणे च रूपमेवम् ।
4. अध्वन्यतुरङ्गेन यातीति **अध्वन्यतुरङ्गयायी** । 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिप्रत्ययः । **'आतो** युक्—' (7-3-33) इति युगागमः । एवम् **अनुयायी** इत्यत्रापि रूपनिष्पत्तिर्ज्ञेया । उपसर्गोपपदेऽप्यनेन णिनिरिति **भाष्यादौ** स्पष्टम् ।
5. 'भविष्यति **गम्यादयः**' (3-3-3) इत्यत्र गम्यादिगणे पाठात् औणादिके णिनि-प्रत्यये युगागमे च रूपमेवम् । भविष्यत्कालेऽयं प्रत्यय इति ज्ञेयम् । **आयायी** इति **काशिका** (3-3-3) पाठः ।
6. 'आवश्यकाधमर्ण्ययोर्णिनिः' (3-3-170) इत्यावश्यकार्थे णिनिप्रत्यये रूपमेवम् ।
7. शुभं यातीति **शुभंयाः**=शुभान्वितः । 'क्विप् च' (3-2-76) इति क्विप् ।
8. यङन्तात्, **'यश्च यङः'** (3-2-176) इति ताच्छीलिके वरचि द्विर्वचनादि-केषु रूपमेवम् । अत्र धातोरस्य गत्यर्थकत्वात् 'नित्यं कौटिल्ये गतौ' (3-1-23) इति कौटिल्यार्थे=कुटिलं गच्छतीत्यर्थ एव यङ्—इति **प्राञ्चः** । **अन्ये** तु **यायावरः** इत्यस्य एकत्रानियतस्थानार्थकतया विवरणात्, मुनिविशेषे पद-स्यास्य रूढत्वादत्र कौटिल्यार्थकयङोऽसंम्भवात्, 'धातोरेकाचो हलादेः—' (3-1-22) इत्यादिना क्रियासमभिहारे (=पौनःपुन्ये, भृशार्थे वा) यङेव इति वदन्ति ।
9. 'णेर्विभाषा' (8-4-30) इति णत्वविकल्पः । **प्रयाणम्** इत्यत्र तु 'कृत्यचः' (8-4-29) इति नित्यं णत्वमिति बोध्यम् ।

A. 'क्षिप्रं ततोऽध्वन्यतुरङ्गयायी यविष्ठवद् वृद्धतमोऽपि राजा ।' भ. का. 2. 44.

B. 'स्मरन्तः पश्चिमामाज्ञां भर्तुः **सङ्ग्रामयायिनः** ।' रघुवंशे—17. 8.

C. '**अभिया**ऽअतऽऽआवरं तुङ्गं भूमृतं रुचिरं पुरः ।' भ. का. 10-21.

D. '**यायावरा** लाक्षणिकाः कठाश्च कौशिक्यनुब्राह्मणिपैप्पलादाः ।' वा. वि. 3. 18.



[1]अययः,[A] प्रयियासयन्तः,[B] [2]अप्रयाणिः, [3]ययातिः, [4]याता, [5]ययुः, [6]मृगयुः-देवयुः-केवलयुः-ग्रहयुः-मित्रयुः-मन्त्रयुः-अध्वर्युः, [7]यातुः, [8]यामः, [9]यात्रा ।

## (1344) "टु याचृ याच्ञायाम्" (I-भ्वादिः-863. द्विक. सेट्. उभ.)

याचकः-चिका, याचकः-चिका, यियाचिषकः-षिका, यायाचकः-चिका; याचिता-त्री, याचयिता-त्री, यियाचिषिता-त्री, यायाचिता-त्री; [बलिं वसुधां]

---

1. अयः=शुभावहो विधिः, अयं यातीति **अययः** । 'आतोऽनुपसर्गे कः' (3-2-3) इति कर्तरि कप्रत्ययः ।
2. 'आक्रोशे नञ्यनिः' (3-3-112) इति नञुपपदादस्माद् अनिप्रत्ययः । आक्रोशः=शापः ।
3. "क्तिनि बाहुलकाद् द्विर्वचनम्" इत्यात्रेयः—इति **मा. धा. वृत्तिः** । स्त्रिया-मेव क्तिनो विधानात् क्तिचस्तु पुँल्लिङ्गेऽपि सद्भावात् क्तिचि, बाहुलकादेव द्विर्वचन-मिति ज्ञेयम् ।
4. ताच्छीलिके, औणादिके वा तृनि, रूपमेवम् । स्त्रियाम्, 'न षट्स्वस्रादिभ्यः' (4-1-10) इति ङीब्निषेधः । **याता**=देवरपत्नी ।
5. **'यो द्वे च'** [द. उ. 1-106] इत्युप्रत्यये द्विर्वचने, ङिद्वद्भावेनाकारलोपे च रूपम् । **ययुः**=अश्वमेधीयः, स्वर्गमार्गश्च ।
6. **'मृगय्वादयश्च'** [द. उ. 1-121] इति कुप्रत्यये, आकारलोपे च रूपाण्येतानि । अत्रैव गणे अध्वरशब्दस्यान्तलोपश्च निपातनादेवेति ज्ञेयम् । **मृगयुः**=व्याधः, **देवयुः**=धार्मिकः । **केवलयुः**=मानी । **ग्रहयुः**=ग्रहपतिः, **मित्रयुः**=मित्र-वत्सलः, ऋषिविशेषश्च । **मन्त्रयुः**=मन्त्री, **अध्वर्युः**=ऋत्विग्विशेषः । मृगम् आत्मन इच्छतीत्यर्थे 'सुप आत्मनः क्यच्' (3-1-8) इति क्यच्प्रत्यये, 'सना-द्यन्ता धातवः' (3-1-32) इति धातुसंज्ञायाम्, 'क्याच्छन्दसि' (3-2-170) इति उप्रत्यये रूपनिष्पत्तिरपीदृशस्थलेषु नानुपपन्नेति ज्ञेयम् । तथाहि—**'मित्रयुः, संस्वेदयुः, सुम्नयुः'** इतीमानि **काशिकायाम्** एवमेव (3-1-170) साधितानि ।
7. 'कमिमनिजनिगाभापाया—' [द. उ. 1-125] इति तुप्रत्यये रूपमेवम् । **यातुः**=पावकः, मनश्च । राक्षस इति **क्षीरस्वामी** ।
8. औणादिके [द. उ. 7-26] मन्प्रत्यये रूपम् । **यामः**=कालविशेषः ।
9. **'हुयामा—'** [द. उ. 8-84] इति त्रन्प्रत्ययः । **यात्रा**=गमनम्, आचारश्च । अभ्यवहार इति **केचित्** ।

A. 'स सासिः सासूः सासो **येया**येयाययाययः ।' किरातार्जुनीये 15-5.

B. 'अशिश्रवन् आत्ययिकं तमेत्य दूता यदार्थं **प्रयियासयन्तः** ।' भ. का. 3.25.

[1]याचन्-न्ती, [A]याचमानः, इत्यादिकानि सर्वाण्यपि रूपाणि भौवादिककासतिवत् (188) ज्ञेयानि। [2]याचथुः, याचित्रिमम्, [3]याच्ञा, [4]अयाची, [5]याच्यम्, [6]याचितम्-याचितकम्, याचा, इतीमानि रूपाणि धातोरस्माद्भवन्तीति विशेषः।

(1345) "**यु मिश्रणे**" (II-अदादिः-1033. सक. सेट्. पर.)

'—अमिश्रणे च' इत्यपि **क्वचित्** पाठः।

'यावयेत जुगुप्सायाम्, **मिश्रणे यौति**, बन्धने।
युनाति च युनोते च—........॥' (श्लो. 24) इति **देवः**।

यावकः-विका, यावकः-विका, [7]यियविषकः-युयूषकः-षिका, [8]योयूयकः-यिका;

1. 'अकथितं च' (1-4-51) इत्यत्र **भाष्ये** 'दुहियाचिरुधि—' (व्याघ्रभूतिकारिका. 1-4-51) परिगणनात् द्विकर्मकत्वम्। धातोरस्य उभयपदित्वात् शता, शानच्चेति ज्ञेयम्।
2. 'ड्वितोऽथुच्' (3-3-89) इति भावेऽथुच्प्रत्ययः। **क्षीरस्वाम्यादयः** धातुममुं ड्वितं पठित्वा 'ड्वितः क्त्रिः' (3-3-88) इति क्त्रिप्रत्यये, 'क्त्रेर्मम्नित्यम्' (4-4-20) इति मप्प्रत्यये **याचित्रिमम्** इति रूपं साधयन्ति। "**केचित्** ड्वितं पठन्ति—तदपि प्रमाणम्।" इति **धातुवृत्ति**रिहानुसन्धेया।
3. 'यज**याच**—' (3-3-90) इत्यादिना भावे नङ्प्रत्ययः। 'नेड् वशि' (7-2-8) इतीण्निषेधः। 'स्तोः श्चुना—' (8-4-40) इति श्चुत्वम्। स्त्रीलिङ्गत्वं स्वभावात्।
4. '**याचृ**व्याहृसंव्याहृव्रजवदवसां प्रतिषिद्धानाम्' (ग. सू. 3-1-134) इति णिनिप्रत्ययः। **प्रतिषिद्धानाम्**=नञ्पूर्वाणामित्यर्थः। **अयाची**=यः सर्वात्मना याचनं विनैव देहयात्रां करोति स एवमुच्यते।
5. ण्यति, 'यज**याच**रुचप्रवचर्चश्च' (7-3-66) इति कुत्वनिषेधः। 'निष्ठायामनिटः कुत्ववचनात्' (वा. 7-3-52) इति **वार्तिका**नुसरणे तु निष्ठायामस्य धातोः सेट्त्वात् कुत्वमेव न प्रवर्तते। यथोत्तरं मुनीनां प्रामाण्यात् **वार्तिका**नुसरणमेव युक्तम्।
6. निष्ठायामेवं रूपम्। निष्ठान्तात 'अपमित्य**याचिताभ्यां** कक्कनौ' (4-4-21) इति निर्वृत्तार्थे तृतीयान्तात् यथासम्भवं कन्प्रत्यये **याचितकम्**=याचितेन निर्वृत्तम् इति।
7. 'इमांस्तु सेटः प्रवदन्ति तद्विदः।....... तथोर्णोतिमथो **युणुक्ष्णवः**।' (**भाष्ये**-7-2-10) इति **व्याघ्रभूतिकारिकाया**मुपात्तत्वादस्य सेट्त्वम्। सन्नन्ते तु, 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृ**यूर्णु**भर—' (7-2-49) इति इड्विकल्पः। इट्पक्षे, '**ओः पुयण्ज्यपरे**' (7-4-80) इत्यभ्यासस्येकारः। इडभावपक्षे झलादित्वात् सनः कित्त्वे, 'अज्झनगमां सनि' (6-4-16) इति दीर्घः। एवं सन्नन्ते सर्वत्र रूपद्वयं बोध्यम्।
8. यङन्ते सर्वत्रोत्तरखण्डे, 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः। पूर्वखण्डे गुणः।

A. 'सोऽपृच्छत् लक्ष्मणं सीतां **याचमानः** शिवं सुरान्।' भ. का. 6-8.



यविता-त्री, यावयिता-त्री, यियविषिता-युयूषिता-त्री, योयूयिता-त्री;
[A]युवन्-ती, यावयन्-न्ती, यियविषन्-युयूषन्-न्ती; —
यविष्यन्-न्ती-ती, यावयिष्यन्-न्ती-ती, यियविषिष्यन्-युयूषिष्यन्-न्ती-ती; —
— यावयमानः, — योयूयमानः;
— यावयिष्यमाणः, — योयूयिष्यमाणः;
नियुत्-नियुतौ-नियुतः; — — —
[1]युतम्-युतः-युतवान्, यावितः, यियविषितः-युयूषितः, योयूयितः-तवान्;
[2]यवः-यवानी, [3]यवनः-यवनानी, यवनी, [4]यवकः, यावः, यावकः, [5]यावकम्,
यावः, यियविषुः[B]-युयूषुः-[6]यियावयिषुः, योयुवः;
यवितव्यम्, यावयितव्यम्, यियविषितव्यम्-युयूषितव्यम्, योयूयितव्यम्;
[7]प्रयवणीयम्, प्रणियवनीयम्-प्रनियवनीयम्, [8]प्रयावनीयम्-प्रयावणीयम्,
यियविषणीयम्-युयूषणीयम्, योयूयनीयम्;

1. 'यस्य विभाषा' (7-2-15) इति निष्ठायामिण्निषेधः। क्त्वा-क्तिन्प्रभृतिषु तु 'श्र्युकः क्किति' (7-2-11) इतीण्निषेध इति विशेषः।
2. पचादित्वात् (3-1-134) अच्प्रत्ययः। स्त्रियाम्, 'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्य**यव**—' (4-1-49) इत्यादिना आनुगागमे ङीषि च **यवानी** इति सम्पद्यते। एतच्च, '**यवाद्** दोषे' (वा. 4-1-49) इति वचनाद् दुष्टे यवे स्त्रीत्वेन विवक्षित एवेति ज्ञेयम्। अन्यत्र तु टापि **यवा** इति।
3. नन्द्यादित्वात् (3-1-134) कर्तरि ल्युः। स्त्रियाम्, 'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययव**यवन**—' (4-1-49) इत्यादिना '**यवना**ल्लिप्याम्' (वा. 4-1-49) इति वचनेन यवनलिप्यां विवक्षितायामानुगागमो ङीष् च भवतः। पुंयोगलक्षणे ङीषि तु **यवनी** इति सम्पद्यते।
4. यव एव **यवकः**, स्वार्थे कन्। प्रज्ञादित्वात् स्वार्थेऽण्प्रत्यये **यावः**।
5. 'संज्ञायाम्' (3-3-109) इति ण्वुलि रूपमेवम्। **यावकम्**=रञ्जनसाधनीभूतो रसविशेषः। अत्र ण्वुलः स्त्र्यधिकारविहितत्वेऽपि 'लिङ्गमविवक्षितं लोकाश्रितत्वाल्लिङ्गस्य' इति न्यायेन नपुंसकलिङ्गमिति ज्ञेयम्।
6. ण्यन्तात् सनि, 'ओः पुयण्ज्यपरे' (7-4-80) इति अभ्यासेकारः।
7. 'कृत्यचः' (8-4-29) इति णत्वम्। **प्रणियवनीयम्-प्रनियवनीयम्** इत्यत्र तु, 'शेषे विभाषा—' (8-4-18) इति णत्वविकल्पः।
8. 'णेर्विभाषा' (8-4-30) इति णत्वविकल्पः।

A. 'पृक्ताग्रजः पृञ्जितगोपसूनुर्दष्टोऽब्धिशायी स जनै**र्युवद्भिः**॥' धा. का. 2-46.

B. '**संयुयूषुं** दिशो बाणैरक्षं **यियविषुर्द्रुमैः**।' भ. का. 9-35.

[1]याव्यम्,　याव्यम्,　यियविष्यम्-युयूष्यम्,　योयूय्यम्;
ईषद्यवः-दुर्यवः-सुयवः;　—　—　—　.
[2]यूयमानः,　याव्यमानः,　यियविष्यमाणः-युयूष्यमाणः,　योयूय्यमानः;
[3]प्रयवः,　[4]संयावः,　[5]उद्यावः,　[6]उद्यावः,　[7]यवः,　[8]योत्रम्,　[9]यौत्रम्,
यावः,　यियविषः,　युयूषः,　योयूयः;
यवितुम्,　यावयितुम्,　यियविषितुम्-युयूषितुम्,　योयूयितुम्;
[10]यूतिः,　यावना,　यियविषा-युयूषा,　योयूया;
यवनम्,　यावनम्,　यियविषणम्-युयूषणम्,　योयूयनम्;
युत्वा,　यावयित्वा,　यियविषित्वा-युयूषित्वा,　योयूयित्वा;
प्रयुत्य,　[11]प्रयूय,　प्रयाव्य,　प्रयियविष्य-प्रयुयूष्य,　प्रयोयूय्य;

---

1. 'आसुयुवपि—' (3-1-126) इति ण्यत्। अजन्तलक्षणयतोऽपवादः। 'धातोस्तन्निमित्तस्यैव' (6-1-80) इत्यावादेशः। आवश्यकार्थेऽपि, '**ओरावश्यके**' (3-1-125) इति ण्यति एवमेव रूपम्।
2. यकि, 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः।
3. 'ऋदोरप्' (3-3-57) इत्यप्प्रत्ययः भावे।
4. '**समि युद्रुदुवः**' (3-3-23) इति सम्युपपदे करणे घञ्। **संयावः**= पिष्टविकारोऽपूपविशेषः।
5. '**उदि** श्रयति**यौ**तिपूद्रुवः' (3-3-49) इति घञ्।
6. 'अध्यायन्यायो**द्याव**संहाराश्च' (3-3-122) इति संज्ञायां करणाधिकरणयोर्घञ् निपात्यते। **उद्यावः**=भक्ष्यविशेषः।
7. यौति अत्र रसादिकमिति **यवः**=धान्यविशेषः। 'पुंसि संज्ञायां घः—' (3-3-118) इति संज्ञायां घप्रत्ययः।
8. 'दाम्नीशस**युयुज**—' (3-2-182) इति करणे ष्ट्रन्प्रत्ययः। यूयतेऽनेनेति **योत्रम्**= गोपालकानां करे स्थितो दण्डविशेषः।
9. 'उणादयो बहुलम्' (3-3-1) इति ष्ट्रन्प्रत्यये, 'अचो ञ्णिति' (7-2-115) इति वृद्धिरिति **काशिका** (7-2-115)।
10. स्त्रियां क्तिनि, 'श्र्युकः क्किति' (7-2-11) इति इण्निषेधे, 'ऊति**यूति**जूति-सातिहेतिकीर्तयश्च' (3-3-97) इति निपातनात् दीर्घः, अन्तोदात्तत्वं च। **यूतिः**=संघः, एकत्र समेषां समागमः। **गव्यूतिः**=क्रोशयुगम्।
11. छन्दसि विषये ल्यपि, '**युप्लुवोर्दीर्घः**—' (6-4-58) इति दीर्घ इति **ज्ञेयम्**। लोके तु तुकि **प्रयुत्य** इति भवति।



यावम् २,　यावम् २,　यियविषम् २,　योयूयम् २;
युत्वा २,　यावयित्वा,　यियविषित्वा २,　योयूयित्वा २;
[1]योनिः,　[2]यूकः-यूका,　[3]यूथः,　[4]युवा-युवतिः,　[5]यूपः,　[6]यूषः,　[7]योषा,
[8]यवागूः।

**(1346) "यु जुगुप्सायाम्"** (X-चुरादिः-1711. अक. सेट्. आत्म.)

**आकुस्मीयः।**

'**यावयेत जुगुप्सायाम्**, मिश्रणे यौति, बन्धने।
युनाति च युनीते च........॥' (श्लो. 24) इति **देवः**।

"—'**युजु** कुत्सायाम्' **इत्येके**—योजयते" इति **क्षीरस्वामी**।

यावकः-विका,　युयावयिषकः-षिका,　यावयिता-त्री,　युयावयिषिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कोटयति**वत् (205) ज्ञेयानि। ल्युटि—यावनम्[A]।

**(1347) "युगि वर्जने"** (I-भ्वादिः-156. सक. सेट्. पर.)

युङ्गकः-ङ्गिका,　युङ्गकः-ङ्गिका,　युयुङ्गिषकः-षिका,　योयुङ्गकः-ङ्गिका; युङ्गिता-त्री,　युङ्गयिता-त्री,　युयुङ्गिषिता-त्री,　योयुङ्गिता-त्री;　इत्याकाराणि रूपाणि यथासम्भवं भौवादिक**कुण्ठति**वत् (209) ज्ञेयानि। [B]युङ्गितः।

---

1. 'वहिश्रि**यु**—' [द. उ. 1-21] इति निप्रत्ययः। युवन्त्यस्यामिति **योनिः**।
2. 'अजि**युयु**—' [द. उ. 3-24] इति कन्प्रत्ययः, धातोः दीर्घश्च भवति। **यूकः**=क्षुद्रजन्तुः।
3. 'तिथपृष्ठगूथ**यूथ**प्रोथाः' [द. उ. 6-37] इति थक्प्रत्यये निपात्यते। निपातनादेव धातोर्दीर्घश्च। **यूथः**=गजादिसंघातः।
4. 'कनिन् **यु**वृषि—' [द. उ. 6-51] इति कनिन्प्रत्ययः। यौति, यूयते वा इति **युवा**। स्त्रियाम्, 'यूनस्तिः' (4-1-77) इति तिप्रत्यये **युवतिः**।
5. 'कुसु**युभ्य**श्च' [द. उ. 7-5] इति पप्रत्ययः दीर्घश्च। **यूपः**=यज्ञपशुबन्धनकाष्ठः।
6. 'मूङ्य्वोर्लोपश्च' [द. उ. 9-17] इति ऊषन्प्रत्यये, धातूकारस्य लोपे च रूपम्। **यूषः**=व्यञ्जनम्। मण्डम् च इति **केचित्**।
7. औणादिके [द. उ. 9-21] सप्रत्यये रूपम्। **योषा**=योषित्।
8. 'सृ**यु**—' [द. उ. 10-4] इत्यागूच्प्रत्यये रूपम्। **यवागूः**=पेया।
A. '**निर्यावनः** कुयुधि कुस्मयमान आस्त॥' धा. का. 3-37.
B. 'रिङ्गत्प्रियालिङ्गितभृङ्गसङ्गमत्वङ्गत्प्रसूनं रविताप**युङ्गितम्**॥' धा. का. 1-21.

(1348) **"युच्छ प्रमादे"** (I-भ्वादिः-214. अक. सेट्. पर.)

[1]युच्छकः-च्छिका, युच्छकः-च्छिका, युयुच्छिषकः-षिका, योयुच्छकः-च्छिका ; युच्छिता-त्री, युच्छयिता-त्री, युयुच्छिषिता-त्री, योयुच्छिता-त्री ; [2]प्रयुट्-प्रयुड्-प्रयुशौ-[A]प्रयुशः ; इतीमानि सर्वाण्यपि रूपाणि दैवादिक**क्लिश्यति**वत् (287) ज्ञेयानि ।

(1349) **"युज समाधौ"** (IV-दिवादिः-1177. अक. अनि. आत्म.)

**समाधिः** = चित्तवृत्तिनिरोधः ।

'युनक्ति युङ्क्ते योगार्थे, **समाधौ युज्यते श्यनि** ।
युजेः संयमनार्थे वा णौ योजयति योजति ॥' (श्लो. 64) इति **देवः** ।

योजकः-जिका, योजकः-जिका, युयुक्षकः-क्षिका, योयुजकः-जिका ; योक्ता-योक्त्री, योजयिता-त्री, युयुक्षिता-त्री, योयुजिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि रौधादिक**भुनक्ति**वत् (1162) ज्ञेयानि । [3]प्रयुक्-प्रयुजौ-प्रयुजः, [B]युक्, [4]युक्, [5]योगी, [6]युक्तः, युज्यमानः, योजयमानः,

---

1. उपदेशेऽयं धातुः **युछ** इत्येव पठितः । 'छे च' (6-1-73) इति तुकि, तस्य श्चुत्वेन चकारे च **युच्छ** इति सम्पद्यते । अत्र ण्वुल्निमित्तको गुणः कथं न ? इति न शङ्क्यम्, अन्तरङ्गत्वेन प्रथमं तुकि लघूपधत्वाभावात् गुणो न । न चात्र 'वार्णादाङ्गं बलीयः' (परि-56) इति वचनात् प्रथमं गुणस्यापत्तिः कार्या ; भिन्नाश्रयत्वात्, इत्यन्यत्र विस्तरः ।
2. क्विपि, 'च्छ्वोः शूठ्—' (6-4-19) इति सतुक्कस्य छकारस्य शकारे, तस्य 'व्रश्च—' (8-2-36) इत्यादिना षकारे, जश्त्वचर्त्वयोश्च रूपमेवम् ।
3. 'सत्सूद्विषद्रुहदुहयुज—' (3-2-61) इत्यादिना सोपसर्गात् क्विपि रूपमेवम् । अत्र निरुपसर्गादपि क्विप्, सूत्रे 'अपि' शब्दस्वारस्यात् । **युक्-युजौ-युजः**, इत्यपि साधुः ।
4. स्त्रियां भावादौ सम्पदादित्वेन (वा. 3-3-108) क्विपि रूपम् । '**युज**मापन्ना महर्षयः' इति **धातुवृत्ता**वुदाहृतम् । अत्र **युजम्**=योगमित्यर्थः । **काशिका** (7-1-71) द्रष्टव्याऽत्र ।
5. 'सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदह-परिमुहदुषद्विषद्रुहदुहयुज—' (3-2-142) इत्यादिना यथासम्भवं तच्छीलतद्धर्मतत्साधुकारिष्वर्थेषु घिनुण्प्रत्यये, 'चजोः कु घिण्ण्यतोः' (7-3-52) इति कुत्वम् ।
6. धातोरस्याकर्मकत्वात् 'क्तोऽधिकरणे च ध्रौव्य—' (3-4-76) इति क्तप्रत्ययः ।

A. 'अहूर्गचित्ताः परिमूर्च्छितव्रताः स्फूर्णमया **अप्रयुशः** कृतोञ्छनाः ।' धा.का. 1.29.
B. 'कंसानुरोध्यणनहृन्मतिम**द्युग**र्च्यः......॥' धा. का. 2. 62.



[1]योगः-परियोगः-पलियोगः, [2]युगम्, [3]संयुगः, [A]युयुक्षमाणः, इतीमानि रूपाण्यस्माद् भवन्तीति विशेषः ।

(1350) **"युज संयमने"** (X-चुरादिः-1807. सक. सेट्. उभ.)

**आधृषीयः** ।

'**योगे** च इति **द्रुमे** ।' इति **धा. का. व्याख्या** (3-48) ।
'युजेः संयमनार्थे वा णौ योजयति योजति ॥' (श्लो. 64) इति **देवः** ।

योजकः-जिका, युयोजयिषकः-षिका, योजकः-जिका, [4]युयुक्षकः-क्षिका, योयुजकः-जिका ; योजयिता-त्री, युयोजयिषिता-त्री, युयुक्षिता-त्री ; योयुजिता-त्री ; इत्यादिकानि सर्वाण्यपि रूपाणि चौरादिक**जोषयति**वत् (613) ज्ञेयानि । [B]योजयन् । योजना मानविशेषः ।

(1351) **"युजिर् योगे"** (VII-रुधादिः-1444. सक. अनि. उभ.)

'**युनक्ति युङ्क्ते योगार्थे**, समाधौ युज्यते श्यनि ।' (श्लो. 64) इति **देवः** ।

योजकः-जिका, योजकः-जिका, युयुक्षकः-क्षिका, योयुजकः-जिका ; योक्ता-योक्त्री, योजयिता-त्री, युयुक्षिता-त्री, योयुजिता-त्री ; इत्यादीनि समस्तान्यपि रूपाणि रौधादिक**भुनक्ति**वत् (1162) ज्ञेयानि ।

---

1. 'हलश्च' (3-3-121) इति संज्ञायां घञि, कुत्वम् । **योगः**=चित्तवृत्तिनिरोधः । '**योगे** च' (वा. 8-2-22) इति वचनात् '**परि**' इत्युपसर्गस्थस्य रेफस्य पाक्षिकं लत्वम् ।
2. संज्ञायां घञि, कुत्वे, उञ्छादि (6-1-160) पाठाद् गुणो न । **युगम्**=चेतनाचेतनानां समाधिः ।
3. संज्ञायां घञि, कुत्वे, प्रतिजनादिषु (4-4-99) पाठात् गुणो न । **संयुगः**=समरः ।
4. आधृषीयत्वेन णिज्विकल्पः । णिजभावपक्षे, 'त्यजिं यजिं **युजि**रुचिसञ्जिमज्जतीन्—' (भाष्ये 7-2-10) इति **व्याघ्रभूतिकारिका**यामुपादानात् तत्र च सामान्येन दैवादिक-रौधादिकयोः, णिजभावपक्षे औत्सर्गिकशब्विकरणस्यास्य च ग्रहणस्य व्याख्यातृभिरुपादानादस्यानिट्त्वमिति ज्ञेयम् । तेन सन्नन्ते रूपमेवम् ।

A. 'वाचंयमान् स्थण्डिलशायिनश्च **युयुक्षमाण**ाननिशं मुमुक्षून् ।' भ. का. 3. 41.
B. 'कृष्णोऽथ बाहुयुगलैर्बहु **योजयन्तम्**........।' धा. का. 3. 48.

[1]युञ्जन्-ती, [2]युञ्जानः, [3]प्रयुञ्जानः-उपयुञ्जानः, [4]नियुञ्जानः-वियुञ्जानः-उद्युञ्जानः, [5]योगी, [6]युङ्[A]-युञ्जौ-युञ्जः, [7]अश्वयुक्-अश्वयुग्-[B]मौञ्जीयुक्-युजौ-युजः, [8]युग्यम्-[C]-योग्यम्, [9]प्रयोज्यः-नियोज्यः, [10]योक्त्रम्,

---

1. शतरि, '**रुधादिभ्यः—**' (3-1-78) इति विकरणप्रत्यये श्नमि, तस्य च मित्त्वेनान्त्यादचः परत्वेन प्राप्तौ, 'श्नसोरल्लोपः' (6-4-111) इत्यकारलोपे नकारस्यानुस्वारपरसवर्णयोरेवं रूपम्। एवमेव शानजन्तेऽपि प्रक्रियोह्या।
2. शानजन्ते, 'ताच्छील्यवयोवचनशक्तिषु—' (3-2-129) इति चानशन्तेऽपि तुल्यं रूपम्।
3. '**प्रोपाभ्यां, युजे**रयज्ञपात्रेषु' (1-3-64) इति अकर्त्रभिप्रायेऽपि क्रियाफले आत्मनेपदम्-शानच्। 'द्वन्द्वं न्यञ्चि पात्राणि **प्रयुनक्ति**' इत्यादि**कल्पसूत्र**-प्रयोगेषु यज्ञविषयकत्वात् परस्मैपदमेव।
4. 'स्वराद्यन्तोपसृष्टादिति वक्तव्यम्' (वा. 1-3-64) इति वचनात् अत्रापि शानच्। स्वरः=अच्, आदौ अन्ते यस्योपसर्गस्य तदुपसृष्टादपि **युजे**स्तङानौ—इति **वार्तिकार्थः**।
5. 'सम्पृच—' (3-2-142) इत्यादिना घिनुणि, कुत्वे च रूपमेवम्।
6. 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चु**युजि**क्रुञ्चां च' (3-2-59) इति क्विन्प्रत्ययः। '**युजे**रसमासे' (7-1-71) इति नुमि, 'क्विन्प्रत्ययस्य कुः' (8-2-62) इति कुत्वे संयोगान्तलोपे च **युङ्** इति सम्पद्यते।
7. 'सत्सूद्विष—' (3-2-61) इत्यादिना सोपपदात् क्विपि, रूपमेवम्। '**युजेरसमासे**' (7-1-71) इत्यत्र 'असमासे' इत्युक्तत्वात् न नुम्। **अश्वयुक्**=नक्षत्रविशेषः। अश्वेन युनक्ति इति वृत्तिः। नात्रावयवार्थेऽभिनिवेशः कार्यः, 'रथेन तरतीति रथन्तरम्=साम' इत्यादिष्विव व्युत्पत्तिप्रदर्शनमेतत्।
8. '**युग्यं** च पत्रे' (3-1-121) इति पत्रे=वाहनेऽभिधेये क्यप्, कुत्वं च निपात्यते। नात्र नपुंसकलिङ्गस्य निपातने विवक्षितत्वम्; तेन '**युग्या—गौः**' इत्यादयोऽपि साधवः। अन्यत्र, ण्यति, कुत्वे **योग्यम्** इति सिद्ध्यति।
9. '**प्रयोज्यनियोज्यौ** शक्यार्थे' (7-3-68) इति शक्यार्थे प्रपूर्वकस्य निपूर्वकस्य चास्य ण्यति कुत्वाभावो निपात्यते। अन्यत्र **नियोग्यः, प्रयोग्यः** इति साधुः।
10. 'दाम्नीशसयु**युज**—' (3-2-182) इत्यादिना करणे त्रप्रत्ययः। गुणे कुत्वे च **योक्त्रम्** इति सिद्ध्यति।

A. 'भ्रातरं **युङ्** भियः संख्ये घोषेणापूरयन् दिशः॥' भ. का. 6. 119.

B. 'पिशङ्ग**मौञ्जीयुज**मर्जुनच्छविं वसानमेणाजिनमञ्जनद्युति।' शि. व. 1. 6.

C. 'दृष्ट्वा तामभुचद् रामो **युग्य**ायात इव श्रमम्॥' भ. का. 6. 63.



[1]अनुयोगी-प्रतियोगी, [2]योगः-परियोगः-पलियोगः-प्रयोगः-वियोगः-अनुयोगः, युक्तिः-[3]वाचोयुक्तिः, [4]युगम्-संयुगम्, [5]गोयुगः, [6]युग्मम् इतीमानि रूपाण्यस्य विशेषेण भवन्ति।

## (1352) "युञ् बन्धने" (IX-क्र्यादिः-1479. सक. अनि. उभ.)

'यावयेत जुगुप्सायाम्, मिश्रणे यौति, **बन्धने**।
**युनाति च युनीते च** ........॥' (श्लो. 24) इति **देवः**।

यावकः-विका, यावकः-विका, [7]युयूषकः-षिका, [8]यियावयिषकः-षिका, योयूयकः-यिका; योता-योत्री, यावयिता-त्री, युयूषिता-यियावयिषिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कवति**वत् (198) ज्ञेयानि।

---

1. 'भविष्यति गम्यादयः' (3-3-3) इत्यत्र पाठात् भविष्यदर्थे औणादिके णिनिः, तत्रैव पाठात् कुत्वं चेति ज्ञेयम्।
2. संज्ञायाम् घञि कुत्वे **योगः** इति भवति। '**योगे** च' (वा. 8-2-22) इति 'परि' इत्यत्र रेफस्य लत्वं विकल्पेनेति ज्ञेयम्।
3. क्तिनि-**युक्तिः** इति सिध्यति। आक्रोशे गम्यमाने वाचः परस्मात् युक्तिशब्दे सति वाच इत्यत्र षष्ठ्याः, '...**वा**ग्दिक्पश्यद्भ्यो **युक्ति**दण्डहरेषु' (वा. 6-3-21) इत्यलुक्। **वाचोयुक्तिः**=वाग्जालः, वृथा जृम्भणमिति यावत्।
4. घञि, प्रतिजनादिषु (4-4-99), उञ्छादिषु (6-1-160) च पाठात् गुणो नेति ज्ञेयम्।
5. "गां युनक्तीति **गोयुगः** 'कर्मण्यण्' (3-2-1), न्यङ्क्वादिः (7-3-53)।" इति **क्षीरस्वामी**। 'अणि गुणाभावो न्यङ्क्वादित्वादेवं।' इति **क्षीरतरङ्गिणी-टीका**। वस्तुतः इदं चिन्त्यम्। यतः, 'द्वित्वे **गोयुगच्**' (वा. 5-2-29) इति **गोयुगच्** इत्यस्य प्रत्ययत्वेन **भाष्यवार्तिकादिषु** स्मरणात्।
6. '**युजि**रुचितिजां कुश्च' [द. उ. 7-33] इति मक्प्रत्यये, कुत्वे च रूपम्। युनक्तीति **युग्मम्**=मिथुनम्।
7. 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृ**यूर्णु**भरज्ञपिसनाम्' (7-2-49) इत्यत्र ऊर्णुसाहचर्यात्, 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' (परि-83) इति वचनबलाच्च नास्य धातोर्ग्रहणमिति अनिट्त्वमेवास्येति बोध्यम्। तेन सन्नन्ते सर्वत्र सनः कित्त्वे दीर्घे च एवं रूपम्।
8. णिजन्तात् सनि, 'ओः पुयण्ज्यपरे' (7-4-80) इत्यभ्यासस्येकारोऽत्रापि धातौ भवतीति प्रदर्शनार्थं तत्र रूपमुपात्तम्।

[1]युनन्[A]-ती, युनानः, इति सार्वधातुके रूपमिति विशेषः ।

**(1353) "युत्‌ भासने"** (I-भ्वादिः-31. अक. सेट्. आत्म.)

योतकः-तिका, योतकः-तिका, युयोतिषकः-युयुतिषकः-षिका, योयुतकः-तिका ; योतिता-त्री, योतयिता-त्री, युयोतिषिता-युयुतिषिता-त्री, योयुतिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककोकतिवत् (197) ज्ञेयानि । [2]वियोयुतत्[B]-ती ।

**(1354) "युध सम्प्रहारे"** (IV-दिवादिः-1173. अक. अनि. आत्म.)

'**सम्प्रहारः**=हननम् ।' इति **क्षीरस्वामी** ।

योधकः-धिका, योधकः-धिका, युयुत्सकः-त्सिका, योयुधकः-धिका ; योद्धा-योद्ध्री, योधयिता-त्री, युयुत्सिता-त्री, योयुधिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि दैवादिकक्षुध्यतिवत् (315) ज्ञेयानि । [3]राजयुध्वा, [4]सहयुध्वा,[C] [5]चापयोधी, [6]प्रतियोधी, [7]युध्यमानः,

---

1. शतरि, '**क्र्यादिभ्यः—**' (3-1-81) इति श्नाप्रत्यये, 'श्नाभ्यस्तयोरातः' (6-4-112) इत्याकारलोपे, प्रत्ययस्य ङित्त्वेनाङ्गस्य गुणनिषेधे चैवं रूपम् । शानजन्तेऽपि प्रक्रियैवमूह्या ।
2. यङ्लुगन्ताच्छतरि रूपमेवम् । यङ्लुक्यपि द्विर्वचने कृते अभ्यासे गुणः । 'नाभ्यस्ताच्छतुः' (7-1-78) इति नुम्निषेधः ।
3. '**राजनि युधिकृञः**' (3-2-95) इति कर्मण्युपपदे क्वनिप्प्रत्ययः । राजानं योधितवान् **राजयुध्वा** । अत्रान्तर्भावितण्यर्थाद् धातोः सकर्मकत्वमिति बोध्यम् । 'भूते' (3-2-84) इत्यधिकारे प्रत्ययस्यास्य विधानात् भूतकालिकत्वम् । स्त्रियाम्, 'वनो न हशः—' (वा. 4-1-7) इति निषेधाद् ङीब्रेफौ न ।
4. 'सहे च' (3-2-96) इत्यनेन सहशब्द उपपदे धातोः क्वनिप् । सह योधितवान् **सहयुध्वा** । [जातिविशेषः ।
5. 'बहुलमाभीक्ष्ण्ये' (3-2-81) इति णिनिः । **चापयोधी** = किरातादि-
6. गम्यादिषु (3-3-3) पाठात् भविष्यत्काल औणादिको णिनिः । **प्रतियोधी** = यः प्रतिद्वन्द्वितया युद्धं करिष्यति स उच्यते ।
7. शानचि दिवादित्वाच्छ्यनि रूपमेवम् । **युध्यति** इत्यादिप्रयोगाणामुपपत्तिस्तु—'सुप आत्मनः क्यच्' (3-1-8) इति क्यजन्तत्वेन, दिवादेरावृत्कृतत्वेनाकृतिगणत्वाद्वा साधुत्वमिति बोध्यम् ।

A. 'मोदस्कुतोऽथ कबरीं **प्रयुनन्** स रामः....॥' धा. का. 3.5.
B. 'पृदाकुजित् वेगमयत्नतो ययौ **वियोयुतत्**काननजोतिनाऽध्वना ॥' धा. का. 1.5.
C. 'संवित्तः **सहयुध्वानौ** तच्छक्ति खरदूषणौ ।' भ. का. 5.37.



[1]योधः-यौधः, [2]आयुधम्, [3]युद्धम्, [4]ईषद्योधनः-दुर्योधनः-सुयोधनः, [5]ईषद्योधः-दुर्योधः-सुयोधः, [6]युयुधानः, [7]योधयन्-न्ती, [8]युधानः, [9]युध्मः, [A]युयुत्सा, आयोधनम्, इत्यादीनि रूपाण्यस्माद् भवन्तीति विशेषः ।

**(1355) "युप विमोहने"** (IV-दिवादिः-1235. सक. सेट्. पर.)

'**युपु—**' इति[10]**धातुकाव्ये** (2-67) पाठः ।

---

1. प्रज्ञादिषु (5-4-38) **योध**शब्दस्य पाठात् इगुपधलक्षणं कप्रत्ययं बाधित्वा, पचादिपाठपरिकल्पनेनाच् । स्वार्थे तद्धितेऽणि विकल्पेन प्रवृत्ते तु **योधः—यौधः** इति रूपद्वयस्योपपन्नत्वं ज्ञेयम् ।
2. आदाय युध्यन्तेऽनेनेति **आयुधम्** । 'घञर्थे कविधानं स्थास्नापाव्यधिहनि**युध्य**र्थम्' (वा. 3-3-58) इति वचनात् घञर्थे करणे कप्रत्यये, कित्त्वेन गुणनिषेधे च रूपमेवम् ।
3. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां क्तप्रयये धत्व-जश्त्वयोश्च रूपम् ।
4. ईषदाद्युपपदेषु, 'भाषायां शासि**युधि**—' (वा. 3-3-130) इति खलपवादो युच्प्रत्ययः । अत्रापि अन्तर्भावितण्यर्थाद्धातोः, विवक्षया वा सकर्मकत्वं बोध्यम् । कर्मणि प्रत्ययोऽयम् ।
5. 'भाषायां शासि**युधि**—' (वा. 3-3-130) इति युच् वा—इति **प्रक्रियाकौमुदी** । तन्मते युजभावपक्षे खल्प्रत्यये रूपाणामेषां सिद्धिर्बोध्या ।
6. 'बाहुलकादानचि द्वित्वम् ।' इति **मा. धा. वृत्तिः** । बाहुलकादेव प्रत्ययस्य कित्त्वमपि बोध्यम् । तेन न गुणः ।
7. 'बुध**युध**—' (1-3-86) इति कर्तृगामिन्यपि क्रियाफले ण्यन्तात् परस्मैपदमेव । "ये चात्राकर्मकाः, तेषाम्, 'अणावकर्मकात् चित्तवत्कर्तृकात्' (1-3-88) इत्येव परस्मैपदे सिद्धे वचनमिदम्—अचित्तवत्कर्तृकार्थम् ॥" इति **काशिका** (1-3-86) अत्रानुसन्धेया ।
8. '**युधि**बुधिदृशिभ्यः किच्च' [द. उ. 5-33] इत्यानच्प्रत्यये, तस्य कित्त्वेन गुणनिषेधे च **युधानः** इति सिद्ध्यति । **युधानः**=रिपुः ।
9. 'इषि**युधि**—' [द. उ. 7-31] इति मक्प्रत्ययः । युध्यतेऽस्मिन् राजेति **युध्मः** = शरत्कालः ।
10. एतत्पक्षे क्त्वायाम्, '**उदितो** वा' (7-2-56) इति इड्विकल्पः । इट्पक्षे 'न क्त्वा सेट्' (1-2-18) इत्यमुं योगं परत्वात्, प्रतिपदविधित्वाच्च बाधित्वा, 'रलो व्युपधात्—' (6-4-16) इति कित्त्वविकल्पे **युपित्वा—योपित्वा,** इति रूपद्वयम् । इडभावपक्षे तु **युप्त्वा,** इत्यपि रूपम् । वस्तुतस्तु उदित्त्वमस्य न प्रामाणिकम्—प्रसिद्धेषु धातुपाठकोशेषु **युप** इत्येव पाठात् ।

A. '**युयुत्सा**रहितो रामं ममारापहरन् वने ॥' भ. का. 9.125.

योपकः-पिका, योपकः-पिका, युयुपिषकः-युयोपिषकः-षिका, योयुपकः-पिका, योपिता-त्री, योपयिता-त्री, युयुपिषिता-युयोपिषिता-त्री, योयुपिता-त्री; इत्यादिकानि सर्वाण्यपि रूपाणि दैवादिककुप्यतिवत् (224) ज्ञेयानि। [A]योप्यम्।

(1356) "**यूष हिंसायाम्**" (I-भ्वादिः-680. सक. सेट्. पर.)

यूषकः-षिका, यूषकः-षिका, युयूषिषकः-षिका, योयूषकः-षिका; यूषिता-त्री, यूषयिता-त्री, युयूषिषिता-त्री, योयूषिता-त्री; इत्याकाराणि सर्वाण्यपि रूपाणि भौवादिकचूषतिवत् (552) ज्ञेयानि। घञि—यूषः= मांसरसविशेषः।

(1357) "**यौट् बन्धे**" (I-भ्वादिः-291. सक. सेट्. पर.) [अ]

'—सम्बन्धे। सम्बन्धः=श्लेषः।' इति **क्षीरस्वामि-मैत्रेयादयः**। '**यौडृ**—' इति **शाकटायन-हेमचन्द्र**प्रभृतयः पठन्ति। एतत्सर्वं '**पाणिनिधातुपाठसमीक्षा**' नामकग्रन्थदर्शनेनास्माभिर्विवेचितमिति ज्ञेयम्। यौटकः-टिका, यौटकः-टिका, युयौटिषकः-षिका, योयौटकः-टिका; यौटिता-त्री, यौटयिता-त्री, युयौटिषिता-त्री, योयौटिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककेपतिवत् (261) ज्ञेयानि। [B]यौटितः।

---

A. 'किञ्चा**योप्य**विरोपिलोपक न वा लोभादिसंक्षोभिता।' धा. का. 2-67.

B. 'प्रशौटदुस्रागण**यौटिता**न्तिकान् मेटद्व्रूषाम्रेडितघोषमेदुरान्।' धा. का. 1-39.

[अ] अत्र **क्षीरतरङ्गिण्या**मितः पूर्वम्—'**येषृ प्रयत्ने**' इति कश्चन धातुः भ्वादिषु पठितः। प्रसिद्धेषु धातुपाठकोशेषु '**एषृ**—' इत्येव पाठस्योपलम्भात्, तुल्यश्रवणनिमित्तकोऽयं सम्पातायातः पाठ इति कृत्वाऽस्माभिरयं परित्यक्त इति बोध्यम्।



(1358) "**रक आस्वादने**" (X-चुरादिः-1737. सक. सेट्. उभ.)

'—आसादने' इति **दुर्ग**सम्मतपाठ इति **क्षीरतरङ्गिणी**तो ज्ञायते। [1]**क्षीरस्वामी** '**रग**—' इति पठति। '**रघ**—' इति **केचित्** पठन्ति। राककः-किका, रिराकयिषकः-षिका; राकयिता-त्री, रिराकयिषिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिककाणयतिवत् (159) ज्ञेयानि। [A]राकितः।

(1359) "**रक्ष पालने**" (I-भ्वादिः-658. सक. सेट्. पर.)

रक्षकः-क्षिका, रक्षकः-क्षिका, रिरक्षिषकः-षिका, रारक्षकः-क्षिका; रक्षिता-त्री, रक्षयिता-त्री, रिरक्षिषिता-त्री, रारक्षिता-त्री; इत्यादीनि समस्तान्यपि रूपाणि भौवादिकतक्षतिवत् (691) ज्ञेयानि। [2]निरक्षी, [3]प्रतिहाररक्षी,[B] [4]रक्ष्णः,[C] रक्षणः, [5]रक्षः-राक्षसः, [6]रक्षिता,

---

1. **क्षीरस्वामी** '**रग**—' इति पठित्वा "अन्यत्रार्थे घटादिः—**रगे** शङ्कायाम्... **रगयति**।" इत्याह। तेन घटादिषु (भ्वादौ) '**रगे शङ्कायाम्**' इति यत्सर्वैः पठ्यते, तस्यार्थविशेषप्रयुक्तं घटादिपाठं मन्वानः, चौरादिकत्वमप्यङ्गीकरोतीति ज्ञायते।

2. '**रक्ष**श्रुवसवपशां नौ' (ग. सू. 3-1-134) इति ग्रह्यादिषु वचनात् कर्तरि निपूर्वकादस्माण्णिनिः।

3. प्रतिहारं=गृहाङ्कणदेशविशेषं रक्षतीति **प्रतिहाररक्षी**। 'कर्मण्यण्' (3-2-1) इत्यण्प्रत्यये स्त्रियाम् अणन्तलक्षणे ङीपि रूपमेवम्।

4. 'यजयाचयतविच्छप्रच्छ**रक्षो** नङ्' (3-3-90) इति भावे नङ्प्रत्ययः। 'नेड् वशि कृति' (7-2-8) इतीण्निषेधः।

5. 'असुन्' [द. उ. 9·49] इत्यसुन्प्रत्यये रूपम्। रक्ष एव **राक्षसः**। प्रज्ञादित्वात् स्वार्थेऽण्प्रत्ययः। अत्रेदमवधेयम्। '**पाणिनीयधातुपाठसमीक्षा**' नामके नव्यग्रन्थे **ऋग्वेदे** (10-68-1) प्रयुक्तं '**रक्षमाणाः**' इति पदमुपादाय 'वेगवदुत्पतने (धातोः) वृत्तिः।' इत्युक्तम्। तदनुसारेणात्र **रक्षोराक्षस**शब्दयोरपि पालनार्थे वृत्तिर्न, अपि तु वेगवदुत्पतने वृत्तिरिति भाति। **शांखायनारण्यके** (7-20) '**रक्षते**' इति प्रयुक्तत्वात्, प्रकृतऋङ्मन्त्रेऽपि **रक्षमाणाः** इति शानजन्तत्वेन प्रयोगाच्च धातोरस्य क्वचित् वेदे उभयपदित्वमपि भवतीति ज्ञायते।

6. ताच्छील्ये 'तृन्' (3-2-135) इति तृन्।

A. 'कृष्णोऽपि नाकिजन**राकित**लाग्यवीर्यः॥' धा. का. 3-41.

B. 'ततो नृपाणां श्रुतवंशवृत्ता पुंवत्प्रगल्भा **प्रतिहाररक्षी**।' रघु. 6.20.

C. '**रक्ष्णं** करोषि कस्मात् त्वं यत्नेनाख्यायतां शुभे।' भ. का. 7.66.

[1]रट्-रक्षौ-रक्षः, गोरक्-गोरग्-गोरक्षौ-गोरक्षः ; इतीमानि रूपाण्यस्माद् भवन्तीति विशेषः ।

**(1360) "रख गत्यर्थः"** (I-भ्वादिः-136. सक. सेट्. पर.)

'सर्पणे' इति **वोपदेवः** ।

राखकः-खिका, राखकः-खिका, रिरखिषकः-षिका, रारखकः-खिका ; रखिता-त्री, राखयिता-त्री, रिरखिषिता-त्री, रारखिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कखति**वत् (141) ज्ञेयानि । शतरि रखन्[A] इति ।

**(1361) "रखि गत्यर्थः"** (I-भ्वादिः-137. सक. सेट्. पर.)

"द्रमिडानाम् रिखिरपि—रिङ्खति" इति **क्षीरस्वामी** ।

**मा. धा. वृत्ता**वपि एवमेव ।

रङ्खकः-ङ्खिका, रङ्खकः-ङ्खिका, रिरङ्खिषकः-षिका, रारङ्खकः-ङ्खिका; रङ्खिता-त्री, रङ्खयिता-त्री, रिरङ्खिषिता-त्री, रारङ्खिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कङ्कति**वत् (140) ज्ञेयानि । [2]प्ररङ्खणम् ।

**(1362) "रगि गत्यर्थः"** (I-भ्वादिः-144. सक. सेट्. पर.)

रङ्गकः-ङ्गिका, रङ्गकः-ङ्गिका, रिरङ्गिषकः-षिका, रारङ्गकः-ङ्गिका ; रङ्गिता-त्री, रङ्गयिता-त्री, रिरङ्गिषिता-त्री, रारङ्गिता-त्री ; इत्यादीनि सर्वाणि रूपाणि भौवादिक**कन्दति**वत् (163) ज्ञेयानि । [3]रङ्गः[B] इति विशेषः ।

---

1. शुद्धाद्धातोः क्विपि संयोगादिलोपे रूपमेवम् । ण्यन्तात् क्विपि तु संयोगान्तलोपे **गोरक्** इति रूपमिति विशेषः ।
2. 'रषाभ्याम्—' (8-4-1) इति णत्वम् । 'इजादेः—' (8-4-32) इति नियमस्तु 'कृत्यचः' (8-4-29) इति प्राप्तस्यैव । तेनात्र न नियमः ।
3. रङ्गन्त्यस्मिन् प्रेक्षकाणां मनांसीति=**रङ्गः** । 'हलश्च' (3-3-121) इति संज्ञायामधिकरणे घञि रूपमेवम् ।

A. '**रखच्छशं रङ्खितरङ्कु रिङ्खितद्विपं लखत्केसरिलङ्खदारवम्** ॥' धा. का. 1-19.

B. 'एखच्चकोरोत्करमिङ्खितं शुकैः प्रेङ्खलतावल्गनरङ्गमण्डपम् ।' धा. का. 1-20.



**(1363) "रगे शङ्कायाम्"** (I-भ्वादिः-785. अक. सेट्. पर.)

**घटादिः** ।

रागकः-गिका, रागकः-गिका, रिरगिषकः-षिका, रारगकः-गिका ; रगिता-त्री, रगयिता-त्री, रिरगिषिता-त्री, रारगिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कखति**वत् (141) बोध्यानि । अस्य धातोः घटादित्वात् 'मितां ह्रस्वः' (6-4-92) इति णौ परतः उपधाया ह्रस्वः । अतः ण्यन्ते रूपाणि सर्वाणि **कखति**वत् (142) बोध्यानि ।

**(1364) "रघि गत्यर्थः"** (I-भ्वादिः-107. सक. सेट्. आत्म.)

रङ्घकः-ङ्घिका, रङ्घकः-ङ्घिका, रिरङ्घिषकः-षिका, रारङ्घकः-ङ्घिका ; रङ्घिता-त्री, रङ्घयिता-त्री, रिरङ्घिषिता-त्री, रारङ्घिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कङ्कति**वत् (140) बोध्यानि ।

**(1365) "रघि भाषार्थः"** (X-चुरादिः-1796. सक. सेट्. उभ.)

**आस्वदीयः** । '—भासार्थः' इति **क्षीरस्वामी** ।

रङ्घकः-ङ्घिका, रिरङ्घयिषकः-षिका ; रङ्घयिता-त्री, रिरङ्घयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कण्ठयति**वत् (150) ज्ञेयानि ।

**(1366) "रच प्रतियत्ने"** (X-चुरादिः-1865. अक. सेट्. उभ.)

**कथादिः, अदन्तश्च** ।

'—कृत्याम्' इति **वोपदेवः** इति **पा. धा. स.** । '–कृत्यर्थे च इति द्रुमे' इति **धा. का.** (3-54) ।

[1]रचकः-चिका, रिरचयिषकः-षिका ; रचयिता-त्री, रिरचयिषिता-त्री ; इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**कथयति**वत् (162) ज्ञेयानि । ल्यपि-[2]आरचय्य इति । क्तप्रत्यये—विरचितः । युचि-[3]रचना ।

---

1. धातोरस्यादन्तत्वेन अल्लोपस्य स्थानिवद्भावात् उपधावृद्धिः न भवति ।
2. ल्यपि, 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशे रूपमेवम् ।
3. 'ण्यासश्रन्थो युच्' (3-3-107) इति स्त्रियां युचि रूपमेवम् ।

(1367) "**रट परिभाषणे**" (I-भ्वादिः-297. अक. सेट्. पर.)

राटकः-टिका, राटकः-टिका, रिरटिषकः-षिका, रारटकः-टिका ; - रटिता-त्री, राटयिता-त्री, रिरटिषिता-त्री, रारटिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कठति**वत् (148) बोध्यानि। [1]परिराटी, [2]परिराटकः, [3]संरटितम्-[A]तः-तवान्, इमानि रूपाणि अस्य धातोः विशेषः।

(1368) "**रठ परिभाषणे**" (I-भ्वादिः-334. अक. सेट्. पर.)

**बालमनोरमायां** तु 'रट—' 'रठ **इत्येके**' इति दृश्यते।

राठकः-ठिका, राठकः-ठिका, रिरठिषकः-षिका, रारठकः-ठिका ; रठिता-त्री, राठयिता-त्री, रिरठिषिता-त्री, रारठिता-त्री ; इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**कठति**वत् (148) ज्ञेयानि। शतरि-[B]रठन्-न्ती।

(1369) "**रण शब्दार्थः**" (I-भ्वादिः-445. 795. अक. सेट्. पर.)[अ] **घटादिः**।

राणकः-णिका, राणकः-णिका-[4]रणकः-णिका, रिरणिषकः-षिका, रंरणकः-णिका ;

1. 'संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिप**परिरट**—' (3-2-142) इत्यादिना तच्छीलादिषु कर्तृषु घिनुण्प्रत्यये रूपम्।
2. 'निन्दहिंसक्लिशखादविनाशपरिक्षिप**परिरट**—' (3-2-146) इत्यादिना तच्छीलादिषु कर्तृषु वुञ्प्रत्यये रूपमेवम्।
3. 'नपुंसके भावे क्तः' (3-3-114) इति भावे क्तप्रत्ययः।
4. अथ **गता**वर्थे 'घटादयो मितः' (ग. सू. भ्वादिः) इति मित्संज्ञकः। मित्संज्ञकत्वात् 'मितां ह्रस्वः' (6-4-92) इति णौ परतः उपधायाः ह्रस्वो भवति। एवं घटादित्वपक्षे ण्यन्ते सर्वत्र प्रक्रियोह्या। अन्यत्रार्थे **राणयिता-त्री**, इत्यादीनि रूपाणि यथायथमूह्यानि।

A. 'अम्लेटकैश्चाकटुचाटुभाषितैररटैः पटत्**संरटितान्** जनोत्करैः॥' धा. का. 1. 39.

B. 'वनाश्रयत्वेऽपि सकाठपर्यठद्**रठन्**मृगालीहठकर्मवर्जितान्।' धा. का. 1.44.

[अ] अस्य धातोर्घटादित्वं गत्यर्थकत्वे **भोजादि**सम्मतम्। **क्षीरस्वामिप्रभृतयो**ऽनुवदन्ति च। **पाणिनि**सम्मतिरत्र नेत्यपि ज्ञेयम्।



रणिता-त्री, राणयिता-रणयिता-त्री, रिरणिषिता-त्री, रंरणिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कणति**वत् (157) ज्ञेयानि। [1]रणः, रणरणकः[2] इमानि रूपाण्यधिकान्यत्रेति विशेषः। [A]रणयन्-न्ती।

(1370) "**रद विलेखने**" (I-भ्वादिः-53. सक. सेट्. पर.)

'**विलेखनम्**=उत्पाटनम्' इति **क्षीरस्वामी**। '**विलेखने**, तच्च विदारणम्, क्षोभणं वा' इति **धा. का.** (1.8)। **भेदनम्** इति **मा. धा. वृत्तिः**।

रादकः-दिका, रादकः-दिका, रिरदिषकः-षिका, काररदकः-दिका ; रदिता-त्री, रादयिता-त्री, रिरदिषिता-त्री, काररदिता-त्री ; इत्यादिकानि समस्तान्यपि रूपाणि भौवादिक**कचति**वत् (144) ज्ञेयानि। [3]रदनः, [4]रदः, [B]रदन्-न्ती, इतीमानि रूपाण्यस्माद् भवन्ति।

(1371) "**रध हिंसासंराद्ध्योः**" (IV-दिवादिः-1193. सक.सेट्.पर.)

'रध हिंसायाम्' इत्येव **प्रौढमनोरमादिषु** पाठः। '—हिंसासंसिद्ध्योः' इति **काशिकायां** (7-2-45) दृष्टः पाठः।

1. रणन्त्यस्मिन्निति विग्रहे 'वशि**रण्यो**रुपसंख्यानम्' (वा. 3-3-58) इति अकर्तरि च कारके अप्प्रत्यये रूपमेवम्। घञोऽपवादः। **रणः**=यज्ञः, संग्रामश्च।
2. 'घञर्थे कविधानम्' (वा. 3-3-58) इति कप्रत्यये 'कृञादीनां के द्वे भवतः' (वा. 6-1-12) इति द्विर्वचने संज्ञायां कनि च रूपमेवम्। पृषोदरादित्वात् हलादिशेषाभावोऽभ्यासस्याकारश्च। **रणरणकः**=हृल्लेखः।
3. नन्द्यादेराकृतिगणत्वेन तत्र (3-1-134) पाठात् कर्तरि ल्युः। **रदनः**=दन्तः। 'करणाधिकरणयोश्च' (3-3-117) इति ल्युटि रूपस्यास्य निष्पत्ति**र्माधवधातुवृत्तौ** यद्यपि प्रदर्शिता, तथापि तत्र नपुंसकाधिकारत्वात् **क्षीरस्वामि**प्रदर्शिता (कर्तरि) व्युत्पत्तिरेव ज्यायसीति ज्ञेयम्।
4. पचादि (3-1-134) पाठात् कर्तर्यच्प्रत्यये रूपमेवम्।

A. 'अगन्मनीषः कणयन्मुकुन्दमस्मान्वियोगं **रणयन्** स दूतः।' धा. का. 2. 9.

B. 'पलान्यखाद्यानि खदन् बदद्वपुः गदन् अवाच्यानि **रदन्** सतां मनः।' धा. का. 1. 8.

[1]रन्धकः-न्धिका, रन्धकः-न्धिका, [2]रिरधिषकः-रिरत्सकः-त्सिका, रारधकः-धिका ;

रधिता-[3]रद्धा-रद्ध्री, रन्धयिता-त्री, रिरधिषिता-रिरत्सिता-त्री, रारधिता-त्री ;

[4]रध्यन्-न्ती, रन्धयन्-न्ती, रिरधिषन्-रिरत्सन्-न्ती ; —

रधिष्यन्-[5]रत्स्यन्-न्ती-ती, रन्धयिष्यन्-न्ती-ती, रिरधिषिष्यन्-रिरत्सिष्यन्-न्ती-ती ;

व्यतिरध्यमानः, रन्धयमानः, व्यतिरिरधिषमाणः-व्यतिरिरत्समानः, रारध्यमानः ;

व्यतिरधिष्यमाणः-व्यतिरत्स्यमानः, रन्धयिष्यमाणः, व्यतिरिरधिषिष्यमाणः-व्यतिरिरत्सिष्यमाणः, रारधिष्यमाणः ;

सुरत्-सुरधौ-सुरधः ; — —

[6]रद्धम्-रद्धः-रद्धवान्, रन्धितम्-तः, रिरधिषितः-रिरत्सितः, रारधितः-तवान् ;

रन्धः, [7]रन्धनः, [8]साधुरन्धी,

---

1. '**रधिजभोरचि**' (7-1-61) इति अजादिप्रत्ययेषु सर्वत्र नुमागमः। ण्यन्तेषु च णिज्निमित्तको नुमागमः सर्वत्र बोध्यः।

2. '**रधादिभ्यश्च**' (7-2-45) इति इड्विकल्पः। इट्पक्षे, 'नेट्यलिटि **रधेः**' (7-1-62) इति नुम्निषेधः। इडभावपक्षे 'खरि च' (8-4-55) इति चर्त्वे **रिरत्सकः** इत्यादीनि रूपाणीति सन्नन्ते सर्वत्र रूपद्वयं बोध्यम्।

3. तृचि, इडभावपक्षे, 'झषस्तथोर्धोऽधः' (8-2-40) इति धत्वे जश्त्वे च रूपमेवम्।

4. शतरि दिवादित्वाच्छ्यनि रूपमेवम्। स्त्रियां नुम्विकल्पः।

5. स्यप्रत्ययेऽपि इडभावपक्षे धातुधकारस्य चर्त्वेन तकार इति ज्ञेयम्।

6. **रधाद्यष्टकान्तर्गतत्वेन** धातोर्वैकल्पिकेट्कत्वात्, 'यस्य विभाषा' (7-2-15) इतीण्निषेधः। नच **रधादिव्यतिरिक्तेषु** धातुषु 'यस्य विभाषा' (7-2-15) इत्यस्य चरितार्थत्वात्, '**रधादिभ्यश्च**' (7-2-45) इत्यस्य परत्वाच्च निष्ठायामपि इण्निषेधं बाधित्वा इड्विकल्प एव तृजादिष्विव न्याय्य इति वाच्यम्; 'निषेधाश्च बलीयांसः' (परि. 122) इति न्यायेन, पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्याच्च 'पर्जन्यवल्लक्षणं प्रवर्तते' (परि. 121) इति न्यायेन **रधादिषु** विषयेऽपि निष्ठायाम् इण्निषेधस्यैव प्रामाणिकत्वात्। विस्तरस्त्व**न्यत्र**।

7. नन्द्यादित्वात् (3-1-134) कर्तरि ल्युप्रत्यये नुमागमः।

8. 'साधुकारिण्युपसंख्यानम्' (वा. 3-2-78) इति णिनिः। **काशिकायाम्** (7-1-61) प्रयुक्तोऽयम्।



[1]रेधिवान्, रन्धः, रिरधिषुः-रिरत्सुः, [2]रारन्धः ;

रधितव्यम्-रद्धव्यम्, रन्धयितव्यम्, रिरधिषितव्यम्-रिरत्सितव्यम्, रारधितव्यम् ;

रन्धनीयम्, रन्धनीयम्, रिरधिषणीयम्-रिरत्सनीयम्, रारधनीयम् ;

राध्यम्, रन्ध्यम्, रिरधिष्यम्-रिरत्स्यम्, रारध्यम् ;

ईषद्रन्धः- [3]दूरन्धः-सुरन्धः ; — —

रध्यमानः, रन्ध्यमानः, रिरधिष्यमाणः-रिरत्स्यमानः, रारध्यमानः ;

रन्धः, रन्धः, रिरधिषः-रिरत्सः, रारधः ;

[A]रधितुम्-रद्धुम्, रन्धयितुम्, रिरधिषितुम्-रिरत्सितुम्, रारधितुम् ;

रद्धिः, रन्धना, रिरधिषा-रिरत्सा, रारधा ;

रन्धनम्, रन्धनम्, रिरधिषणम्-रिरत्सनम्, रारधनम् ;

रधित्वा-रद्ध्वा, रन्धयित्वा, रिरधिषित्वा-रिरत्सित्वा, रारधित्वा ;

अनुरध्य, अनुरन्ध्य, प्ररिरधिष्य-प्ररिरत्स्य, प्रारध्य ;

रन्धम् २, रधित्वा-रद्ध्वा २, } रन्धम् २, रन्धयित्वा २, } रिरधिषम् २-रिरत्सम् २, रिरधिषित्वा २-रिरत्सित्वा २, } रारधम् २ ; रारधित्वा २. }

---

1. लिटः क्वसौ, 'अत एकहल्मध्ये—' (6-4-120) इत्येत्वाभ्यासलोपयोः कृतयोः, 'वस्वेकाजाद्घसाम्' (7-2-67) इतीडागमे, नुमागमे, संयोगान्तत्वेन 'असंयोगाल्लिट् कित्' (1-2-5) इति कित्त्वाप्राप्तावपि औपदेशिकं क्वसुप्रत्ययगतं कित्त्वमाश्रित्योपधानकारलोपे **रेधिवान्** इति सम्पद्यते। अत्रैवंरूपनिष्पत्ति-विषये आक्षेपसमाधानप्रकारौ **न्यासे** (7-1-62) द्रष्टव्यौ। क्वसोश्छान्दसैकान्त्या-भावप्रतिपादनं तु 'नेट्यलिटि **रधेः**' (7-1-62) इत्यत्र **भाष्यप्रदीपोद्द्योते** द्रष्टव्यम्।

2. यङन्तात् पचाद्यचि (3-1-134), यङो लुकि, '**रधिजभोरचि**' (7-1-61) इति नुम्।

3. दुरुपपदा**द्रधेः** कृच्छ्रार्थे खल्। 'रो रि' (8-3-14) इति रेफलोपे, 'ढ्रलोपे पूर्वस्य—' (6-3-111) इति दीर्घः।

A. 'अक्षं **रधितु**मारेभे **रद्धा** लङ्कानिवासिनाम्॥' भ. का. 9-29.

(1372) "**रञ्ज रागे**" (I-भ्वादिः-999. अक. अनि. उभ.)

'रजते रजतीत्येव रज्यते रज्यतीत्यपि ॥
रागार्थे शप्श्यनोर्द्वे द्वे — ' (श्लो. 57-58) इति **देवः**।

[1]रञ्जकः-ञ्जिका, [2]रञ्जकः-ञ्जिका, रजकः-जिका, [3]रिरङ्क्षकः-क्षिका, [4]रारजकः-जिका ;
रङ्क्ता-रङ्क्त्री, रञ्जयिता-रजयिता-त्री, रिरङ्क्षिता-त्री, रारजिता-त्री ;
[5]रजन्-न्ती, रञ्जयन्-न्ती [पक्षिणः], रजयन्-न्ती [मृगान्], रिरङ्क्षन्-न्ती;—
रङ्क्ष्यन्-न्ती-ती, रञ्जयिष्यन्-रजयिष्यन्-न्ती-ती, रिरङ्क्षिष्यन्-न्ती-ती ;—
रजमानः, रञ्जयमानः-रजयमानः, रिरङ्क्षमाणः, रारज्यमानः ;
रङ्क्ष्यमाणः, रञ्जयिष्यमाणः-रजयिष्यमाणः, रिरङ्क्षिष्यमाणः, रारजिष्यमाणः ;
[6]अनुरक्-अनुरग्-अनुरजौ-अनुरजः ; — — —

---

1. 'नकारजावनुस्वारपञ्चमौ झलि धातुषु।' इत्यभियुक्तोक्तेरयं धातुरुपदेशे नकारोपधः। सन्धिवशाञ्ञकार इति बोध्यम्।

2. ण्यन्ते सर्वत्र मृगरमणभिन्नार्थे नलोपाभावादेवमेव रूपम्। '**रजको** मृगाणाम्' इत्यत्र तु '**रञ्जेर्णौ** मृगरमणे' (वा. 6-4-24) इति नलोपे, 'जनीजॄष्क्नसु**रञ्जो**ऽमन्ताश्च' (ग. सू. भ्वादिः) इति मित्संज्ञायां 'मितां ह्रस्वः' (6-4-92) इत्युपधाह्रस्वः। एवमेवार्थभेदाद्रूपद्वयस्योपपत्तिः सर्वत्र बोध्या। **मृगरमणम्**= आखेटकः इत्ये**के**। "**परे** तु '**रजयाञ्चकार विरजाः** स मृगान्—' (किरातार्जुनीये 6-24) इति **भारवि**प्रयोगात् **मृगरमणं** यथाश्रुतमेव। अत एव **भगवता** '**रञ्जयति** वस्त्राणि' (**भाष्ये** 6-4-24) इति प्रत्युदाहृतम् इत्याहुः।" इति **भाष्यप्रदीपोद्द्योते** निरूपितमिहावधेयम्। एतेन 'राजर्षिकल्पो **रजयन्**' इति **क्षीरतरङ्गिण्यु**पात्तवचनस्याप्युपपत्तिर्ज्ञेया। मृगरमणम्= मृगाणाम् रमणमिति बोध्यम्। 'जनीजॄष्क्नसु**रञ्जः**—' (ग. सू. भ्वादिषु) इत्यत्रार्थविशेषोपादानाभावात् यथाश्रुतार्थे रागेऽपि मित्त्वमिति ज्ञेयम्। '**मृगरमणम्**=मृगक्रीडा।' इति **न्यासः**।

3. सन्नन्ते सर्वत्र धातुजकारस्य कुत्वेन गकारे, उपधानकारस्यानुस्वारपरसवर्णयोः, सनः सकारस्य षकारे, चर्त्वे च रूपमेवम्।

4. यङ्निमित्तक उपधानकारलोपे, अभ्यासे दीर्घे च रूपमेवम्।

5. शतरि शपि, '**रञ्जेश्च**' (6-4-26) इत्युपधानकारलोपः।

6. क्विपि, उपधानकारलोपे कुत्वे चर्त्वविकल्पे च रूपमेवम्।



रक्तम्-रक्तः-रक्तवान्, [1]विरक्तः-रक्तम्, रञ्जितः-रजितः[A], रिरङ्क्षितः, रारजितः-तवान् ;
रञ्जः, [2]रागी, [3]रञ्जनः, [4]मनोऽनुरञ्जनः, [5]रजकः-रजकी, [6]रज्यन्-न्ती-ती,

---

1. **विरक्तः, रक्तम्** इत्यत्र 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां क्तः।

2. तच्छीलादिषु कर्तृषु 'सम्पृचानुरुध.......त्यजरजभजातिचरापचरामुषाभ्याहनश्च' (3-2-142) इति घिनुण्। प्रकृतसूत्रे '**रज**' इति निपातनात् घिनुण्यपि उपधानकारलोपः। तदुक्तं **भाष्ये**–' 'घिनुणि निपातनात् सिद्धम्' (**भाष्यम्** 6-4-24) इति। णित्त्वादुपधावृद्धौ, 'चजोः कु घिण्ण्यतोः' (7-3-52) इति कुत्वे च रूपमेवम्। **अनुरागी** इत्यादयस्तु घञन्तात् मत्वर्थीय इनिप्रत्यये साधव इति बोध्यम्।

3. रजति, रजते वा इति **रञ्जनः**। बाहुलकात् 'कृत्यल्युटो बहुलम्' (3-3-113) इति कर्तरि ल्युट्। यद्वा, 'शिल्पिनि ष्वुन्' (3-1-145) इति **सूत्रभाष्ये** 'नृतिखनि**रञ्जिभ्यः**—' इति वचनात् कर्तरि ष्वुन्। न चात्र नलोपः शङ्क्यः, 'कित एवैते औणादिकाः' इति षाष्ठ**भाष्यात्** (6-4-24) औणादिकक्वुन्प्रत्ययान्त एव नलोप इत्येतदुत्तरत्र स्पष्टीकरिष्यमाणत्वात् इत्यलमत्र।

4. मनांस्यनुरञ्जयतीति **मनोऽनुरञ्जनः**। नन्द्यादित्वात् (3-1-134) कर्मण्युपपदे कर्तरि ल्युः। गौरादि (4-1-41) पाठात् स्त्रियां ङीष्। एवमेव **रसिकरञ्जनी**-प्रभृतयः शब्दाः साधवः। **रसिकरञ्जिनी** इति प्रयोगसत्त्वे तु 'सुप्यजातौ—' (3-2-78) इति णिनिप्रत्यये, 'ऋन्नेभ्यो ङीप्' (4-1-5) इति ङीपि तस्य साधुत्वं बोध्यम्।

5. 'शिल्पिनि ष्वुन्' (3-1-145) इत्यत्र, 'नृतिखनि**रञ्जिभ्य** इति वक्तव्यम्' इति **भाष्यात्** कर्तरि ष्वुन्। वस्तुतस्तु षष्ठे (6-4-24) "कित एवैते औणादिकाः।" इति **भाष्येण** '**रजकरजनरजस्सू**पसंख्यानं कर्तव्यम्' (वा. 6-4-24) इति **वार्तिक**प्रत्याख्यानपरेण, "**रजकः** इत्यत्र 'क्वुन् शिल्पिसंज्ञयोः—' [द. उ. 3-5] इति क्वुन्प्रत्ययः। **रजकी** इति 'पुंयोगादाख्यायाम्' (4-1-48) इति ङीष्। अपुंयोगे तु ङीषा न भाव्यम् इति **भाष्यकारा**भिप्रायः।" इति **कैयटेन** च निर्णीतत्वात् अत्र प्रयोगे ष्वुन् न, क्वुनेवेत्यतः **न्यास-पदमञ्जर्यादय** उपेक्ष्याः। तदुक्तम् **शब्दकौस्तुभे**—"एवञ्च, **भाष्यमते** नृतिखनिभ्यामेव ष्वुन्। न तु **रञ्जेः** इति स्थितम्।" (3-1-145) इति। विस्तरस्त्वन्यत्र।

6. 'कुषि**रजोः प्राचां** श्यन् परस्मैपदं च' (3-1-90) इति कर्मकर्तरि विकल्पेन श्यन्प्रत्ययः परस्मैपदं च। यगात्मनेपदयोरपवादौ। एतच्च व्यवस्थितविभाषेति **काशिकादिषु** स्पष्टम्। श्यनः अपित्सार्वधातुकत्वेन ङिद्वद्भावः। तेन, 'अनिदिताम्—' (6-4-24) इति उपधानकारलोपः। स्त्रियाम्, 'आच्छीनद्योर्नुम्' (7-1-80) इति नुम्विकल्पः।

A. '**कलतया** वचसः परिवादिनीस्वरजिता **रजिता** वशमाययुः ॥' शि. व. 6. 9.

रज्यमानः [वस्त्रः स्वयमेव], रञ्जः-रजः, रिरङ्क्षुः, रिरञ्जयिषुः-रिरजयिषुः, रारञ्जः ;

रङ्क्तव्यम् , रञ्जयितव्यम्-रजयितव्यम् , रिरङ्क्षितव्यम् , रारजितव्यम् ;

रञ्जनीयम् , रञ्जनीयम्-रजनीयम् , रिरङ्क्षणीयम् , रारजनीयम् ;

[1]रङ्ग्यम् , रञ्ज्यम्-रज्यम् , रिरङ्क्ष्यम् , रारज्यम् ;

ईषद्रञ्जः-दूरञ्जः-सुरञ्जः ; — — —

[2]रज्यमानः, रञ्ज्यमानः-रज्यमानः, रिरङ्क्ष्यमाणः, रारज्यमानः ;

विरागः-[3] वैरङ्गिकः-आश्चर्यो [4]रागः, अन्यद्रागः, [5]रङ्गः, [6]रङ्गः, रञ्जः-रजः, रिरङ्क्षः, रारजः ;

रङ्क्तुम् , रञ्जयितुम्-रजयितुम् , रिरङ्क्षितुम् , रारजितुम् ;

विरक्तिः, रञ्जना-रजना, रिरङ्क्षा, रिरञ्जयिषा-रिरजयिषा, रारजा ;

रञ्जनम् , रञ्जनम्-रञ्जनी, रजनम्-रजनी, रिरङ्क्षणम् , रारजनम् ;

रक्त्वा, रञ्जयित्वा-रजयित्वा, रिरङ्क्षित्वा, रारजित्वा ;

---

1. निष्ठायामनिट्त्वात् ण्यति, 'चजोः कु घिण्ण्यतोः' (7-3-52) इति कुत्वे रूपमेवम्।
2. यगात्मनेपदयोरपवादत्वेन श्यन्परस्मैपदयोर्विहितयोरपि, 'कुषिरजोः प्राचाम् —' (3-1-90) इत्यत्र 'प्राचां' ग्रहणात् पक्षे यगात्मनेपदे भवत इति रूपस्यास्यापि साधुत्वं बोध्यम्।

3. विपूर्वकादस्माद् भावे घञि, 'घञि च भावकरणयोः' (6-4-27) इति उपधानकारलोपे, 'अत उपधायाः' (7-2-116) इत्युपधाभूताकारस्य वृद्धौ, 'चजोः—' (7-3-52) इति कुत्वे च **विरागः** इति सम्पद्यते। तस्मात् 'विरागमर्हति' इत्यर्थे, 'छेदादिभ्यो नित्यम्' (5-1-64) इति ठक्प्रत्यये, **'विरागो विरङ्गं च'** (ग. सू. 5-1-64) इति गणपाठात् प्रकृतेर्विरङ्गादेशे, आदिवृद्धौ च **वैरङ्गिकः** इति रूपमिति बोध्यम्।

4. रज्यतेऽनेनेति **रागः**। करणे घञि, 'घञि च भावकरणयोः' (6-4-27) इत्युपाधानकारलोपे, उपधाभूताकारस्य वृद्धौ कुत्वे च रूपमेवम्। **अन्यद्रागः** इत्यत्र, 'अषष्ठ्यतृतीयास्थस्य **अन्यस्य** दुग् आशीराशास्थास्थितोत्सुकोतिकारक**राग**च्छेषु' (6-3-99) इति **राग**शब्दे परत अन्यशब्दस्य दुगागमः।
5. रञ्जयति प्रेक्षकाणां मनांस्यत्रेत्यर्थेऽन्तर्भावितण्यर्थाद्धातोरधिकरणे घञि कुत्वे रूपमेवम्। **रङ्गः**=नाटकादीनां प्रेक्षणस्थानम्।
6. 'हलश्च' (3-3-121) इत्यनेन संज्ञायां घञि, 'पुंसि संज्ञायां घः प्रायेण' (3-3-118) इति घप्रत्यये वा सति कुत्वे रूपमेवम्। **रङ्गः**=देशविशेषः, देवश्च।



विरज्य, विरञ्ज्य-[1]विरजय्य, विरिरङ्क्ष्य, विरारज्य ;

रञ्जम् २, रक्त्वा २, } [2]रञ्जम् २-राञ्जम् २-रजम् २-राजम् २, रञ्जयित्वा २-रजयित्वा २, } रिरङ्क्षम् २, रिरङ्क्षित्वा २, } रारजम् २ ; रारजित्वा २ ; } [3]रजकः-रजकी, [4]रजनः-रजनी, [5]रजतम् , [6]रजः।

## (1373) "रञ्ज रागे" (IV-दिवादिः-1167. अक. अनि. उभ.) [अ]

'रजते रजतीत्येव रज्यते रज्यतीत्यपि ॥
रागार्थे शप्श्यनोर्द्वे द्वे........।' (श्लो. 57-58) इति **देवः**।

---

1. ण्यन्तात् क्त्वो ल्यपि मृगरमणार्थे नकारलोपे, मित्संज्ञकत्वात् उपधाह्रस्वे च 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशे रूपमेवम्।
2. 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' (ग. सू. भ्वादिषु) इत्यत्रार्थविशेषानिर्देशपुरस्सरं मित्त्वानुशासनात्, अनुपधात्वेऽपि **रञ्जम् 2-राञ्जम् 2** इति दीर्घविकल्पः, 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति सूत्रेण भवतीति **माधवः**। मृगरमणार्थे नलोपपक्षे तु **रजम् 2-राजम् 2** इति द्विरूपविषये न विप्रतिपत्तिरिति ज्ञेयम्।
3. 'क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि' [द. उ. 3-5] इति क्वुन्प्रत्ययः। प्रत्ययस्य कित्त्वादुपधानकारलोपः।
4. '**रञ्जः** क्युन्' [द. उ. 5-24] इति क्युन्प्रत्ययः। रजति रज्यते वाऽनेनेति **रजनः**=रजकः, रागश्च। 'स च बाहुलकात् टिद्द्रष्टव्यः।' इति **कैयटोक्तेः** (6-4-24) स्त्रियां ङीपि **रजनी** रात्रिः, हरिद्रा च।
5. '**पृषिरञ्जिभ्यां** कित्' [द. उ. 6-15] इति अतच्प्रत्यये, कित्त्वेनानुनासिलोपे च रूपम्। रजन्तेऽस्मिन् जना इति **रजतम्**=लोहविशेषः। "**रजतस्य** विकारो **राजतम्** —'प्राणि**रजतादिभ्यो**ऽञ्' (4-3-154) इति षष्ठ्यन्तात् विकारेऽञ्-प्रत्ययः। अत्र, 'अनुदात्तादेः—' (4-2-44) इत्येवाञि सिद्धे पुनरञ्विधानम्, 'मयड्वैतयोः—' (4-3-143) इति विकारमयटो बाधनार्थम्।" इति **मा. धा. वृत्तिः**। एतेन '**रजतमयम्** पात्रम्' इति च्छान्दसानां प्रयोगोऽ**पाणिनीय** इति ज्ञेयम्।
6. '**भूरञ्जिभ्यां** कित्' [द. उ. 9.76] इत्यसुन्प्रत्ययः, स च किच्च भवति। **रजः**= अशुभम्, रेणुश्च।

[अ] धातोरस्यापि 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' (ग. सू. भ्वादिषु) इत्यत्र ग्रहणं ज्ञेयम्। **क्षीरस्वामिना** "स्वरितेत्त्वार्थं विकरणार्थं च इह (दिवादिषु) पाठः।" इत्युक्तम्। भ्वादिष्वपि उभयपदित्वस्याविशिष्टत्वात् तत्रापि स्वरितेत्त्वस्यैवाङ्गीकाराच्च चिन्त्यमिदमिति ज्ञेयम्। विकरणार्थं स्वरार्थमिति स्यादिति भाति।

रञ्जकः-ञ्जिका, रञ्जकः-रजकः-ञ्जिका-जिका, रिरङ्क्षकः-क्षिका, रारजकः-जिका ; रङ्क्ता-रङ्क्त्री, रञ्जयिता-रजयिता-त्री, रिङ्क्षिता-त्री, रारजिता-त्री ; इत्यादिकानि सर्वाणि रूपाणि भौवादिक**रजति**वत् (1372) ज्ञेयानि । शतरि [1]रज्यन्-न्ती, इति, शानचि, रज्यमानः इति च भवति । भौवादिकधातुवत् सर्वाण्यपि विशेषरूपाण्यस्मादपि भवन्तीति च बोध्यम् । घिनुणि-[A]रागी ।

### (1374) "रप व्यक्तायां वाचि"

(I-भ्वादिः-401. अक. सेट्. पर.)

'— वचसि क्लैव्ये' इति **दशपाद्युणादिवृत्ति** (I-111) पाठः ।

रापकः-पिका, रापकः-पिका, रिरपिषकः-षिका, रारपकः-पिका ; रपिता-त्री, रापयिता-त्री, रिरपिषिता-त्री, रारपिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**चपति**वत् (497) ज्ञेयानि । [2]राप्यम्, [3]रिपुः इमौ रूपौ विशेषेण भवतः इति ज्ञेयम् ।

### (1375) "रफ गतौ" (I-भ्वादिः-413. सक. सेट्. पर.)

धातुममुं हिंसार्थे पठति **कण्ठः** इति **क्षीरस्वामी** ।

राफकः-फिका, राफकः-फिका, रिरफिषकः-षिका, rारफकः-फिका ; रफिता-त्री, राफयिता-त्री, रिरफिषिता-त्री, रारफिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**चपति**वत् (497) बोध्यानि ।

---

1. शतरि शपो दिवादित्वाच्छ्यनि, तस्यापित्सार्वधातुकत्वेन ङिद्वद्भावात्, 'अनिदितां हल उपधायाः **क्ङिति**' (6-4-24) इत्युपधानकारलोपः ।
2. 'आसुयुवपिर**पि**—' (3-1-126) इति ण्यत् । यतोऽपवादः ।
3. '**रपेरिच्चो**पधायाः' (द. उ. 1-111) इति कुप्रत्ययः, उपधायाः इच्च भवति । **रिपुः**=वैरी । अत्र द. उ. **टिप्पण्याम्** "**श्वेतवनवासिना रपेर्हिं-सार्थत्व**माश्रित्य **रिपुशब्दो** निरुक्तः । तथाहि—"**रपति** हिनस्ति इति **रिपुः**=शत्रुः । संज्ञाशब्देषु धातोरर्थान्तरवृत्तित्वमस्ति । तथाह्युक्तम्—'धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ।' इति" [पृष्ठम् 14. 15.) इत्युक्तम् ।

A. 'एता देवानुरोधिन्यो द्वेषिण्य इव **रागिणम्** ।' भ. का. 7. 9.



### (1376) "रफि गतौ" (I-भ्वादिः-414. सक. सेट्. पर.)

**केचित्** हिंसार्थकत्वमस्याङ्गीकुर्वन्तीति **क्षीरतरङ्गिणी**तो ज्ञायते ।

रम्फकः-म्फिका, रम्फकः-म्फिका, रिरम्फिषकः-षिका ; रारम्फकः-म्फिका ; रम्फिता-त्री, रम्फयिता-त्री, रिरम्फिषिता-त्री, रारम्फिता-त्री ; इत्यादिकानि समस्तान्यपि रूपाणि भौवादिक**कम्पति**वत् (166) बोध्यानि । अस्य धातोः गत्यर्थकत्वात् ण्यन्तात् शानचि-रम्फयमाणः, रम्फयिष्यमाणः इति विशेषः । घञि-[A]सुरम्फः ।

### (1377) "रबि शब्दे" (I-भ्वादिः-376. अक. सेट्. आत्म.)

रम्बकः-म्बिका, रम्बकः-म्बिका, रिरम्बिषकः-षिका, रारम्बकः-म्बिका ; रम्बिता-त्री, रम्बयिता-त्री, रिरम्बिषिता-त्री, रारम्बिता-त्री ; इत्यादिकानि सर्वाण्यपि रूपाणि भौवादिक**कम्पति**वत् (166) ज्ञेयानि । [1]रम्बणः, [2]सुरम्बी, [3]हेरम्बः,[B] अस्य धातोः इमानि रूपाण्यधिकानीति विशेषः ।

### (1378) "रभ राभस्ये" (I-भ्वादिः-974. अक. अनि. आत्म.)

**राभस्यम्**=कार्योपक्रमः । अयं प्रायेण आङ्पूर्वक एव प्रयुज्यते ।

---

1. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति, 'चलनशब्दार्थादकर्मकाद्युच्' (3-2-148) इति वा युच् ताच्छीलिकः ।
2. 'सुप्यजातौ—' (3-2-78) इति णिनिप्रत्यये रूपमेवम् ।
3. हे इत्येवं रम्बते इति **हेरम्बः**=विनायकः । पचाद्यचि रूपमेवम् । 'के रम्बते—**करम्बः** । स्वर्णं **रत्नकरम्बितम्**, कृनश्च चित् ('कृनश्च' द. उ. 7-17) इत्यम्बज् वा' इति **क्षीरतरङ्गिण्यामुक्तम्** । "'हः शङ्करे हरौ हंसे रणरोमाञ्चवाजिषु' इति **नानार्थरत्नमाला** । 'हे उषसि रम्बते' इति **स्वामी** ।" इति **अमरसुधा** (1-38) ।

A. 'हयैः **सुरम्फै**र्द्रुतमर्बतो रवेः पर्वद्भिरालक्ष्यत रक्तिमा करैः ।' धा. का. 1-54.

B. '**सकम्पहेरम्ब**समानलम्बनाः........ ।' धा. का. 1-49.

[1]आरम्भकः-म्भिका, [2]रम्भकः-म्भिका, [3]रिप्सकः-प्सिका, रारभकः-भिका ;
[4]आरब्धा-ब्ध्री, रम्भयिता-त्री, रिप्सिता-त्री, रारभिता-त्री ;
—— रम्भयन्-न्ती, रम्भयिष्यन्-न्ती-ती ; ——
[5]आरभमाणः, [भोक्तुम्] आरभमाणः, रम्भयमाणः, रिप्समानः, रारभ्यमाणः,
रप्स्यमानः, रम्भयिष्यमाणः, रिप्सिष्यमाणः, रारभिष्यमाणः ;
सुरप्-सुरभ्-सुरभौ-सुरभः ; —— ——
आरब्धम्-ब्धः, रम्भितम्-तः, रिप्सितम्, रारभितम्-तः-तवान् ;

---

1. 'रभेरशब्लिटोः' (7-1-63) इति, अजादिषु प्रत्ययेषु शब्लिड्वर्जं नुमागमः। एवमेव घञादिष्वपि ज्ञेयम्। "**काशकृत्स्नधातुपाठीयकन्नडटीकायां रभकः रभः, रभमाणः, रभणीयम्** इत्यादिप्रयोगेषु नुमोऽदर्शनात् वस्तुतः सानुषङ्गाः **आरम्भः, आरम्भणम्**.......इत्येवमादयः प्रयोगाः न **रभ**धातोः, किं तर्हि ? सानुषङ्गस्य **रम्भ**धातोः...." इत्यादिकं **क्षीरतरङ्गिणीटिप्पणे** (पुटे 151) सुदूरं विचारितम्। तत्र **पाणिनीयधातुपाठकोशेषु** कुत्रापि सानुषङ्गस्य **रम्भ**धातोरुल्लेखाभावात् प्रमाणं मृग्यमिति बोध्यम्। 'रेभृ शब्दे' इति भौवादिकस्य धातोः **दुर्ग**सम्मतं '**रभि शब्दे**' इति पाठमाश्रित्य निर्वाहं **केचित्** कुर्वन्ति। तदपि **दुर्गा**न्यैस्तत्पाठानादरात् न प्रमाणमिति बोध्यम्।
2. ण्यन्ते ण्वुलि, 'अत उपधायाः' (7-2-116) इति प्राप्तां परामपि वृद्धिं बाधित्वा, '**रभे**रशब्लिटोः' (7-1-63) इति नुम् नित्यत्वाद्भवति।
3. सन्नन्ते, 'सनि मीमाघुर**भ**—' (7-4-54) इत्यादिना इस्। 'अत्र लोपोऽभ्यासस्य' (7-4-58) इत्यभ्यासलोपः। 'स्कोः—' (8-2-29) इति सलोपः। भकारस्य चर्त्वेन पकारः।
4. तृजादिषु 'झषस्तथोः—' (8-2-40) इति धत्वे, जश्त्वे च रूपमिति ज्ञेयम्।
5. शानचि, '**रभेरशब्लिटोः**' (7-1-63) इत्युक्तत्वात् नुमागमो न। यत्तु **परिभाषेन्दुशेखरे** 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' (परिभाषा 16) इत्यत्र, "..... संज्ञाभूतानां प्रतिषेधम् **आरभता वार्तिककृता**.... .." इति वाक्ये, आत्मनेपदस्यास्य धातोः शत्रन्तप्रयोगः प्रयुक्तः, स तु सम्पातायात इति न तावता धातोरस्योभयपदित्वं कल्प्यम्। न च 'अनुदात्तेत्त्वलक्षणमात्मनेपदम् अनित्यम्' (परि. 97) इति वचनात् आत्मनेपदस्यानित्यत्वात् '**आरभता**' इति प्रयोगः सूपपन्न इति वाच्यम्। तस्याः परिभाषायाः **भाष्यायना**दृतत्वेनाप्रामाण्यस्य **नागेशभट्टै**रेव समर्थितत्वादित्य**न्यत्र** विस्तरः। 'भोक्तुम् **आरभमाणः**' इत्यत्र, 'शकधृषज्ञाग्लाघट**रभ**—' (3-4-65) इत्यादिना धातुमात्रात् तुमुन्।



[1]रम्भः-रम्भा, [2]साध्वारम्भी, रम्भः, रिप्सुः, [3]रारम्भः ;
आरब्धव्यम्, आरम्भयितव्यम्, रिप्सितव्यम्, रारभितव्यम् ;
आरम्भणीयम्, आरम्भणीयम्, रिप्सनीयम्, रारभणीयम् ;
[4]आरभ्यम्, आरम्भ्यम्, रिप्स्यम्, रारभ्यम् ;
ईषद्रम्भः-दूरम्भः-सुरम्भः ; —— —— ——
आरभ्यमाणः, आरम्भ्यमाणः, रिप्स्यमानः, रारभ्यमाणः ;
आरम्भः, आरम्भः, रिप्सः, रारभः ;
आरब्धुम्, आरम्भयितुम्, रिप्सितुम्, रारभितुम् ;
रब्धिः, आरम्भणा, रिप्सा, रारभा ;
आरम्भणम्, आरम्भणम्, रिप्सनम्, रारभणम् ;
रब्ध्वा, रम्भयित्वा, रिप्सित्वा, रारभित्वा ;
आरभ्य, आरम्भ्य, आरिप्स्य, आरारभ्य ;
रम्भम् २, रब्ध्वा २, } रम्भम् २, रम्भयित्वा २, } रिप्सम् २, रिप्सित्वा २, } रारभम् २ ; रारभित्वा २ ; }
[5]रभसः।

(1379) "**रभि शब्दे**" (I-भ्वादिः-385. अक. सेट्. आत्म.)

'रेभृ शब्दे' इत्यस्य **दुर्ग**सम्मतः पाठ एवमिति **क्षीरतरङ्गिणी**तो ज्ञायते।
रम्भकः-म्भिका, रम्भकः-म्भिका, रिरम्भिषकः-षिका, रारम्भकः-म्भिका ;
रम्भिता-त्री, रम्भयिता-त्री, रिरम्भिषिता-त्री, रारम्भिता-त्री ;
इतीमानि रूपाणि भौवादिक**कुण्ठति**वत् (209) ज्ञेयानि। [6]करम्भः।
[A]प्ररम्भणम्।

---

1. पचाद्यचि नुमि **रम्भः**। स्त्रियां टापि **रम्भा**=अप्सरोविशेषः, कदली च।
2. 'साधुकारिण्युपसंख्यानम्' (वा. 3-2-78) इति णिनिः।
3. यङन्तात् पचाद्यचि, यङो लुकि नुमागमे च रूपमेवम्।
4. 'पोरदुपधात्' (3-1-98) इति यत्प्रत्ययः। हलन्तलक्षणण्यतोऽपवादः।
5. 'अत्यविचमितमि**रभि**—' [द. उ. 9-44] इत्यसच्प्रत्यये रूपम्। बाहुलकात्, '**राभस्ये**' इति निर्देशाद्वा नुम् न।
6. केन जलेन रभ्यते=मिश्रीक्रियते इति **करम्भः**=दधिसक्तवः। 'अकर्तरि च कारके—' (3-3-19) इति घञ्। धातूनामनेकार्थत्वात् मिश्रीकरणार्थेऽत्र वृत्तिः। 'ज्योत्स्ना**करम्भ**मुदरम्भरयश्चकोराः ॥' इति **मुरारिः** (अनर्घराघवे 2-83)।
A. 'प्रचीभ्यरेफैः पशवोऽम्भसां निधिप्ररम्भणस्तम्भिभिरागता व्रजम्।'

(1380) “ **रम क्रीडायाम्** ” (I-भ्वादिः-853. अक. अनि. आत्म.)

ज्वलादिः ।

‘ **रमु**—’ इत्युदितं **केचित्** पठन्ति ।

[1]रामकः-मिका, [2]रमकः-मिका, [3]रिरंसकः-सिका, [4]रंरमकः-मिका ;
[5]रन्ता-रन्त्री, रमयिता-त्री, रिरंसिता-त्री, रंरमिता-त्री ;
[6]विरमन्-आरमन्-परिरमन्-न्ती, [[7]देवदत्तम्] उपरमन्, [[8]यावद्भुक्तम्] उपरमन्, रमयन्-न्ती, [9]विरिरंसन्-आरिरंसन्-परिरिरंसन्-देवदत्तम्-उपरिरंसन्, [यावद्भुक्तम्] उपरिरंसन्-न्ती ; —
विरंस्यन्-न्ती-ती, आरंस्यन्, परिरंस्यन्, [देवदत्तम्] उपरंस्यन्, रमयिष्यन्-न्ती-ती, विरिरंसिष्यन्-आरिरंसिष्यन्-परिरिरंसिष्यन्-देवदत्तमुपरिरंसिष्यन्-[यावद्भुक्तम्]उपरिरंसिष्यन्-न्ती-ती ; —
रममाणः, यावद्भुक्तमुपरममाणः, रमयमाणः, रिरंसमानः, रंरम्यमाणः ;
रंस्यमानः, [यावद्भुक्तम्] उपरंस्यमानः, रमयिष्यमाणः, रिरंसिष्यमाणः, रंरमिष्यमाणः ;

---

1. उदात्तोपदेशाभावात् वृद्धिनिषेधो नात्र प्रवर्तते । एवमेव वृद्धियोग्येषु घञादिषु सर्वत्र बोध्यम् ।
2. अमन्तत्वेन, ‘ जनीजृष्क्नसुरञ्जोऽमन्ताश्च ’ (ग. सू. भ्वादिषु) इति मित्संज्ञायाम्, ‘ मितां ह्रस्वः ’ (6-4-92) इति णौ उपधाया ह्रस्वः । एवं ण्यन्ते सर्वत्र बोध्यम् ।
3. ‘ यमिर्यमन्तेष्वनिडेक इष्यते रमिश्च ’ (**व्याघ्रभूति**कारिका 7-2-10) इति वचनात् अनिट्त्वम् । सनि परतो मकारस्यानुस्वारे रूपमेवं सर्वत्रेति बोध्यम् ।
4. यङन्ते सर्वत्र, ‘ नुगतोऽनुनासिकान्तस्य ’ (7-4-85) नुगागमः ।
5. धातोरनिट्त्वात्, धातुमकारस्यानुस्वारे परसवर्णे च रूपमेवम् ।
6. ‘ **व्याङ्परिभ्यो रमः** ’ (1-3-83) इति वचनात् वि, आ(ङ्), परिपूर्वकादस्माच्छता ।
7. ‘ उपाच्च ’ (1-3-84) इति परस्मैपदं शता । नच उपपूर्वकस्य **रमे**रकर्मकत्वात् कथं ‘ **देवदत्तमुपरमन्** ’ इति सकर्मकप्रयोगोपपत्तिरिति वाच्यम् । ‘ अन्त’ र्भावितण्यर्थोऽत्र सकर्मकः ।’ इति **क्षीरतरङ्गिण्या**मुक्तेः ‘ देवदत्त**मुपरमयन्** इत्यर्थकत्वादिति ज्ञेयम् । “ अन्तर्भावितः=बुध्याऽनुप्रवेशितो ण्यर्थः=प्रयोज्यप्रयोजकभावो यस्य स तथोक्तः । एवंविधस्य तस्य प्रयोज्येन कर्मणा सकर्मकत्वमुपपद्यत एव ।” इति **न्यासो**क्तिरिहावधार्या ।
8. ‘ विभाषाऽकर्मकात् ’ (1-3-85) इति परस्मैपदं, शता । भोजनाद् भोजनान्निवर्तते इत्यर्थः । पक्षे यथाप्राप्तमात्मनेपदमपि साधु ।
9. ‘ पूर्ववत् सनः ’ (1-3-62) इति सन्नन्ताच्छतुरुपपत्तिर्ज्ञेया ।



[1]सुरत्-सुरतौ-सुरतः ; — — —
रतम्-रतः-रतवान्, रमितः, रिरंसितः, रंरमितः-तवान् ;
[3]रमः-रमा, रामः-रामा, [4]रामः, [5]रम्यः, रमणीयः, [6]रेमिः, [7]रन्तिः, रतिः, [8]रमणः[A], [9]स्तम्बेरमः,[B]

---

1. ‘ गमादीनामिति वक्तव्यम् ’ (वा. 6-4-40) इति वचनात् क्विपि अनुनासिकलोपः । तुक् च भवति ।
2. निष्ठायाम्, ‘ अनुदात्तोपदेशवनतितनोत्यादीनाम् अनुनासिकलोपो झलि क्ङिति ’ (6-4-37) इत्यनुनासिकलोपः । एवमेव क्त्वा-क्तिन्प्रभृतिष्वपीति ज्ञेयम् ।
3. ‘ ज्वलितिकसन्तेभ्यो णः ’ (3-1-140) इति कर्तरि णप्रत्ययो विकल्पेन । णप्रत्ययपक्षे **रामः** इति भवति । पक्षे पचादित्वादौत्सर्गिकेऽच्प्रत्यये **रमः** इति भवति । स्त्रियां टापि **रमा, रामा** इति भवतः ।
4. ‘ हलश्च ’ (3-3-121) इति संज्ञायां घञि रूपमिति **केचित्** । **अन्ये** तु ‘रमन्ते योगिनो यस्मिन् चिदानन्दे परात्मनि ।’ इत्यादिनिर्वचनानुसारेणाधिकरणे, ‘ अकर्तरि च कारके संज्ञायाम् ’ (3-3-19) इति घञ् इति साधयन्ति ।
5. ‘ पोरदुपधात् ’ (3-1-98) इति ण्यदपवादो यत्प्रत्ययः । अयं च बाहुलकात् कर्तरि भवति । एवमेव **रमणीयः** इत्यत्रापि बाहुलकादेवानीयरिति **प्रक्रियासर्वस्वम्** ।
6. ‘उत्सर्गश्छन्दसि सदादिभ्यो दर्शनात्’ (वा. 3-2-171) इति वचनात क्रिप्रत्ययोऽथवा किन्प्रत्ययः । छन्दसि विषये ‘सेदिः, मेनिः, **रेमिः**—’ इत्यादीनां किकिन्नन्तानां बहूनां शब्दानां दर्शनात् ‘ आदृगमहनजनः किकिनौ लिट् च ’ (3-2-171) इत्यत्र परिगणनं मास्तु । किं तु औत्सर्गिकत्वं किकिनोः—इति प्रकृत**वार्तिका**र्थः । किकिनोः प्रत्यययोर्लिड्वद्भावातिदेशात् द्विर्वचनम् । एत्वाभ्यासलोपौ च भवतः ।
7. ‘ क्तिच्क्तौ च संज्ञायाम् ’ (3-3-174) इति क्तिच् । ‘न क्तिचि दीर्घश्च’ (6-4-39) इति दीर्घानुनासिकलोपनिषेधः ।
8. **रति**रिति मन्मथपत्न्युच्यते । अत्र बाहुलकात्, ‘ स्त्रियां क्तिन् ’ (3-3-94) इति संज्ञायां क्तिन् । अनुनासिकलोपः । ‘अकर्तरि च कारके संज्ञायाम्’ (3-3-19) इत्यतोऽत्र (3-3-94) ‘ संज्ञायाम् ’ इत्यनुवर्तते । ‘ संज्ञायाम् ’ (3-3-109) इति प्राप्तस्य ण्वुलोऽपवादः ।
9. नन्द्यादित्वात् (3-1-134) ण्यन्तात् कर्तरि ल्युः । **रमणी** इति तु गौरादि- (4-1-41) पाठात् ङीषि साधुः ।
10 ‘ **स्तम्ब**कर्णयो **रमि**जपोः’ (3-2-13) इति स्तम्बरूपे सुबन्ते उपपदे **रमे**रच्प्रत्ययः । स च ‘ **हस्ति**सूचकयोरिति वक्तव्यम् ’ (वा. 3-2-13) इति नियमात् गजविषय एव । स्तम्बे रमत इति **स्तम्बेरमः**=हस्ती । ‘हलदन्तात् सप्तम्याः संज्ञायाम्’ (6-3-9) इति, ‘ तत्पुरुषे कृति बहुलम् ’ (6-3 14) इति वा सप्तम्या अलुक् ।

A. ‘ नन्दनानि मुनीन्द्राणां **रमणानि** वनौकसाम् ।’ भ. का. 6-73.
B. ‘ बलिनावमुमद्रीन्द्रं युवां **स्तम्बेरमा**विव ।’ भ. का. 6-93.

[1]मनोरमा, रामः, रिरंसुः[A]-रिरमयिषुः, रंरमः ;

| | | | |
|---|---|---|---|
| रन्तव्यम्, | रमयितव्यम्, | रिरंसितव्यम्, | रंरमितव्यम् ; |
| रमणीयम्, | रमणीयम्, | रिरंसनीयम्, | रंरमणीयम् ; |
| रम्यम्, | रम्यम्, | रिरंस्यम्, | रंरम्यम् ; |
| ईषद्रमः-दूरमः-सुरमः- ; | — | — | — |
| रम्यमाणः, | रम्यमाणः, | रिरंस्यमानः, | रंरम्यमाणः ; |
| रामः, | [2]उपरमः, [3]आरामः, रामः, | रिरंसः, | रंरमः ; |
| रन्तुम्, | रमयितुम्, | रिरंसितुम्, | रंरमितुम् ; |
| रतिः, | रमणा, | रिरंसा-रिरमयिषा, | रंरमा ; |
| रमणम्, | रमणम्, | रिरंसनम्, | रंरमणम् ; |
| [4]रत्वा, | रमयित्वा, | रिरंसित्वा, | रंरमित्वा ; |
| [5]विरम्य-विरत्य, | विरमय्य, | विरिरंस्य, | विरंरम्य ; |
| रामम् २, रत्वा २, | रमम् २-रामम् २, रमयित्वा २, | रिरंसम् २, रिरंसित्वा २, | रंरमम् २ ; रंरमित्वा ; |

---

1. मनांसि रमयतीति **मनोरमा**। ण्यन्तात् कर्मण्यणि, बाहुलकत्वेन अजादिषु (4-1-4) पाठात् ङीपं बाधित्वा टाप्। **प्रौढमनोरमा, बालमनोरमा** इत्याद्यभिधानमेव टाबन्तत्वे, तत्रापि बाहुलकाश्रयणे बीजमिति ज्ञेयम्। 'अभिधानलक्षणाः कृत्तद्धितसमासान्ताः' इति **भाष्ये**ऽसकृदुक्तमिहावधेयम्।
2. 'यम **उपरमे**' इति धातुकोशेषु निर्देशात् बाहुलकात् भावेऽप्प्रत्ययोऽत्र घञपवाद इति ज्ञेयम्।
3. आरमन्त्यस्मिन् इत्य**आरामः**=उपवनम्। 'अकर्तरि च कारके—' (3-3-19) इति संज्ञायां घञ्।
4. ये तु '**रमु**—' इति धातुममुं पठन्ति, तेषाम् 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पे **रमित्वा-रत्वा** इति रूपद्वयं प्राप्नोति। परं तु, 'तत् (=उदित्त्वम्) **महान्तो** न सहन्ते।' इति **माधवा**द्युक्तेः उदित्त्वमस्या**पाणिनीय**मिति ज्ञेयम्।
5. 'वा ल्यपि' (6-4-38) इति अनुनासिकलोपविकल्पः। तत्र '**वाऽमः**' (वा.6-4-37) इति वचनात् अमन्तानामनुदात्तोपदेशानां धातूनां विकल्पेनानुनासिकलोप इति विज्ञायते। एतदेव व्यवस्थितविभाषात्वेन तत्र तत्रोच्यते।

A. '**अथ रिरंसुममुं** युगपद्गिरौ कृतयथास्वतरुप्रसवश्रिया।' शि. व. 6-1.



[1]रमतिः, [2]रण्डा, [3]रत्नम्, [4]सुरतः-सूरतः, [5]रथः, [6]रमण्यम्, [7]रहः।

(1381) "**रय गतौ**" (I-भ्वादिः-482. सक. सेट्. आत्म.)

रायकः-यिका, रायकः-यिका, रिरयिषकः-षिका, रारयकः-यिका ; रयिता-त्री, राययिता-त्री, रिरयिषिता-त्री, राराययिता-त्री ; इत्यादिकानि समस्तान्यपि रूपाणि भौवादिक**चयति**वत् (502) ज्ञेयानि। निरयः, घञि-रायः, क्विपि-प्ररत्-प्ररतौ-प्ररतः इति, अचि-रयः-इति च विशेषः।

(1382) "**रवि गत्यर्थः**" (I-भ्वादिः-596. सक. सेट्. पर.)

रण्वकः-रण्विका, रण्वकः-ण्विका, रिरण्विषकः-षिका, रारण्वकः-ण्विका ; रण्विता-त्री, रण्वयिता-त्री, रिरण्विषिता-त्री, रारण्विता-त्री ; इत्यादिकानि रूपाणि सर्वाणि भौवादिक**कन्दति**वत् (163) ज्ञेयानि। शतरि-[A]रण्वन्-न्ती, इति भवति।

(1383) "**रश (समूहकिरणशब्देषु ?)**" (I-भ्वादिः. अक. सेट्. पर.)

"**रशि**रस्मा अविशेषेणोपदिष्टः, सः **राशिः, रश्मिः, रशना** इत्येवं-

---

1. '**रमे**र्नित्' (द. उ. 1-32) इत्यतिप्रत्यये रूपम्। रमन्त्यस्याम् इति **रमतिः**=क्रीडा। यद्यपि 'इक्श्तिपौ धातुनिर्देशे' (वा. 3-3-108) इति श्तिपि, शित्त्वाच्छपि **रमतिः** इति सिद्ध्यति ; तथापि तत्र भावार्थकत्वात्, अधिकरणार्थत्वलाभाय **दशपाद्युणादिषु** पाठ इति बोध्यम्।
2. '**ञमन्ताड्डः**' [द. उ. 5-7] इति डप्रत्ययः। बाहुलकात् 'चुटू' (1-3-7) इति डकारस्येत्संज्ञा न। 'ञम्' इति 'ञमङणनम्' इत्यस्य प्रत्याहारः उणादिषु दृश्यते।
3. '**रमे**स्त च' [द. उ. 5-46] इति नप्रत्ययः, तकारश्चान्तादेशः। रमन्तेऽस्मिन् इति **रत्नम्**=वैडूर्यादिः।
4. '**सौ रमेः क्तो** दमे **पूर्वपदस्य च दीर्घः**' [द. उ. 6-23] इति क्तप्रत्यये पाक्षिके पूर्वपददीर्घे च **सुरतः-सूरतः** इति सिध्यतः। **सूरतः**=बुधः।
5. 'हनिकुषिनी**रमि**—' [द.उ.6-27] इत्यादिना क्थन्प्रत्ययः। उपधानकारलोपश्च।
6. '**शॄरम्यो**श्च' [द. उ. 8-8] इति अन्यप्रत्ययः। **रमण्यम्**=शोभनम्।
7. '**रमे**र्देशे हश्च' [द. उ. 9-74] इति असुन्प्रत्ययो देशे गम्यमाने हकारश्चान्तादेशः। रमन्तेऽस्मिन् इति **रहः**=विविक्तदेशः।

A. 'जिन्वन्तमुर्वीं निजरण्वनैः सतां **रण्वन्त**मन्तर्भवधन्वपादपम्।' धा. का. 1-76.

विषयः ।........" इति 'तृज्वत् क्रोष्टुः' (7-1 95) इत्यत्र **भाष्यात्** "**रशिलुशी** अपठितावपि **भाष्यकार**वचनाद् धातू बोद्धव्यौ ।" इति **प्रदीप**-वाक्यात्, "धातुपाठे पठिता**वाचार्येणे**ति बोद्धव्यावित्यर्थः।" इति **उद्द्योत**वाक्याच्च **रश**धातुः धातुपाठे पूर्वमासीदधुना तु भ्रष्ट इति ज्ञायते। तत्र च निरुक्तरूपत्रयविषय एवास्य प्रयोग इत्यपि **भाष्या**दस्माज्ज्ञायते। प्रयुक्तानां शब्दानां **राशि-रश्मि-रशना**त्मकानां लोकप्रयोगानुसारेणास्माभिरर्थ-निर्देश ऊहितः। औत्सर्गिकः शब्विकरण इति ज्ञेयम्। यद्यपि निरुक्तरूपत्रये-ष्वपि इडागमप्रसक्त्यभावात् अनिट्त्वेऽपि न क्षतिः; तथापि अनिट्कारिकासु परिगणनाभावादस्य सेट्त्वमिति ज्ञेयम्। 'शेषात् कर्तरि—'(1-3-78) इति परस्मैपदम्। **राशि**रित्यत्र 'इण् अजादिभ्यः' (वा. 3-3-108) इति इण्प्रत्ययः। उपधावृद्धिः। **रश्मि**रित्यत्र तु बाहुलकादौणादिको मिप्रत्यय इति बोध्यम्। **रशना** इति तु ल्युडन्तम्। बाहुलकात् अजादिषु (4-1-4) पाठात् टाबिति बोध्यम्। उणादिषु 'अशे रश च' (द. उ. 1 15) इत्य-नेन अशधातोः **रश्मि**शब्दनिर्वचनं कृतम्। एतन्निरुक्तभाष्यविरुद्धम्।

(1384) "**रस शब्दे**" (I-भ्वादिः-713. अक. सेट्. पर.)

'**शब्दे शपि रसेत्**, स्नेहास्वादयो रसयेद्रसेः।' (श्लो: 193) इति **देवः**।
रासकः-सिका, रासकः-सिका, रिरसिषकः-षिका, रारसकः-सिका; रसिता-त्री, रासयिता-त्री, रिरसिषिता-त्री, रारसिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कशति**वत् (178) बोध्यानि। क्विपि सुरः-सुरसौ-सुरसः; [1]रसमानः-[A] [2]रसः, वेदरासी, [B]रारस्यमानः; [3]रस्नम्, अस्य धातोः इमानि रूपाण्यधिकानीति विशेषः।

---

1. 'ताच्छील्यवयोवचनशक्तिषु चानश्' (3-2-129) इति ताच्छील्ये चानश्प्रत्यये रूपमेवम्।
2. पचाद्यचि (3-1-134) रूपमेवम्।
3. 'तृषिशुषु**रसिभ्यः** कित्' (द. उ. 5-44) इति नप्रत्यये रूपम्। कित्त्वाद् न वृद्धिः। रसतीति **रस्नम्**=द्रव्यजातिः।

A. 'परिरम्भरुचिं ततिर्जलानामभिनद्वा **रसम**नसारसेन॥' शि. व. 6-75.
B. 'उच्चै **रारस्यमानां** तां कृपणां रामलक्ष्मणौ।' भ. का. 5-96.



(1385) "**रस आस्वादनस्नेहनयोः**"

(X-चुरादिः-1931. सक. सेट्. उभ.) **अदन्तः**।

'**शब्दे** शपि रसेत्, **स्नेहास्वादयो रसयेद्रसेः**।' (श्लो. 193) इति **देवः**।
रसकः-सिका, रिरसयिषकः-षिका; रसयिता-त्री, रिरसयिषिता-त्री; [A]रसयन्-न्ती, रिरसयिषन्-न्ती; रसयिष्यन्-न्ती-ती, रिरसयिषिष्यन्-न्ती-ती; रसयमानः, रिरसयिषमाणः, रसयिष्यमाणः, रिरसयिषिष्यमाणः, सुरः-सुरसौ-सुरसः; रिरसयिट्-यिषौ-यिषः; रसितम्-तः, रिरसयिषि-तम्-तः-तवान्; [1]रसः, विरसः, सुरसः, सुरसी, रिरसयिषुः; रसयि-तव्यम्, रिरसयिषितव्यम्; रसनीयम्, रिरसयिषणीयम्; रस्यम्, रिरसयिष्यम्, ईषद्रसः-दूरसः-सुरसः; रस्यमानः, रिरसयिष्यमाणः, रसः, रिरसयिषः, रसयितुम्, रिरसयिषितुम्; रसना, रिरसयिषा, रसनम्, रिरसयिषणम्, रसयित्वा, रिरसयिषित्वा; [2]प्ररसय्य, प्ररिरसयिष्य, रसम् २, रसयित्वा २, रिरसयिषम् २, रिरसयिषित्वा २; इति विशेषः।

(1386) "**रह त्यागे**" (I-भ्वादिः-731. सक. सेट्. पर.)

'रहयेत् **रहति त्यागे**, गतौ रंहेस्तु रंहति।' (श्लो. 195) इति **देवः**।
राहकः-हिका, राहकः-हिका, रिरहिषकः-षिका, रारहकः-हिका; रहिता-त्री. रहयिता-त्री, रिरहिषिता-त्री, रारहिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**चहति**वत् (514) बोध्यानि, [3]रहः विरहः-[4]विरही, [5]रहस्यम्, अनुरहसम्-अवरहसम्, तप्तरहसम्, [6]राहुः, इमानि रूपाणि

---

1. रस्यन्ते आस्वाद्यन्तेऽनेन इति 'एरच्' (3-3-56) इति अचि रूपम्। घञ् वा इति **केचित्**।
2. 'ल्यपि लघुपूर्वात्' (6-4-16) इति णेरयादेशः।
3. पचाद्यचि रूपमेवम्।
4. 'सुप्यजातौ—' (3 2-78) इनि णिनिप्रत्यये रूपमेवम्। **विरही** इति तु विरहोऽ-स्यास्तीति मत्वर्थीय इनिप्रत्यये रूपम्।
5. औणादिके (9-49) असुन्प्रत्यये **रहः** इति भवति। रहसि भवम्=**रहस्यम्** इत्यत्र दिगादित्वात् (4-3-54) यत्प्रत्यये रूपमेवम्।
6. 'दृसनिजनिचरिचटि**रहिभ्यो** ञुण्' [1-88] इति ञुण्प्रत्यये रूपमेवम्।

A. 'देवौघे हृतदुःखने **रसयति** व्याकर्षदेनं क्षितौ॥' धा. का. 3. 62.

अस्य धातोः विशेषेण भवन्ति ।

(1387) **"रह त्यागे"** (X-चुरादिः-1626. सक. सेट्. उभ.)

[1]**ज्ञपादिः** । धातुममुं **क्षीरस्वामि-मैत्रेयौ** न पठतः । [2]रहकः-हिका, रिरहयिषकः-षिका ; रहयिता-त्री, रिरहयिषिता-त्री ; इत्यादीनि रूपणि समस्तान्यपि चौरादिक**चहयति**वत् (515) बोध्यानि । क्विपि-[3]प्ररट्-प्ररड्-प्ररहौ-प्ररहः ; ल्यपि-[4]प्ररहय्य[A], णमुलि-रहम् २ राहम् २ इमानि रूपाण्यधिकान्यत्रेति विशेषः ।

(1388) **"रह त्यागे"** (X-चुरादिः-1859. सक. सेट्. उभ.)

कथादिः, **अदन्तः**, ।

'**रहयेत् रहति त्यागे** गतौ रंहेस्तु रंहति ।' (श्लो. 195) इति **देवः** ।

रहकः-हिका, रिरहयिषकः-षिका ; रहयिता-त्री, रिरहयिषिता-त्री ; इत्यादिकानि समस्तान्यपि रूपाणि चौरादिक**चहयति**वत् (515) बोध्यानि । णमुलि रहम् २, इत्येकमेव रूपमिति विशेषः । यत्प्रत्यये-विरह्यः[B] इति ज्ञेयम् ।

(1389) **"रहि गतौ"** (I-भ्वादिः-732. सक. सेट्. पर.)

'रहयेत् रहति त्यागे **गतौ रंहेस्तु रंहति** ।' (श्लो. 195) इति **देवः** ।

रंहकः-हिका, रंहकः-हिका, रिरंहिषकः-षिका, रारंहकः-हिका ; रंहिता-त्री, रंहयिता-त्री, रिरंहिषिता-त्री, रारंहिता-त्री ; इत्यादीनि

1. कथादिषु (अदन्तेषु) उत्तरत्र पठिष्यमाणेन **रह**धातुनैव रूपाणां सिद्धेः ज्ञपादिपञ्चकेषु **रह**धातोः चुरादिष्वेव पूर्वत्र पाठो मा भूदिति **क्षीरस्वाम्यादयः** । '**रहयेत्—**' इति श्लोकं (195) विवृण्वता **पुरुषकारेणा**पि "—'रह त्यागे' कथादिर्भ्वादिश्च" इत्युक्तम् । तेन **देवस्या**प्ययमेव पक्ष इति ज्ञायते । युक्तं चैतत् । यतः ज्ञपादिषु पाठमस्याभ्युपगच्छन्तोऽपि केषाञ्चिन्मतत्वेनैवाभ्यधुः । न स्वतन्त्रत्वेन । ज्ञपादिपञ्चकान्तर्भावेन पठितॄणां णमुलि दीर्घविकल्प एक एव कृदन्ते फलमस्येति बोध्यम् ।

2. ज्ञपादिषु अस्य धातोः पाठात् मित्त्वेन 'मितां ह्रस्वः' (6-4-92) इति णौ उपधायाः ह्रस्वः । एवमेव ण्यन्तात्, ण्यन्तप्रकृतिकसन्नन्तादपि उपधाह्रस्वो बोध्यः ।
3. 'हो ढः' (8-2-31) इति ढत्वे, अवसाने चर्त्वविकल्पे च रूपमेवम् ।
4. ल्यपि, 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशे रूपमेवम् ।

A. 'आससाद **विरहय्य** धरित्रीं चक्रवाकहृदयान्यभितापः ॥' कि. अ. 9. 4.
B. 'मन्त्री तौ प्रापट्य पाशवटनैः पापौ **विरह्यौ** पुरात् ।' धा. का. 3-53.



रूपाणि सर्वाणि प्रातिस्विकरूपाणि विना भौवादिक**कम्पति**वत् (166) ज्ञेयानि । शतरि रंहन्-न्ती, शानचि ण्यन्ते-रंहयमाणः, क्विपि-रन्-रंहौ-रंहः, इमानि रूपाणि अस्य धातोः विशेषेण भवन्तीति ज्ञेयम् ।

(1390) **"रहि भाषार्थः"** (X-चुरादिः-1799. सक. सेट्. उभ.)

आस्वदीयः ।

रंहकः-हिका, रिरंहयिषकः-षिका ; [1]रंहकः-हिका ; रिरंहिषकः-षिका, [2]रारंहकः-हिका ; रंहयिता-त्री, रिरंहयिषिता-त्री, रंहिता-त्री, रिरंहिषिता, रारंहिता-त्री;

इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चम्पयति**वत् (499) बोध्यानि ।

(1391) **"रा दाने** (II-अदादिः-1057. सक. अनि. पर.)

'—आदाने' इति **केचित्** ।

'रैशब्दे रायतीतीष्टं, **राऽऽदाने राति** शब्लुकि ॥' (श्लो. 11 इति **देवः** ।

| | | | |
|---|---|---|---|
| रायकः-यिका, | रापकः-पिका, | रिरासकः-सिका, | रारायकः-यिका ; |
| राता-त्री, | रापयिता-त्री, | रिरासिता-त्री, | रारायिता-त्री ; |
| रान् न्ती-ती, | रापयन्-न्ती, | रिरासन्-न्ती ; | — |
| रास्यन्-न्ती-ती, | रापयिष्यन्-न्ती-ती, | रिरासिष्यन्-न्ती-ती ; | — |
| व्यतिराणः, | रापयमाणः, | व्यति रिरासमानः, | रारायमाण ; |
| व्यतिरास्यमानः, | रापयिष्यमाणः, | रिरासिष्यमाणः, | रारायिष्यमाणः ; |
| राः-रौ-राः, | राप्-रापौ-रापा ; | — | — |
| रातम्-तः, | रापितः, | रिरासितः, | रारायितः-तवान् ; |

[3]सुरः-सुरा, [4]धीरः, द्रव्यरः, गोर, मुद्रः, शुभंर, राप, रिरासुः-रिरासयिषुः, राराः ;

1. अस्य धातोः **इदित्त्वेन** णिचो वैकल्पिकत्वात् णिजभावपक्षे रूपाणि लिखितानि ।
2. अस्य धातोः इदित्त्वेन 'अनिदिताम्—' (6-4-24) इति यङ्निमित्तकः नकारलोपो न भवति ।
3. '**आतश्चोपसर्गे**' (3 1-136) इति कर्तरि कप्रत्ययः । '**आतो** लोप इटि च' (6-4-64) इत्याकारलोपः । स्त्रियामदन्तलक्षणे टापि **सुरा**=मद्यविशेषः ।
4. धियं राति=आदत्ते इति **धीरः** । कर्मण्युपपदे, '**आतो**ऽनुपसर्गे कः' (3-2-3) इति कर्तरि कप्रत्ययः । एवमेव **मुद्रः** इत्यादिष्वपि ज्ञेयम् ।

| | | | |
|---|---|---|---|
| रातव्यम्, | रापयितव्यम्, | रिरासितव्यम्, | རारायितव्यम् ; |
| राणीयम्, | रापणीयम्, | रिरासनीयम्, | रारायणीयम् ; |
| रेयम्, | राप्यम्, | रिरास्यम्, | राराय्यम् ; |
| [1]ईषद्राणः-दूराणः-सुराणः ; | | — | — |
| रायमाणः, | रापयमाणः, | रिरास्यमानः, | राराय्यमानणः , |
| रायः, | रापः, | रिरासः, | रारायः ; |
| रातुम्, | रापयितुम्, | रिरासितुम्, | रारायितुम् ; |
| रतिः, प्ररा, | रापणा, | रिरासा, | राराया ; |
| राणम्, | रापणम्, | रिरासनम्, | रारायणम् ; |
| रात्वा, | रापयित्वा, | रिरासित्वा, | रारायित्वा ; |
| प्रराय, | प्रराप्य, | प्ररिरासिष्य, | प्रराराय्य ; |
| रायम् २, } रात्वा २, } | रापम् २, } रापयित्वा २, } | रिरासम् २, } रिरासित्वा २, } | रारायम् २ ; } रारायित्वा २, } |

[2]राका, [3]रात्रिः, [4]राः-रायौ-रायः ।

## (1392) "राखृ शोषणालमर्थयोः"

(I-भ्वादिः-122सक. सेट्. आत्म.)

राखकः-खिका, राखकः-खिका, रिराखिषकः-षिका, रराखः-खिका ; राखिता-त्री, राखयिता-त्री, रिराखिताषिता-त्री, राराखिता-त्री; इत्यादीनि समस्तान्यपि रूवाणि भौवादिकद्राखतिवत् (879) ज्ञेयानि । [A]राखितः ।

---

1. '**आतो** युच्' (3-3-128) इति ईषदाद्युपपदेषु खलपवादो युच् । णत्वम् ।
2. 'कृदाधारा—' [द. उ. 3-18] इति कन्प्रत्ययः । **राका**=पूर्णिमारूपकाल-विशेषः ।
3. '**राशदिभ्यां** त्रिप् , [द. उ. 1-36] इति त्रिप्प्रत्ययः । **रात्री** इति तु, 'कृदि-कारादक्तिनः' (ग. सू. 4-1-45) इति ङीषि बोध्यम् ।
4. '**रातेर्डैः**' [द. उ 2-10] इति डैप्रत्ययः । एजन्तेऽपि, 'कृन्मेजन्तः' (1-1-39) इति नास्याव्ययत्वम् । 'च्विरव्ययम्' [द. उ. 2-13] इत्यनेन सूत्रेण च्विप्रत्ययान्तस्यैवाव्ययत्वमुणादिषु, नान्यस्येति नियमनेन ज्ञापनात् ।

A. '**अराखित**त्वगिभरलाखितच्छदैः प्रद्राखिताध्राखिफलैश्च शाखिभिः ।' धा. का. 1.18



## (1393) "राघृ सामर्थ्ये" (I-भ्वादिः-112. अक. सेट्. आत्म.)

राघकः-घिका, राघकः-घिका, रिराघिषकः-षिका, राराघकः-घिका ; राघिता-त्री, राघयिता-त्री, रिराघिषिता-त्री, राराघिता-त्री ; इत्यादिकानि समस्तान्यपि रूपाणि भौवादिकद्राखतिवत् (879) ज्ञेयानि । अस्यात्मने-पदत्वात् राघमानः, राघिष्यमाणः, रिराघिषमाणः, रिराघिषिष्यमाणः इति शानचि रूपाणि बोध्यानि । [A]राघितः ।

## (1394) "राजृ दीप्तौ" (I-भ्वादिः-822. अक. सेट्. उभ.) **फणादिः** ।

राजकः-जिका, राजकः-जिका, रिराजिषकः-षिका, राराजकः-जिका , राजिता-त्री, राजयिता-त्री, रिराजिषिता-त्री, राराजिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककाशतिवत् (186) ज्ञेयानि ।

[1]रराजिवान्-रेजिवान् , [2]सम्राट्, [3]विश्वाराट्-राट्, चेदिराट्, [4]राष्टिः, [5]राजिः, [6]राजानकः, [7]राजा, [8]राष्ट्रम्-राष्ट्री, इतीमान्यस्माद् भवन्तीति बोध्यम् ।

---

1. कर्तरि लिटः क्वसौ, '**फणां च सप्तानाम्**' (6-4-125) इत्येत्वाभ्यासलोप-विकल्पः । 'वस्वेकाजाद्घसाम्' (7-2-67) इतीडागमः ।
2. 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनी**राजामुपसर्गेऽपि क्विप्**' (3-2-61) इति 'सम्' इत्युपसर्गपूर्वकादस्मात् क्विप् । 'मोऽनुस्वारः' (8-3-23) इत्यस्यापवा-दतया,, '**मो राजि समः क्वौ**' (8-2-25) इति प्रतिपदविहितो मकारः । .
3. '**विश्वाराट्**' इत्यत्र 'अन्येभ्योऽपि दृश्यते' (3-2-178) इति क्विप् । 'विश्वस्य **वसुराटोः**' (6-3-128) इति दीर्घः ।
4. 'क्तिन् **आबादिभ्यः**—' (वा. 3-3-94) इति बाहुलकात् क्तिन् । हलन्तलक्षणाका-रप्रत्ययस्यापवादः । 'तितुत्र—' (7-2-9) इतीण्निषेधे 'व्रश्चभ्रस्जसृजमृजयज-राजभ्राजच्छशां षः' (8-2-36) इति झलि परतो, जकारस्य षकारः ।
5. 'इक् **कृष्यादिभ्यः**' (वा. 3-3-108) इतीक्प्रत्यये रूपम् । राजते इति **राजिः**।
6. बाहुलकात् 'आनकः शीङ्भियः' (द. उ. 3-26) इत्यानकप्रत्यये रूपम् । अत्यर्थं राजते इति **राजानकः** । अत्र सूत्रे **राज**धातोरसंग्रहेऽपि, "प्राक् प्रत्ययनिर्देशः" (**दशपाद्युणादिवृत्तिः** 10-2) इत्यसकृदुक्तत्वादत्रापि **राजते**रानकप्रत्यय इति बोध्यम् ।
7. 'कनिन् युवृषितक्षि**राजि**—' (द. उ. 6-51) इति कनिन्प्रत्ययः । 'सर्वनामस्थाने चासम्बुद्धौ, (6-4-8) इति दीर्घे, 'न लोपः प्रातिपदिकान्तस्य' (8-2-7) इति नकारलोपः ।
8. ष्ट्रन्प्रत्यये रूपम् । 'तितुत्र—' (7-2-9) इतीण्निषेधे षत्वम् । स्त्रियाम् षित्त्वात् ङीष् ।

A. 'प्रवर्ध्घमानस्य च तस्य सत्वरं विमङ्घनस्याधिक**राघित**ात्मनः ।' धा.का. 1.16.

**(1395) "राध संसिद्धौ"** (IV-दिवादिः-1180. अक. अनि. पर.) [अ]

'**राध्नोति संसिद्धयर्थे श्नौ, राध्येद् वृद्धावकर्मकात्** ।' (श्लो. 122) इति **देवः** । "अस्य तु सिद्धिद्रोहदैवपर्यालोचनादयोऽर्थाः ।" इति **धा. का. व्याख्या** (2-63) ।

राधकः-धिका, राधकः-धिका, रिरात्सकः-त्सिका, राराधकः-धिका ; राद्धा-राद्धी, राधयिता-त्री, रिरात्सिता-त्री, राराधिता-त्री ; इतीमानि सर्वाण्यपि रूपाणि दैवादिक**क्षुध्यति**वत् (315) बोध्यानि । देवदत्ताय [1]राध्यन्-न्ती-ती, [2]राध्यन् ओदनः स्वयमेव, [3]राद्धिः, इतीमान्यस्माद् भवन्ति ।

---

1. '**राधोऽकर्मकाद् वृद्धावेव**' (ग. सू. दिवादिषु) इति श्यन् । स्त्रियाम्, 'आच्छीनद्योर्नुम्' (7-1-80) इति नुम्विकल्पः । '**राधीक्ष्योर्यस्य** विप्रश्नः' (1-4-39) इति चतुर्थी । नैमित्तिकः पृष्टः सन् देवदत्तस्य दैवं पर्यालोचयन् इत्यर्थः ।
2. कर्मकर्तरि प्रयोगः । अत्र '**राध्यतेर्विक्लित्तिवचनत्वात्**....'इति **भाष्यप्रदीपः** । तेनात्र सामान्यतः सिद्धयर्थकत्वेऽपि सिद्धिविशेषरूपपाकोऽपि धातूनामनेकार्थकत्वाद् बोध्यः ।
3. हलन्तलक्षणाकारप्रत्ययापवादः 'क्तिन् आबादिभ्यः....' (वा. 3-3-94) इति क्तिन् ।

[अ] '**राधोऽकर्मकाद् वृद्धावेव**' (ग. सू.) इति दिवादिषु पठ्यते । अस्यायमर्थः-**एव**कारो भिन्नक्रमः । अस्मादकर्मकादेव श्यन् । वृद्धिग्रहणं तु उदाहरणप्रदर्शनार्थम् यथा वृद्धावकर्मकः, एवमकर्मकेषु सर्वत्राप्यर्थेषु श्यनं लभतेऽयमिति । ततश्च, 'वृद्धिक्षय-भय-जीवित-मरणं लज्जा-सत्ता-स्थिति-जागरणम् ।
शयन-क्रीडा-रुचि-दीप्त्यर्थं धातुगणं तमकर्मकमाहुः॥' इत्युपात्तानामर्थानाम् वृद्धिशब्द उपलक्षक इति भावः । एवञ्च, '**राध्येद्** वृद्धावकर्मकात् ।' इति **देव**वचने (श्लो 1.22) वृद्धिग्रहणं तु अकर्मकक्रियोदाहरणमात्रमिति **पुरुषकारे** व्यक्तम् । **धातुकाव्यव्याख्यायां** तु (2-63) **एव**कारस्य इवार्थकत्वमाश्रित्य, 'वृद्धावेव= वृद्धयर्थ इव ।' इति विवृतम् । **काश्यपस्तु एव**कारस्य यथाश्रुतान्वयमिच्छन् वृद्धयर्थ एव श्यन् इत्यभ्युपगतवानिति **माधवधातुवृत्तितो** ज्ञायते । सिद्धयर्थे '**राध्यत्यो**दनः स्वयमेव ' इति **भाष्य** (3-1-87) प्रयोगात्, 'देवदत्ताय **राध्यति**' इति दैवपर्यालोचनार्थे **काशिकायां** (1-4-37) प्रयुक्तत्वात्, '—यन्मह्य**मपराध्यति** ।' (शिशुपालवधे 2-11) इति द्रोहार्थे **माघ**प्रयोगाच्च **काश्यपो**क्तिर्न समीचीना ; उपात्तस्थलेषु सर्वत्राकर्मकत्वे सति वृद्धयर्थत्वाभावात् । **विस्तरस्तु अन्यत्र** ।



**(1396) "राध संसिद्धौ"** (V-स्वादिः-1262. सक. अनि. पर.)

'**राध्नोति संसिद्धयर्थे श्नौ** राध्येद् वृद्धावकर्मकात् ।' (श्लो. 122) इति **देवः** । राधकः-धिका, राधकः-धिका, [1]आरिरात्सकः-प्रतिरित्सकः-त्सिका, राराधकः-धिका ; राद्धा-राद्धी, राधयिता-त्री, आरिरात्सिता-त्री, राराधिता-त्री ; [2]राध्नुवन्-ती, राधयन्-न्ती, आरिरात्सन्-प्रतिरित्सन्-न्ती ; — इत्यादीनि सर्वाण्यपि रूपाणि दैवादिक**क्षुध्यति**वत् (315) ज्ञेयानि । [3]अपरेधिवान् ।

**(1397) "रासृ शब्दे"** (I-भ्वादिः-626. अक. सेट्. आत्म.)

रासकः-सिका, रासकः-सिका, रिरासिषकः-षिका, रारासकः-सिका ; रासिता-त्री, रासयिता-त्री, रिरासिषिता-त्री, रारासिता-त्री ; इत्यादिकानि समस्तान्यपि रूपाणि भौवादिक**कासति**वत् (188) बोध्यानि । घञि-[4]रासः, [5]रासभः इमे रूपे विशेषेण भवतः ।

**(1398) "रि हिंसायाम्"** (V-स्वादिः-1275. सक. अनि. पर.)

अयं धातुः **क्षीरतरङ्गिण्यां** न दृश्यते ।

रायकः-यिका, रायकः-यिका, रिरीषकः-षिका, रेरीयकः-यिका ; रेता-त्री, राययिता-त्री, रिरीषिता-त्री, रेरीयिता-त्री ;

---

1. संसिद्धयर्थे रूपमेवम् । धातूनामनेकार्थत्वात् हिंसार्थे तु '**राधो हिंसायां** सनीस् वाच्यः' (वा. 7-4-54) इति सनि इस् । 'अत्र लोपोऽभ्यासस्य' (7-4-53) इत्यभ्यासलोपः । 'स्कोः—' (8-2-29) इति सकारस्य लोपः । इदमेव **वार्तिकं** (वा. 7-4-54) धातोरस्य हिंसार्थत्वे ज्ञापकम् । हिंसार्थे सकर्मकोऽयं धातुः ।
2. धातोः सकर्मकत्वे '**स्वादिभ्यः—**' (3-1-73) इति श्नुः । अकर्मकत्वे तु '**राधोऽकर्मकाद् वृद्धावेव**' (ग. सू. दिवादौ) इति श्यनेव ।
3. कर्तरि लिटः क्वसौ, '**राधो हिंसायाम्**' (6-4-123) इति एत्वाभ्यासलोपौ । अत्रापि धातोर्हिंसार्थकत्वस्यानूद्यमानत्वात् धातोरनेकार्थत्वमिति ज्ञेयम् । हिंसाभिन्नार्थेषु तु **रराधिवान्** इति क्वसुप्रत्यये रूपमिति ज्ञेयम् ।
4. 'हलश्च' (3-3-121) इति संज्ञायां घञि रूपमेवम् । **रासः**=क्रीडाविशेषः ।
5. '**रासि**वल्लिभ्यां च' (द. उ. 7. 21) इति अभच्प्रत्यये रूपमेवम् । अत्र '**रासृ दीप्तौ**' इति **दशपाद्युणादिवृत्तिपाठः** ।

इत्यादिकानि सर्वाण्यपि रूपाणि तौदादिक**पियति**वत् (991) ज्ञेयानि। शतरि-[1]रिण्वन्-ती, [2]व्यतिरिण्वन्-ती, इति विशेषः।

**(1399) " रि गतौ "** (VI-तुदादिः-1404. सक. अनि. पर.)

रायकः-यिका, रायकः-यिका, रिरीषकः-षिका, रेरीयकः-यिका ; रेता-त्री, राययिता-त्री, रिरीषिता-त्री, रेरीयिता-त्री ; इत्यादिकानि सर्वाण्यपि रूपाणि तौदादिक**पियति**वत् (991) ज्ञेयानि। शतरि-रियन्[A]-न्ती-ती, इति विशेषः।

**(1400) " रिख गत्यर्थः "** (I-भ्वादिः-155. सक. सेट्. पर.)

'**द्रमिडास्तु रिख** (खि) मपि पठन्ति।' इति **मा. धा. वृत्त्यादिषु** दर्शनादयं लिख्यते।

रेखकः-खिका, रेखकः-खिका, रिरिखिषकः-रिरेखिषकः-षिका, रेरिखकः-खिका; रेखिता-त्री, रेखयिता-त्री, रिरिखिषिता-रिरेखिषिता-त्री, रेरिखिता-त्री ; इत्यादीनि रूपाणि सर्वाणि भौवादिक**किटति**वत् (190) बोध्यानि। रेखा[3]।

**(1401) " रिखि गत्यर्थः "** (I-भ्वादिः-155. सक. सेट्. पर.)

'**द्रमिडानां रिखि**रपि। **रिङ्खति, रिङ्खणम्**=स्खलनम्।' इति **क्षीरतरङ्गिण्यां** दर्शनात्, **धातुकाव्ये** (1-19) उदाहरणाच्चायं लिख्यते। रिङ्खकः-ङ्खिका, रिङ्खकः-खिका, रिरिङ्खिषकः-षिका, रेरिङ्खकः-ङ्खिका ; रिङ्खिता-त्री, रिङ्खयिता-त्री, रिरिङ्खिषिता-त्री, रेरिङ्खिता-त्री ; इत्यादिकानि सर्वाण्यपि रूपाणि भौवादिक**कङ्कति**वत् (140) ज्ञेयानि। क्तप्रत्यये-रिङ्खितः[B] इति।

---

1. अस्य धातोः स्वादित्वात्, श्नुप्रत्यये, णत्वे च रूपमेवम्।
2. 'न गति**हिंसार्थेभ्यः**' (1-3-87) इति शानचो निषेधात् कर्मव्यतीहारेऽपि परस्मैपदमेव।
3. स्त्रियाम्, भिदादि (3-3-104) पाठात् अङि रूपमेवम्।

A. 'व्यापारेऽत्र तदामरानपि **रियन्**नाशाः पियन्नाधित....।' धा. का. 2-83.

B. 'रखच्छशं रङ्खितरङ्कु **रिङ्खित**द्विपं लखत्केसरिलङ्खदारवम्॥' ध. का. 1.19.



**(1402) " रिगि गत्यर्थः "** (I-भ्वादिः-154. सक. सेट्. पर.)

रिङ्गकः-ङ्गिका, रिङ्गकः-ङ्गिका, रिरिङ्गिषकः-षिका, रेरिङ्गकः-ङ्गिका ; रिङ्गिता-त्री, रिङ्गयिता-त्री, रिरिङ्गिषिता-त्री, रेरिङ्गिता-त्री ; इत्यादीनि रूपाणि सर्वाणि भौवादिक**कङ्कति**वत (140) ज्ञेयानि। खलि ईषद्रिङ्गः-दूरिङ्गः-सुरिङ्गः ; शतरि-रिङ्गन्-न्ती इति विशेषः।

**(1403) " रिच वियोजनसंपर्चनयोः "**

(X-चुरादिः-1817. सक. सेट्. उभ.) आधृषीयः।

'–**वियोजनसंयमनयोः** इति **मुकुटः**' इति **अमरसुधा** (1-17।)। **सम्पर्चनम्**=मिश्रीकरणम्। अभिधानवैचित्र्यात् धातोरस्य परस्परविरुद्धार्थकत्वम्।

'रिचिर् विरेचने रिङ्क्ते रिणक्ति श्ने, **वियोजने**।
**सम्पर्चने च यौ वा णौ रेचयत्यपि रेचति**॥' (श्लो. 52) इति **देवः**।

रेचकः-चिका, रिरेचयिषकः-षिका, रेचकः-चिका, रिरिक्षकः-क्षिका, रेरिचकः-चिका ; रेचयिता-त्री, रिरेचयिषिता-त्री, रेचिता-त्री, रिरिक्षिता-त्री, रेरिचिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चर्पयति**वत् (554) बोध्यानि। आधृषीयत्वादस्य णिज्विकल्पः। णिजभावपक्षे 'पचिं वचिं वि**चिरिचि**-रञ्जिपृच्छतीन्—' (व्याघ्रभूतिकारिका 7-2-10) इत्यनिट्कारिकासु पाठादनिट्त्वं बोध्यम्। अत्र '**रिचि**—' इति रौधादिकस्य, चुरादिषु पठितस्य णिजभावपक्षे औत्सर्गिकशब्विकरणकस्य च सामान्येन ग्रहणम्। णिजभावपक्षे निष्ठायाम्—[A]विरिक्तः।

**(1404) " रिचिर् विरेचने "** (VII-रुधादिः-1441. अक. अनि. उभ.)

'**विरेचनम्**=निःसारणम्।' इति **क्षीरस्वामी**।

'रिचिर् विरेचने रिङ्क्ते **रिणक्ति** श्ने, वियोजने।
सम्पर्चने च यौ वा णौ रेचयत्यपि रेचति॥' (श्लो. 52) इति **देवः**।

रेचकः-चिका, रेचकः-चिका, [1]रिरिक्षकः-क्षिका, रेरिचकः-चिका ; रेक्ता-रेक्त्री, रेचयिता-त्री, रिरिक्षिता-त्री, रेरिचिता-त्री ;

---

1. अनिट्कारिकासु (काशिका 7-2-10) पाठादस्यानिट्त्वम्। 'इको झल्' (1-2-9) इति सनः कित्त्वे, 'चोः कुः' (8-2-30) इति कुत्वे षत्वे च रूपम्।

A. 'अजरद्वृषवद् **विरिक्त**पीडः पुनरभ्येत्य विशिष्टचित्तताऽपि।' धा. का. 3-49.

[1]रिम्फन्[A]-ती, रेचयन्-न्ती, रिरिक्षन्-न्ती ; —
रेक्ष्यन्-न्ती-ती, रेचयिष्यन्-न्ती-ती, रिरिक्षिष्यन्-न्ती-ती ; —
रिम्फानः, रेचयमानः, रिरिक्षमाणः, रेरिच्यमानः ;
रेक्ष्यमाणः, रेचयिष्यमाणः, रिरिक्षिष्यमाणः, रेरिचिष्यमाणः ;
[2]रेक्यम् , रेकः-अतिरेकः-व्यतिरेकः-उद्रेकः, [3]विरेचनम्, [4]रिक्तः,
[5]विरिञ्चः-विरिञ्चिः-विरिचिनः, [6]रिक्थम्, [7]रेक्णः, इत्यादीनि सर्वाण्यपि रूपाणि प्रातिस्विकरूपाणि विना रौधादिकभुनक्तिवत् (1162) बोध्यानि ।

## (1405) " रिफ कत्थनयुद्धनिन्दाहिंसादानेषु "

(VI-तुदादिः-1306. सक. सेट्. पर.)

'ऋफ—' इति **क्षीरस्वामी** । " ....' रिह इति **द्रमिडाः**—इति **स्वामी** । अनिट्कारिकासु (काशिका 7-2-10) **वामनश्च**—'**रिहिलुही** धातुषु न पठ्येते । **कैश्चिदभ्युपगम्येते**' इति । अत्र **न्यासे**—'**कैश्चिदिति** । **आपिशलिप्रभृतिभिः** ।' इति । तस्मात् तावपि स्त एव । प्रयुज्यते च— 'शिशुं न विप्रा मतिभी **रिहन्ति** ।' इति ।" इति **माधवधातुवृत्तिः** । अत्रोपात्तः **स्वामी न क्षीरस्वामी,** अपितु अन्य इति ज्ञेयम् ।

---

1. शतरि, विकरणप्रत्यये श्नमि, 'श्नसोरल्लोपः' (6-4-111) इत्यकारलोपे, नकारस्य अनुस्वारे परसवर्णे च रूपमेवम् ।
2. निष्ठायामनिट्त्वात्, ण्यति घञि च 'चजोः कु घिण्ण्यतोः' (7-3-52) इति कुत्वम् ।
3. **विरेचनम्** = रक्तस्रावरूपो व्याधिविशेषः । 'रोगाख्यायां ण्वुल् बहुलम्' (3-3-108) इत्यत्र **बहुल**ग्रहणात् व्याधिवाचकत्वेऽपि ल्युडेवात्र ।
4. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां कर्तरि क्तप्रत्ययः । **रिक्तः** = निर्धनः ।
5. "**विरिञ्चः—विरिञ्चिः—विरिचिनः**, एते पृषोदरादयः (6-3-109) ।" इति **मा. धा. वृत्तिः** ।
6. 'पातृतुदिवचिरिचि—' (द. उ. 6.32) इति थक्प्रत्ययः । कित्त्वान्न गुणः । रिच्यते तदिति **रिक्थम्** = गृहमूलधनम् । गोत्रजद्रव्यमिति **केचित्** ।
7. '**रिचेर्धने** घिच्च' (द. उ. 9.59) इति असुन्प्रत्ययः । घित्त्वात् कुत्वम् । **रेक्णः** = धनम् । '**रेकः**—' इति **दशपाद्युणादिवृत्तौ** पूर्वसूत्रान्नुममनुवर्त्योदाहृतं दृश्यते । तत्तु **तत्त्वबोधिन्यादिषु** खण्डितम् ।

A. '......प्रच्छिन्नसंशयमतिर्मुदमाशु **रिञ्चन्** ।' धा. का. 3-1.



रेफकः-फिका, रेफकः-फिका, रिरेफिषकः-रिरिफिषकः-षिका, रेरिफकः-फिका ; रेफिता-त्री, रेफयिता-त्री, रिरेफिषिता-रिरिफिषिता-त्री, रेरिफिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**किलति**वत् (193) बोद्धव्यानि । [1]रेफित्वा । [2]रेफः ।

## (1406) " रिवि गत्यर्थः " (I-भ्वादिः-595. सक. सेट्. पर.)

रिण्वकः-रिण्विका, रिण्वकः-ण्विका, रिरिण्विषकः-षिका, रेरिण्वकः-ण्विका ; रिण्विता-त्री, रिण्वयिता-त्री, रिरिण्विषिता-त्री, रेरिण्विता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**जिन्वति**वत् (604) बोध्यानि । ल्युटि [A]रिण्वनम् ।

## (1407) " रिश हिंसायाम् " (VI-तुदादिः-1420. सक. अनि. पर.)

'—**रिंशि** रुशिं क्रोशतिमष्टमं विशिम् ।' (व्याघ्रभूतिकारिका 7-2-10) इति वचनाद् धातुरयमनिट् ।
[B]रेशकः-शिका, रेशकः-शिका, रिरिक्षकः-क्षिका, रेरिशकः-शिका ; रेष्टा-रेष्ट्री, रेशयिता-त्री, रिरिक्षिता-त्री, रेरिशिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि दैवादिक**खिद्यति**वत् (349) ज्ञेयानि ।

## (1408) " रिष हिंसार्थः " (I-भ्वादिः-694. सक. सेट्. पर.)

रेषकः-षिका, रेषकः-षिका, [3]रिरिषिषकः-रिरेषिषकः-षिका, रेरिषकः-षिका ;

---

1. अत्र, 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधात् रूपमेकमेवेति **माधवधातुवृत्तिः** । 'रलो व्युपधात् हलादेः संश्च' (1-2-26) इति कित्त्वविकल्पे तु **रिफित्वा रेफित्वा** इति रूपद्वयं भवेत्, तत्तु 'नोपधात् थफान्ताद् वा' (1-2-23) इत्यत्र नोपधादेवेति नियमाश्रयणात् नेति **माधवाशयः** । वस्तुतस्तु 'प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते' (परि.64) इति न्यायेन इकारोकारोपधधातुषु विषये परत्वात् अपवादत्वाच्च 'रलो व्युपधात्—' (1-2-26) इत्यस्य प्रवृत्तेरनिवार्यतया, **रिफित्वा** इति पाक्षिकरूपस्य सिद्ध्यर्थं च नान्ते इव कित्त्वविकल्प एव न्याय्यः । नियमाश्रयणे च न किञ्चिद् बीजं दृश्यते । विस्तरस्त्व**न्यत्रे**त्यत्रालम् ।
2. 'हलश्च' (3-3-121) इति संज्ञायां घञ् । **रेफः** = अधमः । धात्वर्थोऽत्र निन्दा ।
3. 'रलो व्युपधाद्धलादेः संश्च' (1-2-26) इति सनः कित्त्वविकल्पः । तेन रूपद्वयम् ।

A. 'जिन्वन्तमुर्वी निज**रिण्वनैः** सतां रण्वन्तमन्तर्भवधन्वपादपम् ।' धा. का. 1.76.

B. 'रोषच्छुप्तधियाऽथ रोष्टुमभितो योधान् द्विषद्रे**शकान्**—' धा. का. 3-83.

[1]रेषिता-त्री-[A]रेष्टा-रेष्ट्री, रेषयिता-त्री, रिरिषिषिता-रिरेषिषिता-त्री, रेरिषिता-त्री ;

रेषन्-न्ती, रेषयन्-न्ती, रिरिषिषन्-रिरेषिषन्-न्ती ;—

रेषिष्यन्-न्ती-ती, रेषयिष्यन्-न्ती-ती, रिरिषिषिष्यन्-रिरेषिषिष्यन्-न्ती-ती ;—

—रेषयमाणः, रेषयिष्यमाणः, रेरिष्यमाणः, रेरिषिष्यमाणः ;

रिट्-रिड्-रिषौ-रिषः ; — — —

[2]रिष्टम्-ष्टः, रेषितः, रिरिषिषितः-रिरेषिषितः, रेरिषितः-तवान् ;

रेषः, [3]रेषणः, [4]अरिष्टः, [5]रेट्-रेषौ-रेषः, रेषः, रिषिषिषुः-रिरेषिषुः, रेरेषः ;

रेषितव्यम्-रेष्टव्यम्, रेषयितव्यम्, रिरिषिषितव्यम्-रिरेषिषितव्यम्, रेरिषितव्यम् ;

रेषणीयम्, रेषणीयम्, रिरिषिषणीयम्-रिरेषिषणीयम्, रेरिषणीयम् ;

रेष्यम्, रेष्यम्, रिरिषिष्यम्-रिरेषिष्यम्, रेरिष्यम् ;

ईषद्रेषः-दूरेषः-सुरेषः ; — — —

रिष्यमाणः, रेष्यमाणः, रिरिषिष्यमाणः-रिरेषिष्यमाणः, रेरिष्यमाणः ;

रेषः, रेषः, रिरिषिषः-रिरेषिषः, रेरिषः ;

रेषितुम्-रेष्टुम्, रेषयितुम्, रिरिषिषितुम्-रिरेषिषितुम्, रेरिषितुम् ;

रिष्टिः, रेषणा, रिरिषिषा-रिरेषिषा, रेरिषा ;

रेषणम्, रेषणम्, रिरिषिषणम्-रिरेषिषणम्, रेरिषणम् ;

[6]रिषित्वा-रेषित्वा-रिष्ट्वा, रेषयित्वा, रिरिषिषित्वा-रिरेषिषित्वा, रेरिषित्वा ;

प्ररिष्य, प्ररेष्य, प्ररिरिषिष्य-प्ररिरेषिष्य, प्ररेरिष्य ;

---

1. 'तीषसहलुभरुषरिषः' (7-2-48) इति तकारादावार्धधातुके इड्विकल्पः । इडभाव-पक्षे 'ष्टुना ष्टुः' (8-4-41) इति ष्टुत्वेन टकारः ।
2. 'यस्य विभाषा' (7-2-15) इति निष्ठायामिण्निषेधः ।
3. बाहुलकेन नन्द्यादित्वकल्पनात् कर्तरि ल्युप्रत्ययः ।
4. 'क्तिच्क्तौ च—' (3-3-174) इति संज्ञायां क्तः । **अरिष्टः**=अनिष्टादिकम् ।
5. 'अन्येभ्योऽपि दृश्यन्ते' (3-2-75) इति विच् । गुणः ।
6. 'रलो व्युपधात्—' (1-2-26) इति कित्वविकल्पः । 'तीषसहलुभरुषरिषः' (7-2-48) इति इड्विकल्पश्च । तेनात्र रूपत्रयम् ।

A. '**रेष्टारं रेषितुं** व्यास्यत् रोद्धाऽक्षः शस्त्रसंहतीः ॥' भ. का. 9.31.



रेषम् २, रिषित्वा २, रेषित्वा २. रिष्ट्वा २, } रेषम् २ रेषयित्वा २ } रिरिषिषम् २-रिरेषिषम् २, रिरिषिषित्वा २-रिरेषिषित्वा २, } रेरिषम् २ ; रेरिषित्वा २. }

(1409) "**रिष हिंसायाम्**" (IV-दिवादिः-1231. सक. सेट्. पर.) [अ]

रेषकः-षिका, रेषकः-षिका, रिरिषिषकः-रिरेषिषकः-षिका, रेरिषकः-षिका ; [1]रेषिता-रेष्टा-ष्ट्री, रेषयिता-त्री, रिरिषिषिता-रिरेषिषिता-त्री, रेरिषिता-त्री ; इत्यादिकानि सर्वाण्यपि रूपाणि भौवादिक**रेषति**वत् (1408) बोध्यानि । शतरि-रिष्यन्-न्ती-ती, इति विशेषः ।

(1410) "**री गतिरेषणयोः**" (IX-क्र्यादिः-1500. सक. अनि. पर.)

**प्वादिः, ल्वादिश्च ।**

'स्रवणे रीयते रीङो, **रिणाति गतिरेषयोः** ॥' (श्लो. 18) इति **देवः** । '**रेषणम्**=[2]हिंसा' इति **क्षीरस्वामी** । "**रेषणम्**=वृकशब्दः । यदाह **यादवप्रकाशः**—'वृकस्य रेषणं रेषा, ह्रेषा हेषा च वाजिनाम् । बृंहितं करिणां शब्दः—॥' इति ।" इति **पुरुषकारः** । गतिहिंसार्थयोः सकर्मकः, वृकरवार्थकत्वे तु अकर्मक इति बोध्यम् । 'श्रवणे' इत्यपि **केचित्** । '—गति**शोषणयोः**' इति **न्यासे** (7-3-36) पाठः ।

---

1. 'तीषसहलुभरुष**रिषः**' (7-2-48) इत्यत्र विशेषाभावात् दैवादिकस्यास्यापि ग्रहणम् । तेनेड्विकल्पः । 'यथालक्षणमप्रयुक्ते' इति **भाष्य**न्यायमाश्रित्यैवमुक्तम् । 'यथाऽलक्षणमप्रयुक्ते' इति **भाष्य**पाठाश्रयणे तु (अप्रयुक्तस्थले लक्षणस्याभाव एवेत्यधुनाऽर्थः ।) इड्विकल्पाभाव एवेति बोध्यम् ।
2. यदा तु **रेषण**शब्दस्य हिंसा अर्थः, तदानीं '**रिष हिंसायाम्**' इति भौवादिकधातोर्निष्पन्नं पदमेतदिति बोध्यम् । यदि वृकशब्दोऽर्थः—तर्हि '**रेषृ अव्यक्ते शब्दे**' इति भौवादिकधातोर्निष्पन्नं तदिति भेदोऽत्रानुसन्धेयः ।

[अ] "इह **केचित्** '**रिष हिंसायां** च' इति पठन्ति । 'न **रिष्यति** न व्यथते' इत्यादयश्च प्रयोगा दृश्यन्ते । **आत्रेयमैत्रेयादय**स्तु न पेठुः" इति **मा. धा. वृत्तिः** । **क्षीरतरङ्गिण्याम्** अयं धातुः दिवादिषु न दृश्यते । परं तु भ्वादौ 'दिवादौ **रिष्यति** ।' इति **क्षीरस्वामिनै**वोक्तम् । तेन दिवादिषु पठितोऽप्यधुना भ्रष्टः स्यादिति भाति । **सि. कौमुद्यादिषु** तु स्वतन्त्रेण पठ्यते ।

रायकः-यिका, [1]रेपकः-पिका, रिरीषकः-षिका, रेरीयकः-यिका ; रेता-रेत्री, रेपयिता-त्री, रिरीषिता-त्री, रेरीयिता-त्री ; इत्यादिकानि समस्तान्यपि रूपाणि क्रैयादिक**प्लिनाति**वत् (1081) बोध्यानि । [2]व्यतिरिणानः, व्यतिरिणन्-ती, [3]रयः, [4]रीतिः, रीणिः, इतीमान्यस्माद्भवन्तीति विशेषः ।

(1411) "**रीङ् स्रवणे**" (IV-दिवादिः-1138. अक. अनि. आत्म.)

**स्वादिः ।**

'**स्रवणे रीयते रीङो** रिणाति गतिरेषयोः ॥' (श्लो. 18) इति **देवः** ।

'—**श्रवणेऽपि**' इति **क्वचित्** पाठः ।

रायकः-यिका, [5]रेपकः-पिका, रिरीषकः-षिका, रेरीयकः-यिका ; रेता-रेत्री, रेपयिता-त्री, रिरीषिता-त्री, रेरीयिता-त्री ; इत्यादिकानि सर्वाण्यपि रूपाणि क्रैयादिक**प्लिनाति**वत् (1081) ज्ञेयानि। शानचि [6]रीयमाणः, [7]रीणः-रीणवान्, क्तिनि—रीतिः,

---

1. ण्यन्ते सर्वत्र, '**अर्तिह्रीव्लीरी**क्नूयी—' (7-3-36) इत्यादिना पुगागमः। '**पुगन्त**लघूपधस्य च' (7-3-86) इति गुणः ।
2. हिंसागत्यर्थयोः 'न गतिहिंसार्थेभ्यः' (1-3-15) इति आत्मनेपदनिषेधात् कर्मव्यतीहारेऽपि **व्यतिरिणन्** इति शतैव । शब्दार्थकत्वे तु 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानचि **व्यतिरिणानः** इति रूपमिति बोध्यम् ।
3. भावे 'एरच्' (3-3-56) इत्यचि रूपमेवम्। अभिधानस्वाभाव्याद् गत्यर्थकस्यास्य वेगे वृत्तिरत्रेति बोध्यम् । 'कथं पुनरन्यो नामान्यस्यार्थे वर्तते ? कथम् ऊहिर्वह्यर्थे वर्तते! **बह्वर्था अपि धातवो भवन्ति...**' इति **भाष्य** (3-1-131)-वाक्यमिहावधेयम् ।
4. क्तिचि रूपमेवम्। क्तिनि तु '**ऋकारल्वादिभ्यः** क्तिन् निष्ठावद् वाच्यः' (वा. 8-2-44) इति वचनात् **रीणिः** इति नत्वे णत्वे च भवति ।
5. निरनुबन्धकपरिभाषानाश्रयणेनात्रापि, '**अर्तिह्रीव्लीरी**—' (7-3-36) इति पुगागमः। '**पुगन्त**—' (7-3-86) इति गुणः। तदुक्तम् **न्यासे**, 'तेन निरनुबन्धकपरिभाषा नापेक्ष्यत इति **रीङो**ऽपि ग्रहणं भवति।' (7-3-36) इति ।
6. शानचि दिवादित्वात् श्यन् । तस्य ङिद्वद्भावेन गुणो न।
7. 'स्वादय ओदितः' (ग. सू. दिवादौ) इति धातोरस्य ओदित्त्वमातिदेशिकम्। तेन, 'ओदितश्च' (8-2-45) इति निष्ठानत्वम्। णत्वम्। "**अत्रात्रेयः**। 'अर्थनिर्देशे **शृणोते**रयं प्रयोग इति **केचित्**।' तथा च **रीण**शब्दः कर्णपर्यायः कथितः।" इति **माधवधातुवृत्तौ** दृश्यते। श्रवणार्थकत्वमस्य धातोः, तत्रापि कर्णपर्यायस्य **रीण**शब्दस्य प्रयोगश्चास्यान्वेष्टव्यः ।



[1]रेवती, [2]रेणुः, [3]रेतः इतीमानि रूपाण्यस्मात् भवन्तीति विशेषः ।

(1412) "**रु शब्दे**" (II-अदादिः-1034. अक. सेट्. पर.)

'—**रवते रौति शब्दने** ॥' (श्लो. 23) इति **देवः** ।

रावकः-विका, रावकः-विका, [4]रुरूषकः-[5]रिरावयिषकः-षिका, रोरूयकः-यिका ; रविता-त्री, रावयिता-त्री, रुरूषिता-रिरावयिषिता-त्री, रोरूयिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि आदादिक**क्ष्णौति**वत् (323) बोद्धव्यानि । [6]रवणः, [7]संरावः,[A] [8]रवः, [9]रावः, [B]अल्परावः, मञ्जुरावः, [10]आरावः-आरवः, [11]मयूरः,

---

1. कर्तरि क्विप्प्रत्यये, तदन्तात् मतुपि, उगित्त्वेन स्त्रियां ङीपि च **रेवती** इति सिद्ध्यति ।
2. 'अजिवृ**रीभ्यो** निच्च' [द. उ. 1-148] इति णुप्रत्ययः ।
3. 'स्रु**रीभ्यां** तुट् च' [द. उ. 9-62] इति असुन्प्रत्यये तुगागमे च रूपम् ।
4. धातोरस्य सेट्त्वेऽपि, 'सनि ग्रहगुहोश्च' (7-2-12) इतीण्निषेधः। 'इको झल्' (1-2-9) इति झलादिसनः कित्त्वम्। 'अज्झनगमां सनि' (6-4-16) इति दीर्घः। षत्वम्। एवं सन्नन्ते सर्वत्र प्रक्रियोह्या ।
5. ण्यन्तात् सनि, 'ओः पुयण्ज्यपरे' (7-4-80) इति अभ्यासस्येकारः ।
6. तच्छीलादिषु कर्तृषु, 'चलन**शब्दार्थादकर्मकात्**—' (3-2-148) इति युच्। णत्वम्। **क्षीरस्वामी** तु औणादिके 'सुयुरुवृञो **युच्**' [द. उ. 5-20] इति युच्प्रत्यये निष्पादितवान् ।
7. '**उपसर्गे रुवः**' (3-3-22) इति घञ्। उवर्णान्तत्वप्रयुक्तापोऽपवादः ।
8. अनुपसृष्टात् (शुद्धात्) '**ऋदोरप्**' (3-3-57) इति अप्प्रत्ययः ।
9. 'बाहुलकाद् घञपि, इत्या**त्रेयः**। **रावः**।' इति **माधवधातुवृत्तिः**। "—'कृत्यल्युटो बहुलम्' (3-3-113) इत्यनेन घञादयः। बहुलं व्यतिकीर्यन्ते **मञ्जुरावा**दयस्तथा ॥" इति **प्रक्रियासर्वस्व**श्लोक इहावधेयः ।
10. '**विभाषाऽऽङि रुप्लुवोः**' (3-3-50) इति घञ्विकल्पः। तेन पक्षेऽप्प्रत्ययः ।
11. मह्यां रौतीति **मयूरः**। 'अन्येष्वपि दृश्यते' (3-2-101) इति डप्रत्यये पृषोदरादिषु (6-3-109) पाठात् महीशब्दस्य 'मयू' इत्यादेशे च रूपमेवम् ।

A. 'सजलाम्भोद**संरावं** हनुमन्तं सहाङ्गदम्।' भ. का. 7.35.

B. 'क्वेऽप्य**ल्परावं** नुनुवुः खलेषु क्षुरक्ष्णुतात्मानममुं स्नुतास्राः।' धा. का. 2.47.

[A]रुरूषु:, [1]ध्वाङ्क्षरावी, [B]मण्डूकरावी, [2]सांराविणम्[C], [3]रोरूयः [4]लोकरावणः, [5]रविः, [6]रुरुः, [7]पुरूरवाः इतीमान्यस्माद् भवन्ति।

**(1413) "रुङ् गतिरेषणयोः"** (I-भ्वादिः-959.सक.अनि.आत्म.)[अ]

'—**रवते** रौति [8]शब्दने ॥' (श्लो. 23) इति **देवः**।

रावकः-विका, रावकः-विका, रुरूषकः-रिरावयिषकः-षिका, रोरूयकः-यिका ;

---

1. ध्वाङ्क्ष इव रौतीति **ध्वाङ्क्षरावी**। 'कर्तर्युपमाने' (3-2-79) इति णिनिः।

2. सम्पूर्वकादस्मात्, 'अभिविधौ भाव इनुण्' (3-3-44) इति इनुण्प्रत्यये, 'अण् इनुणः' (5-4-15) इति स्वार्थेऽण्प्रत्यये, 'इन् अण्यनपत्ये' (6-4-164) इति प्रकृतिभावे च **सांराविणम्** इति भवति।

3. 'उदन्तात् यङो लुङ् नेति **केचित्**।' इति **प्रक्रियाकौमुदी**। तेनात्र यङन्तात् पचाद्यचि रूपमेवं तेषां मते। वस्तुतस्तु एवमङ्गीकरणे नियामकाभावात्, यङोऽनैमित्तिकलुक एव **भाष्यादिषु** 'यङोऽचि च' (2-4-74) इत्यत्राभ्युपगतत्वात् चिन्त्यमिदमिति **रोरुवः** इत्येव न्याय्यमिति च बोध्यम्।

4. लोकान् रावयतीति **लोकरावणः**। नन्द्यादित्वात् (3-1-134) ण्यन्तात् कर्तरि ल्युः। 'रावणो **लोकरावणः**।' इत्यादयः **रामायण**प्रयोगाः अत्रानुसन्धेयाः।

5. 'इन्' (द. उ. 1.46) इतीन्प्रत्ययः। रौतीति, रूयते इति वा **रविः**=भानुः।

6. '**रुशातिभ्यां क्रुन्**' (द. उ. 1.159) इति क्रुन्प्रत्ययः। **रुरुः**=मृगः।

7. '**पुरूरवाः**' (द. उ. 9-92) इत्यसिप्रत्यये निरूढः। पुरु रूयते स्वयशः सर्वत्रेति **पुरूरवाः**= राजविशेषः। पुरुशब्दस्य दीर्घोऽपि निपातनात्।

8. पाठेनानेन **देवस्य** शब्दार्थकत्वं भौवादिकस्यापि धातोः सम्मतमिति ज्ञायते। **रेषण**शब्दस्य वृकशब्दार्थत्वात् कथञ्चिदेवं नेयमिति **पुरुषकारे** विवेचितम्। '—**गतिरोषणयोः**' इति **कुत्रचिद्** दृष्टः पाठः।

A. 'संजुघुक्षव आयूंषि ततः **प्रतिरुरूषवः**।' भ. का. 9.14.

B. '**मण्डूकराविणं** सर्पं गोमुखं च मृगादिनम्।' (सुभाषितनीवी)

C. '**सांराविणं** न कर्तव्यं यावन्नायाति दर्शनम्।' भ. का. 7.43.

[अ] अनिट्कारिकाप्रकरणे, पर्युदस्तेषु 'गणस्थमूदन्तम्, उतां च रुस्नुवौ–' (व्याघ्रभूतिकारिका, काशिकायां 7-2-10) इत्यत्र 'रु' इत्यनेन निरनुबन्धकपरिभाषया (परि. 83) आदादिक**रौते**रेव ग्रहणम्, नास्य; तेनास्यानिट्त्वमिति **न्यासकारादयः**। **तत्त्वबोधिन्यादिषु** तु "–'**रु शब्दे, रुङ गतिरेषणयोः**' इत्युभयोर्ग्रहणं निरनुबन्धकपरिभाषया, 'लुग्विकरणालुग्विकरणयोः—' (परि. 92) इति परिभाषया च। न च साहचर्यात् लुग्विकरणस्यैव ग्रहणम् इति शङ्क्यम्। तस्यानित्यत्वात्।" इति प्रतिपादनात् आदादिक**रौति**वत् भौवादिक**रवते**रपि पर्युदासेषु ग्रहणात् अस्यापि सेट्त्वमिति ज्ञायते। 'संनत्स्याम्यथ योद्धुं किं न **रोष्ये**



रोता-रोत्री, रावयिता-त्री, रुरूषिता-त्री, रोरूयिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कवति**वत् (193) ज्ञेयानि। [1]रुतम्[A]।

**(1414) "रुच दीप्तौ अभिप्रीतौ च"** (I-भ्वादिः-745. अक. सेट्. आत्म.)

**न्यासपदमञ्जर्यादिषु** 'अभिप्रीतौ' इति न पठ्यते।

'**अभिप्रीतिः**=प्रीतिविषयीभवनम्।' इति **बालमनोरमा**।

रोचकः-चिका, रोचकः-चिका, रुरोचिषकः-रुरुचिषकः-षिका, [2]रोरुचकः-चिका ; रोचिता-त्री, रोचयिता-त्री, रुरोचिषिता-रुरुचिषिता-त्री, रोरुचिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कोचति**वत् (200) ज्ञेयानि। देवदत्ताय [3]रोचमानो मोदकः, [4]रोचयन्-न्ती, रोचयमानः, [5]रोचनः[B]-रोचना, विरोचनः,

---

सत्त्वहीनवत्।' (भ. का.,16-29) इत्यत्र **रोष्ये** इति अनिट्त्वेन प्रयोगात् अनिट्कारिकायां पर्युदासे भौवादिकस्य न ग्रहणमिति **शब्दरत्नम्**। परं तु **जयमङ्गलादि**प्राचीनव्याख्यादृतः, साम्प्रतमुपलभ्यमानश्च सार्वत्रिकः पाठः–'संनत्स्याम्यथ वा योद्धुं न **कोष्ये** सत्त्वहीनवत्।' इत्येवम्। अतो नैतदत्र गमकत्वेन प्रतीम इत्यलमत्र। उभयथाऽपि सन्नन्ते, 'सनि ग्रहगुहोश्च' (7-2-12) इतीण्निषेधः। **तत्त्वबोधिनीकारादीनां** मते तृजादिषु इडागमे **रविता-त्री, रवितव्यम्** इत्यादीनि रूपाणि यथायथं बोध्यानि।

1. इड्भाववादिनां मतेऽपि निष्ठादिषु कित्प्रत्ययेषु 'श्र्युकः क्किति' (7-2-11) इति निषेधात् इण्नेति बोध्यम्।

2. "तच्च अवश्यम् अनभिधानमाश्रयितव्यम्। क्रियमाणेऽपि हि एकाज्झलादिग्रहणे यत्रैकाचो हलादेश्चोत्पद्यमानेन यङाऽर्थस्याभिधानं न भवति, न भवति तत्रोत्पत्तिः। तद् यथा भृशं शोभते, **भृशं रोचते**।" इति **भाष्यात्** (3-1-22) अस्य धातोः भृशार्थे यङ् न। पौनःपुन्यार्थे तु यङ् भवति। एवञ्चात्र, 'पौनःपुन्यं भृशार्थो वा **क्रियासमभिहारः**।' इति **शाब्दिक**मर्यादया भृशार्थरूपक्रियासमभिहारार्थे न यङ्, पौनःपुन्यरूपक्रियासमभिहारार्थे तु यङ् भवतीति बोध्यम्।

3. '**रुच्यर्थानां** प्रीयमाणः' (1-4-33) इति प्रीयमाणस्य संप्रदानसंज्ञायाम्, 'चतुर्थी सम्प्रदाने' (2-3-13) इति चतुर्थी।

4. धातोरस्याकर्मकत्वात् अभिप्रीतिरूपार्थे चित्तवत्कर्तृकत्वादपि, 'अणावकर्मकात्—' (1-3-88) इति कर्त्रभिप्राये प्राप्तस्य परस्मैपदस्य, 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः' (1-3-89) इति निषेधात्, 'णिचश्च' (1-3-74) इति यथासंम्भवमुभयपदित्वमिति बोध्यम्। तेन शतृशानजन्तावुभावपि साधू इति बोध्यम्।

5. नन्द्यादिषु (3-1-134) 'नन्दिवासिदमिदूषिसाधिवर्द्धिशोभि**रोचिभ्यो ण्यन्तेभ्यः संज्ञायाम्**' (ग. सू.) इति वचनात् कर्तरि ल्युः। गुणः। **रोचनः**=कूटशाल्मलिः। स्त्रियामजादिषु (4-1-4) पाठात् टाप्।

A. 'प्रवे भवाब्धिप्लवमारुहानां धृतामयं भक्तिनिमेयमङ्घ्रिम् ॥' धा. का. 2-36.

B. '**रोचनै**र्भूषितां पश्यामस्माकं हृदयाविधम् ॥' भ. का. 6.74.

[1]रोचनी, [2]रुच्यः[A], [3]रोच्यम्, [4]रोचिष्णुः[B], [5]रुचिः-रुचिरम्, [6]नीरुक्--अभीरुक्, [7]रोकः[C], [8]अरोचकः, [9]रुचकः, [10]रुक्मम्, [11]रुचिष्यम्, [12]वसुरोचिः-रोचिः,

---

1. **रोचनी** इत्यत्र ल्युटि, टित्त्वेन स्त्रियां ङीपि रूपम्।
2. 'राजसूयसूर्यमृषोद्यरुच्य—' (3-1-114) इत्यादिना निपातनात् क्यप्। 'सूर्य-**रुच्या**व्यथ्याः कर्तरि' (वा. 3-1-114) इति वचनात् कर्तरि निष्पन्नोऽयम्। रोचतेऽसौ **रुच्यः**।
3. भावे ण्यति, 'यजयाचरुच—' (7-3-66) इति निषेधात् कुत्वं न। 'क्वाद्यजिव्रजि-याचिरुचीनामप्रतिषेधो निष्ठायामनिटः कुत्ववचनात्' (वा. 7-3-59) इति **वार्तिक**पक्षे तु **रोक्यम्** इति कुत्वेनैव भाव्यम्, 'यथोत्तरं मुनीनां प्रामाण्यम्' इति शाब्दिकसंकेतात्। यदि तु **रोच्यम्** इति प्रयोगो दृश्यते, तदानीं पृषोदरादित्वात् (6-3-109) कुत्वाभाव इति बोध्यम्।
4. 'अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुचि—' (3-2-136) इत्यादिना तच्छी-लादिषु कर्तृषु इष्णुच्प्रत्ययः।
5. स्त्रियाम्, 'इक् कृष्यादिभ्यः' (वा. 3-3-108) इति भावे इक्प्रत्ययः। **रुचि**शब्दात् मत्वर्थीयो रप्रत्ययो बाहुलकात् प्रयोगदर्शनाद् द्रष्टव्यः। **रुचिरः**=रुचिमान् इति यावत्।
6. क्विपि, 'चोः कुः' (8-2-30) इति कुत्वे, 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ' (6-3-116) इति पूर्वपदस्य दीर्घः। '**निरोचनम्=नीरुक्**' इति **न्यासे** विवरणात् बाहुलकात् करणे भावार्थे वा क्विबत्रेति ज्ञायते।
7. घञि, 'चजोः कु घिण्ण्यतोः' (7-3-52) इति कुत्वम्, इति **न्यासः** (5-4-144)। परंतु निष्ठायामनिटो धातोरेव 'चजोः—' (7-3-52) इति कुत्वमित्याश्रयितॄणां **वार्तिककारभाष्यकारादीनां** मते तु 'विभाषा श्यावारोकाभ्याम्' (5-4-144) इत्यत्र **अरोक** इति निपातनादेवात्र कुत्वमिति ज्ञेयम्।
8. '**अरोचकः**' इत्यत्र, '**रोगाख्यायां** ण्वुल् बहुलम्' (3-3-108) इति ण्वुल्। **अरोचकः** = अरुचिव्याधिः। अत्र **बहुलग्रहणात्** स्त्र्यधिकारविहितत्वेऽपि स्त्रीत्वं नेति **प्रक्रियासर्वस्वम्**। अयं भावः—'प्रत्ययस्थात्—' (7-3-44) इति इत्वं, टाबादिकं चास्य नेत्यर्थः। [स्वर्णमयो भूषणविशेषः।
9. 'क्वुन् शिल्पिसंज्ञयोः—' (द. उ. 3-5) इति क्वुन्। कित्त्वान्न गुणः। **रुचकः**।
10. 'युजिरुचितिजां कुश्च' (द. उ. 7-33) इति मक्प्रत्ययः, कवर्गश्चान्तादेशः। प्रत्ययस्य कित्त्वान्न गुणः। रोचतेऽतिशयेन तदिति **रुक्मम्**=सुवर्णम्। [भोज्यम्।
11. '**रुचिभुजिभ्यां** किष्यन्' (द. उः 8.15) इति किष्यन्प्रत्ययः। **रुचिष्यम्**=
12. '**वसौ रुचेः संज्ञायाम्**' (द. उ. 9.33) इति इसिन्प्रत्ययः। वसुभ्यो रोचते, वसव अस्मिन् रोचन्ते इति वा **वसुरोचिः** = क्रतुः। बाहुलकात् 'वसु' इत्युपप-दाभावेऽपि केवलाद्धातोः इसिन्प्रत्यये **रोचिः**=ज्वाला।

A. 'अमृषोद्यं वदन् **रुच्यो** जगाहे द्यां निशाचरः॥' भ. का. 6.58.
B. '**रोचिष्णु**काञ्चनचयांशुपिशङ्गिताशा.......।' शि. व. 5.20. [शि. व. 5.54.
C. 'नासा**विरोक**पवनोल्लसितं तनीमो रोमाञ्चतामिव जगाम रजः पृथिव्याः॥'



इतीमानि रूपाण्यस्माद् भवन्तीति विशेषः।

(1415) "**रुज हिंसायाम्**" (X-चुरादिः-1805. सक. सेट्. उभ.)

**आस्वदीयः।**

'भङ्गे रुजति, **हिंसायां रोजयेदिति णौ रुजेः** ॥' श्लो. 69) इति **देवः**।

रोजकः-जिका, रुरोजयिषकः षिका; रोजयिता-त्री, रुरोजयिषिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कोटयति**वत् (205) बोध्यानि।

(1416) "**रुजो भङ्गे**" (VI-तुदादिः-1416. सक. अनि. पर.)

'**भङ्गे रुजति**, हिंसायां रोजयेदिति णौ रुजेः ॥' (श्लो. 69) इति **देवः**।

रोजकः-जिका, रोजकः-जिका, रुरुक्षकः-क्षिका, रोरुजकः-जिका; रोक्ता-रोक्त्री, रोजयिता-त्री, रुरुक्षिता-त्री, रोरुजिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि रौधादिक**भुनक्ति**वत (1162) बोध्यानि।

चोरस्य [1]रुजन् रोगः, नदी कूलानि रुजती गच्छति, चोरं रुजन्, नीरुजन् मिताशी स्यात्, [2]कूलमुद्रुजः[A], [3]रोगः, [4]हृद्रोगः-हृदयरोगः, [5]रुजा, [6]रुक्,

---

1. अत्र '**रुजार्थानां** भाववचनानामज्वरेः' (2-3-54) इति धात्वर्थस्य भावकर्तृकत्वे कर्मणि शेषत्वेन विवक्षिते षष्ठी। तुदादित्वात् शतरि शप्रत्ययः। तस्य ङिद्वद्भावे-नाङ्गस्य गुणो न। सूत्रे **रुजा**शब्देन व्याधिरुच्यते। तेन **रुजेः** व्याध्यर्थत्वे 'भाववचनानाम्' इत्यस्य 'श्लेष्मा पुरुषं **रुजन्**' इति प्रत्युदाहरणमिति **केचित्**। **भाष्ये** तु रुजधातोर्भङ्गार्थत्वमेवाश्रित्य, 'नदी कूलानि **रुजति**।' इति प्रत्युदाहृतम्। कर्मणोऽशेषत्वविवक्षायां द्वितीयाऽपि। तेन 'चोरं **रुजन्**' इति सिद्ध्यति। निपूर्वकोऽयं धातुर्व्याधिप्रतीकारे वर्तते। तेन **नीरुजन्**=(व्याध्यनभिभूतः) इति, प्रतीकारोऽत्रार्थः।
2. '**उदि कूले रुजि**वहोः' (3-1-31) इति कूलशब्दे कर्मण्युपपदे उत्पूर्वकस्यास्य खश्प्रत्ययः। 'अरुर्द्विषदजन्तस्य—' (6-3-67) इति मुम्। शित्त्वात् सार्वधातुक-त्वम्। तस्य च ङिद्वद्भावाद् गुणो न। कूलानि उद्रुजतीति **कूलमुद्रुजः** रथः। उक्षा इति **केचित्**।
3. 'पद**रुज**विशस्पृशो घञ्' (3-3-16) इति कर्तरि घञ्। रुजतीति **रोगः**। 'चजोः—' (7-3-52) इति कुत्वम्।
4. 'वा शोकष्यञ्**रोगेषु**' (6-3-51) इति हृदयशब्दस्य **रोग**शब्दे परे हृद्भावविकल्पः।
5. भिदादेः (3-3-104) आकृतिगणत्वेन तत्र पाठादङ्। प्रत्ययस्य ङित्त्वान्न गुणः।
6. 'रोगाख्यायां ण्वुल् बहुलम्' (3-3-108) इत्यत्र बहुलग्रहणात् रोगवाचकत्वेऽपि स्त्रियां सम्पदादि (वा. 3-3-108) पाठात् क्विप्।

A. 'मदोदग्राः ककुद्मन्तः सरितां **कूलमुद्रुजाः**।' रघु. 4.22.

[1]रुग्णवान्, [2]लुग्नम्, [3]वीरुक्, इत्यादीनि रूपाण्यस्माद्भवन्तीति विशेषः ।

### (1417) " रुट प्रती[ति]घाते "

(I-भ्वादिः-476. सक. सेट्. आत्म.) [अ]

**'रोटते प्रतिघातेऽर्थे** रोषे रोटयतीति णौ ॥' (श्लो. 74) इति **देवः** ।

रोटकः-टिका, रोटकः-टिका, रुरुटिषकः-रुरोटिषकः-षिका, रोरुटकः-टिका ; रोटिता-त्री, रोटयिता-त्री, रुरुटिषिता-रुरोटिषिता-त्री, रोरुटिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कोकति**वत् (197) ज्ञेयानि । [4]रुटितम्-रोटितम्-तः, रुट्यमानः[A]इमानि रूपाण्यधिकान्यत्रेति विशेषः ।

### (1418) " रुट भाषार्थः "

(X-चुरादिः-1784. सक. सेट्. उभ.) **आस्वदीयः** ।

**क्षीरस्वामी** चुरादिष्वेव पूर्वम् '**रुट रोषे**' इति **मैत्रेयाद्यनुसारेण** पठति

---

1. '**ओदितश्च**' (8-2-44) इति निष्ठानत्वम् । निष्ठानत्वस्य परशास्त्रत्वात्, '**चोः कुः**' (8-2-30) इति कुत्वस्य पूर्वशास्त्रत्वाच्च, 'त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम्' इति न्यायेन निष्ठानत्वासिद्धया कुत्वमत्रेति बोध्यम् । 'अट्कुप्वाङ्-नुम्व्यवायेऽपि' (8-4-2) इति णत्वम् ।
2. 'क्तिच्क्तौ च—' (3-3-174) इति संज्ञायां क्तः । 'कपिलकादीनां संज्ञाच्छन्दसोः' (वा. 8-2-18) इत्यत्र कपिलकादिगणे पाठादत्र धातुरेफस्य लत्वम् । **लुग्नम्**= जीर्णवस्त्रम् ।
3. क्विबन्ते बाहुलकात् 'अन्येषामपि दृश्यते' (6-3-137) इति पूर्वपदस्य दीर्घः । अत्र **क्षीरतरङ्गिण्याम्**—"........'नहिवृति—' (6-3-116) इति दीर्घः । **वीरुक्** ।" इत्युक्तम् । 'नहिवृतिवृषिव्यधिरु**चि**सहितनिषु क्वौ' (6-3-116) इत्यत्र **रुचि** इति **रुच**धातोरेव सर्वैः ग्रहणात् चिन्त्यमिदम् ।
4. 'उदुपधात् भावादिकर्मणोः—' (1-2-21) इति वैकल्पिककित्त्वात् निष्ठायां रूपद्वयं बोध्यम् ।

A. 'अश्विन्नरुग्घोटक **रुट्यमान**मार्गा जवेनालुटिता निरीयुः ॥' धा. का. 2.1.

[अ] "....'**रुट** लुट लुठ प्रती(ति)घाते' आद्यौ प्रथमान्तौ । अन्त्यो द्वितीयान्तः । अयं पाठो **देवमैत्रेयादीनाम्** । **हरियोगिन**स्तु आद्यावेव । 'धातोः कर्मणः—' (3-1-7) इत्यत्र **कैयटे** द्वाविमौ द्वितीयान्तौ पठितौ । **क्षीरस्वामी** तु एवं पठित्वाऽऽह—"—'**रुट** लुट—' इत्येके । 'बाधृ **रोटने**' इति लिङ्गात् ।" इति । तथा '**रुट दीप्तौ**' इत्यप्यसावाह ।" इति **माधवो**-क्तिरिहानुसन्धेया ।



अत्र तु भाषार्थकदण्डके पुनः पठति । परं तु दण्डकपठितानां सर्वेषामपि '**भासार्थः**' इति भासार्थकत्वमाह । '........**रोटयतीति णौ**॥' (श्लो. 74) इति **देव**वाक्यं **क्षीरस्वामिनो**ऽनुकूलमिति बोध्यम् ।

रोटकः-टिका, रुरोटयिषकः-षिका ; रोटयिता-त्री, रुरोटयिषिता-त्री, इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कोटयति**वत् (205) बोध्यानि ।

### (1419) " रुटि स्तेये " (I-भ्वादिः-327. सक. सेट्. पर.)

'**रुठि**—' इति, '**रुडि**—' इति च **केचिदमुं** पठन्ति ।

रुण्टकः-ण्टिका, रुण्टकः-ण्टिका, रुरुण्टिषकः-षिका, रोरुण्टकः-ण्टिका ; रुण्टिता-त्री, रुण्टयिता-त्री, रुरुण्टिषिता-त्री, रोरुण्टिता-त्री ; इत्यादिकानि सर्वाण्यपि रूपाणि भौवादिक**कुण्ठति**वत् (209) ज्ञेयानि ।

### (1420) " रुठ उपघाते " (I-भ्वादिः-336. सक. सेट्. पर.)

'रुण्ठतीति गतौ, **रोठेदुपघाते**— ।' (श्लो. 79) इति **देवः** ।

'अश्मा लुलुठिषते ।' इति **भाष्यं** व्याचक्षाणः **कैयट**स्तु (3-1-7) 'रुठ लुठ **प्रतीघाते**' इति पाठमाद्दतवान् ।

रोठकः-ठिका, रोठकः-ठिका, रुरोठिषकः-रुरुठिषकः-षिका, रोरुठकः-ठिका; रोठिता-त्री, रोठयिता-त्री, रुरोठिषिता-रुरुठिषिता-त्री, रोरुठिता-त्री ; इतीमानि रूपाणि सर्वाण्यपि दैवादिक**कुप्यति**वत् (224) बोध्यानि ।

### (1421) " रुठि गतौ " (I-भ्वादिः-345. सक. सेट्. पर.)

'**रुण्ठतीति गतौ**, रोठेदुपघाते— ।' (श्लो. 79) इति **देवः** ।

'**आलस्ये गतिप्रतिघाते च**' इति **क्षीरस्वामी** ।

रुण्ठकः-ण्ठिका, रुण्ठकः-ण्ठिका, रुरुण्ठिषकः-षिका, रोरुण्ठकः-ण्ठिका ; रुण्ठिता-त्री, रुण्ठयिता-त्री, रुरुण्ठिषिता-त्री, रोरुण्ठिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कुण्ठति**वत् (209) ज्ञेयानि ।

### (1422) " रुदिर् अश्रुविमोचने "

(II-अदादिः-1067. अक. सेट्. पर.)

रोदकः-दिका, रोदकः-दिका, [1]रुरुदिषकः-षिका, रोरुदकः-दिका ;
रोदिता-त्री, रोदयिता-त्री, रुरुदिषिता-त्री, रोरुदिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकतोहतिवत् (760) ज्ञेयानि। रुदित्वा, [2]रोदसी, [A]रोरुद्यमानः, रोरुदा[B], [3]रुद्रः-रुद्राणी, रुद्रा, [4]अलं रुदित्वा, अलं रोदनेन, [C]रुरुदिषा, इतीमान्यस्माद्भवन्तीति विशेषः ।

**(1423) "[अनो] रुध कामे"** (IV-दिवादिः-1174. सक.अनि. आत्म.)

'**अनुपूर्वो रुधिः** कामेऽर्थे तङ्श्यनौ **भजते** ।' इति **धा. का. व्याख्यायां** (2-62) विवृतम् ।

'रुन्धे रुणद्ध्यावरणे, **कामेऽनावनुरुध्यते** ॥' (श्लो. 121) इति **देवः** ।

अनुरोधकः-धिका, अनुरोधकः-धिका, अनुरुरुत्सकः-त्सिका, अनुरोरुधकः-धिका;
अनुरोद्धा-द्धी, अनुरोधयिता-त्री, अनुरुरुत्सिता-त्री, अनुरोरुधिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि दैवादिकक्षुध्यतिवत् (315) बोध्यानि ।

---

1. 'रलो व्युपधात्—' (1-2-26) इति क्त्वासनोः कित्त्वविकल्पे प्राप्ते, '**रुदविद—**' (1-2-8) इत्यनेन नित्यकित्त्वम्। तेन सन्नन्तेषु क्त्वायामपि रूपमेकमेव।
2. 'असुन्' (द. उ. 9-49) इत्यसुन्प्रत्यये रूपम्। पुष्पवन्तावित्यादिवत् अभिधानस्वाभाव्यात् नित्यं द्विवचनान्तोऽयम्। **रोदसी** = द्यावाभूमी।
3. '**रोदेर्णिलुक् च**' (द. उ. 8-39) इति रक्प्रत्ययो णिलुक् च भवति। रोदयति दानवयोषित इति **रुद्रः**। स्त्रियाम्, 'इन्द्रवरुणभवशर्व**रुद्र—**' (4-1-49) इत्यादिना पुंयोगे ङीषानुगागमौ भवतः। तेन **रुद्राणी** इति सिध्यति। एतच्च रुद्रपत्नीविषयकं बोध्यम्। यदा तु **रुद्रा** इति सुपर्णपत्नी बोध्यते-तदानीमजादिपाठपरिकल्पनेन (4-1-4) टापि रूपनिष्पत्तिरिति बोध्यम्।
4. 'अलंखल्वोः प्रतिषेधयोः **प्राचां** क्त्वा' (3-4-18) इति प्रतिषेधार्थकस्यालमित्यव्ययस्य प्रयोगे क्त्वाप्रत्ययः। अत्र 'त्र्यधिकारादूर्ध्वं वासरूपविधिर्नास्ति' इति **शाब्दिक**मर्यादया पक्षे ल्युडपि भवति। तेन '**अलं रोदनेन**' इति सिद्ध्यति। प्रकृत्यादित्वादत्र **रोदनेन** इति तृतीया—इत्यादिकं **बृहच्छब्देन्दुशेखरे** विस्तृतम्।

A. '**रोरुद्यमानः** स तदाऽप्यपृच्छत् यथावदाख्यन् अथ वृत्तमस्मै ॥' भ. का. 3-29.
B. 'तां संहितोरू युवतिं स**रोरुदां** शौरिर्व्यमार्क्षीत् कुररीमिवेक्षिता ॥' वा. वि. 1.49
C. '**रुरुदिषा** वदनाम्बुरुहश्रियः सुतनु सत्यमलङ्करणायते।' शि. व. 6-17.



[1]अनुरोधी[A] ।

**(1424) "रुधिर् आवरणे"** (VII-रुधादिः-1438. सक. अनि. उभ.)

'**आवरणम्**=व्याप्तिः ।' इति **क्षीरस्वामी** ।

'**रुन्धे रुणध्यावरणे**, कामेऽनावनुरुध्यते ॥' (श्लो. 121) इति **देवः** ।

रोधकः-धिका, रोधकः-धिका, रुरुत्सकः-त्सिका, रोरुधकः-धिका ;
रोद्धा-रोद्धी, रोधयिता-त्री, रुरुत्सिता-त्री, रोरुधिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि रौधादिकभिन्दतिवत् (1160) ज्ञेयानि । [2]अङ्गरोधी-उपरोधी, [3]प्रतिरोधी, [4]अनुरोधी, [5]व्रजे उपरुध्य-व्रजोपरोधं, [B]कारोपरोधम् वा गाः-पाययति, [6]रोधनः, [7]मार्गरुत्[C]-द्-रुधौ-रुधः, [8]विरोधी,

---

1. तच्छीलादिषु कर्तृषु, '**सम्पृचानुरुध....**' (3-2-142) इति घिनुण्। अत्र, "...'**अनो रुध कामे**' इत्यस्य तु दैवादिकस्याग्रहणम्-पृचिना साहचर्यात्। अनुना सह पठितस्य दैवादिकस्य ग्रहणमित्य**न्ये**।" इति **पदमञ्जरी**। वस्तुतः—रौधादिकस्यैव धातोरनुपूर्वकत्वे कामनार्थकत्वे च दैवादिकपाठः इत्यस्य सैद्धान्तिकपक्षत्वेन प्रकृतसूत्रे (3-2-142) दैवादिकस्यैवास्य ग्रहणम्। साहचर्यपरिभाषाश्रयणे च अनन्यथासिद्धं बीजं न पश्यामः। अत एव क्वचिद् **भट्टिकाव्यव्याख्याने** (7-9) 'एता देवा**नुरोधिन्यो** द्वेषिण्य इव रागिणम्।' इत्यत्र **अनुरुध्यन्ती**ति श्यना विवरणं संगतम्। इत्यलमत्र।
2. अङ्गानि रुणद्धीति **अङ्गरोधी**। ग्रह्यादिषु (3-1-134) कर्मण्यणोऽपवादो णिनिप्रत्ययः। एवम् उपरुणद्धीति **उपरोधी** इत्यत्रापि ग्रह्यादित्वादेव णिनिः।
3. 'भविष्यति गम्यादयः' (3-3-3) इत्यत्र गणे पाठात् भविष्यत्काले औणादिको णिनिरत्र।
4. '**सम्पृचानुरुध—**' (3-2-142) इत्यादिना ताच्छीलिको घिनुण्प्रत्ययः।
5. 'सप्तम्यां चोपपीड**रुध**कर्षः' (3-4-49) इति सप्तम्यन्ते तृतीयान्ते चोपपदे उपपूर्वकादस्मात् णमुल्। 'तृतीयाप्रभृतीनि—' (2-2-21) इति समासविकल्पः।
6. नन्द्यादिषु पाठपरिकल्पनादत्र कर्तरि ल्युप्रत्ययः।
7. मार्गं रुणद्धीति **मार्गरुध्**, 'क्विप् च' (3-2-76) इति कर्मण्युपपदे क्विप्।
8. विशेषेण रुणद्धीति **विरोधी**, 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः।

A. '**कंसानुरोध्य**णनहन्मतिमद्युगर्च्यः—॥' धा. का. 2-62.
[अत्र **धा. का. व्याख्यायां** णिन्यन्तत्वेन प्रकृतशब्दस्य निष्पत्तिः कृतेति विभाव्यम्।]
B. 'तं शूरसूनुं सह जाययोग्रः **कारोपरोधं** निगलैरसेष्ट ॥' वा. वि. 2.40.
C. '**निरुध्यमाना** यदुभिः कथञ्चित् मुहुर्यदुच्चिक्षुपुरग्रपादान्।
ध्रुवं गुरून् **मार्गरुधः** करीन्द्रानुल्लङ्घ्य गन्तुं तुरगास्तदीषुः ॥' शि. व. 3-29.

[1]गां व्रजमवरुन्धन्, [2]रुधिरम्, [3]रोधः, इतीमान्यस्माद् भवन्तीति विशेषः।

(1425) "रुप विमोहने" (IV-दिवादिः-1236. सक. सेट्. पर.)

'रुपु[4]—' इति धा. का. व्याख्यायाम् (2-67)।

रोपकः-पिका, रोपकः-पिका, रुरोपिषकः-रुरुपिषकः-षिका, रोरुपकः-पिका; रोपिता-त्री, रोपयिता-त्री, रुरोपिषिता-रुरुपिषिता-त्री, रोरुपिता-त्री; इत्यादिकानि समस्तान्यपि रूपाणि दैवादिककुप्यतिवत् (224) ज्ञेयानि। [5]विरोपी,[A] रोपः[6] इमे रूपे विशेषेण भवतः इति ज्ञेयम्।

(1426) "रुश हिंसायाम्" (VI-तुदादिः-1419. सक. अनि. पर.)

रोशकः-शिका, रोशकः-शिका, रुरुक्षकः-क्षिका, रोरुशकः-शिका; रुष्टा-ष्ट्री, रोशयिता-त्री, रुरुक्षिता-त्री, रोरुशिता-त्री; इत्यादिकानि रूपाणि सर्वाण्यपि दैवादिककुस्यतिवत् (234) ज्ञेयानि। तुमुनि-रोष्टुम्[B] इति।

(1427) "रुशि भाषार्थः" (X-चुरादिः-1789. अक. सेट्. उभ.)

आस्वदीयः। '—भासार्थः।' इति क्षीरस्वामी।

रुंशकः-शिका, रुरुंशयिषकः-षिका, रुंशकः-शिका, रुरुंशिषकः-षिका, रोरुंशकः-शिका; रुंशयिता-त्री, रुरुंशयिषिता-त्री, रुंशिता-त्री, रुरुंशिषिता-त्री,

1. अयं द्विकर्मकः। तेन, अत्र 'अकथितं च' (1-4-51) इति कर्मसंज्ञायां द्वितीया॥
2. 'इषिमदिमुदि—' (द. उ. 8.26) इत्यादिना किरच्प्रत्यये रूपमेवम्। **रुधिरम्**=रक्तम्।
3. 'असुन्' (द. उ. 9-49) इत्यसुन्प्रत्यये रूपम्। **रोधः**=जलप्रवाहः। सकारान्तः।
4. एतत्पक्षे क्त्वायामिड्विकल्पेन **रुपित्वा-रोपित्वा** इति रूपद्वयं बोध्यम्।
5. 'सुप्यजातौ—' (3-2-78) इति णिनिप्रत्ययः।
6. 'हलश्च' (3-3-121) इति संज्ञायां घञ्प्रत्यये रूपम्। रुप्यन्ति अनेन इति **रोपः**=शरः।

A. '...किंचायोप्य**विरोपि**लोपक न वा लोभादिसंक्षोभिता।' धा. का. 2.67.
B. 'रोषच्छुतधियाथ **रोष्टुम**भितो योधान्द्विषद्देशकान्....।' धा. का. 2-84.



रोरुंशिता-त्री; इत्यादिकानि रूपाणि सर्वाणि चौरादिककुंशयतिवत् (232) ज्ञेयानि।

(1428) "रुष हिंसार्थः" (I-भ्वादिः-693. सक. सेट्. पर.)

'**शपि रोषति हिंसायाम्**, रोषे रुष्यति रोषयेत्॥' (श्लो. 179) इति **देवः**।

रोषकः-षिका, रोषकः-षिका, रुरोषिषकः-रुरुषिषकः-षिका, रोरुषकः-षिका; [1]रोषिता-रोष्टा[A]-ष्ट्री, रोषयिता-त्री, रुरोषिषिता-रुरुषिषिता-त्री, रोरुषिता-त्री; इत्यादीनि समस्तान्यपि रूपाणि भौवादिकरेषतिवत् (1408) बोध्यानि। [2]रुष्टः-[B]रुषितः, [3]रुषितमनेन, रोषितं वा, [4]रोषणः, [5]गृध्ररोषं रोषति इतीमान्यस्माद् भवन्तीति विशेषः।

(1429) "रुष रोषे" (IV-दिवादिः-1230. अक. सेट्. पर.)

'—हिंसायाम्' इति **सिद्धान्तकौमुदी**पाठः। '—**जिहासायाम्**' इति **केचित्**।

'शपि रोषति हिंसायाम्, **रोषे रुष्यति** रोषयेत्॥' (श्लो. 179) इति **देवः**।

1. 'तीषसहलुभरुषरिषः' (7-2-48) इति तकारादावार्धधातुके इड्विकल्पः। इडभावपक्षे 'ष्टुना ष्टुः' (8-4-41) इति ष्टुत्वेन टकारः।
2. 'रुष्यमत्वरसंघुषास्वनाम्' (7-2-28) इतीड्विकल्पः। धातोरस्य तकारादावार्धधातुके इड्विकल्पस्य विधानात् 'यस्य विभाषा' (7-2-15) इति निष्ठायामिण्निषेधे प्राप्ते इड्विकल्पविधानमिति बोध्यम्। अत्र 'मतिबुद्धिपूजार्थेभ्यश्च' (3-2-128) इत्यत्र चकारस्यानुक्तसमुच्चयार्थकत्वमाश्रित्य वर्तमाने कर्तरि क्तप्रत्ययः।
**न्यासे** (7-2-28) '**रुष रोषे**' इत्यस्माण्णिष्ठायामिड्विकल्पस्य प्रतिपादनात्, तत्रोपयोगाभावात्, दैवादिकस्य रोषार्थकस्य अत्र सूत्रे (7-2-28) ग्रहणं **न्यासकार**सम्मतमिति प्रतिभाति।
3. 'उदुपधाद् भावादिकर्मणोरन्यतरस्याम्' (1-2-21) इति भावे आदिकर्मणि च कित्त्वविकल्पोऽत्र।
4. नन्द्यादेः (3-1-134) आकृतिगणत्वेन कर्तरि ल्युप्रत्ययोऽत्रेति ज्ञेयम्।
5. 'उपमाने कर्मणि च' (3-4-45) इति उपमानकर्तरि णमुल्। 'कषादिषु—' (3-4-46) इति यथाविध्यनुप्रयोगः। गृध्र इव हिनस्तीत्यर्थः।

A. 'रेष्टारं रेषितं न्यास्यत् **रोष्टा**ऽक्षः शस्त्रसंहतीः॥' भ. का. 9. 31.
B. 'जघान **रुषितो रुष्टान्** त्वरितस्तूर्णमागतान्॥' भ. का. 9. 20.

रोषकः-षिका, रोषकः-षिका, रुरोषिषकः-रुरुषिषकः-षिका, रोरुषकः-षिका; रोषिता-रोष्टा-रोष्ट्री, रोषयिता-त्री, रुरोषिषिता-रुरुषिषिता-त्री, रोरुषिता-त्री-; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**रेषति**वत् (1408) ज्ञेयानि। शतरि [देवदत्ताय] [1]रुष्यन्-न्ती-ती, निष्ठायाम् [2]रुषितः-रुष्टः, रुषितमनेन, रुट्-रुड्-रुषौ-रुषः, [3]भीरुट्, इतीमान्यस्माद् भवन्तीति विशेषः।

(1430) "**रुष रोषे**" (X-चुरादिः-1671. अक. सेट्. उभ.)

'**रुट—**' इति **क्षीरस्वामी**। 'शपि रोषति हिंसायाम्, **रोषे** रुष्यति **रोषयेत्** ॥' (श्लो. 179) इति **देवः**।

रोषकः-षिका, रुरोषयिषकः-षिका; रोषयिता-त्री, रुरोषयिषिता-त्री; इत्यादीनि समस्तान्यपि रूपाणि चौरादिक**चोरयति**वत् (546) ज्ञेयानि।

(1431) "**रुसि भाषार्थः**" (X-चुरादिः-1791. अक. सेट्. उभ.)

**आस्वदीयः। क्षीरस्वाम्यादयः** अमुं न पठन्ति।

रुंसकः-सिका, रुरुंसयिषकः-षिका; रुंसयिता-त्री, रुरुंसयिषिता-त्री; इत्यादिकानि सर्वाण्यपि रूपाणि चौरादिक**कुंशयति**वत् (232) बोध्यानि।

(1432) "**रुह बीजजन्मनि प्रादुर्भावे च**"

(I-भ्वादिः-859. अक. अनि. पर.) **ज्वलादिः।**

'**—प्रादुर्भावे च**' इति **केचिन्न** पठन्ति। '**रुह जन्मनि—**' इति **न्यासे** पाठः।

1. दिवादित्वात् शतरि श्यन्। 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' (1-4-37) इति कोपविषयस्य देवदत्तस्य सम्प्रदानसंज्ञायां 'चतुर्थी सम्प्रदाने' (2-3-13) इति चतुर्थी।
2. '**रुष्य**मत्वर—' (7-2-28) इति निष्ठायामिड्विकल्पः। तकारादावार्धधातुके, 'तीषसहलुभ**रुष**रिषः' (7-2-48) इति इड्विकल्पनात्, निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इति इट्प्रतिषेधे प्राप्तेऽनेनेड्विकल्पोऽत्रेति बोध्यम्।
3. भियं रुष्यतीति **भीरुट्** छन्दोविशेषः। अत्र रथन्तरादिशब्देष्विवव्युत्पत्तिप्रदर्शनं कृतम्। नावयवार्थेऽभिनिवेशः कार्यः, संज्ञाशब्दत्वात्। 'मा नानुभूः स्वकान् दोषान् मा मुहो मा **रुषो**ऽधुना ॥' (भट्टिकाव्ये 15-16) इत्यत्रास्य धातोः यद्यपि अकर्मकत्वं दृश्यते, तथापि अभिधानस्वाभाव्यादत्र सकर्मकत्वम्। यद्वा, भिया रुष्यतीति **भीरुट्** इत्यकर्मकव्युत्पत्तिरप्यत्रोपपन्नेत्यास्तां तावत्।



रोहकः-हिका, [1]रोपकः-पिका, रोहकः-हिका, [2]रुरुक्षकः-क्षिका, रोरुहकः-हिका;
[3]रोढा-रोढ्री, रोपयिता-रोहयिता-त्री, रुरुक्षिता-त्री, रोरुहिता-त्री;
रोहन्-न्ती, रोपयन्-रोहयन्-न्ती, रुरुक्षन्-न्ती; —
रोक्ष्यन्-न्ती-ती, रोपयिष्यन्-रोहयिष्यन्-न्ती-ती, रुरुक्षिष्यन्-न्ती-ती; —
— रोपयमाणः-रोहयमाणः, — रोरुह्यमाणः;
— रोपयिष्यमाणः-रोहयिष्यमाणः, — रोरुहिष्यमाणः;
[A]अम्बुरुट्-रुड्-रुहौ-रुहः; — — —
रूढम्-रूढः-रूढवान्, [4]आरूढो वृक्षम्-आरूढो वृक्षः, [5]रूढः, रोपितः-रोहितः, [6]रोहितः, लोहितः-लोहिताया, लोहितकः, लोहितकं [मुखम्], रुरुक्षितः, रोरुहितः-तवान्;

1. ण्यन्ते सर्वत्र, '**रुहः पोऽन्यतरस्याम्**' (7-3-43) इति विकल्पेन हकारस्य पकारः। तेन रूपद्वयम्। यद्यपि दैवादिक**रुप्यते**र्ण्यन्ते **रोपक** इति, **रोहते**श्च **रोहक** इति सिद्ध्यति, धातूनामनेकार्थत्वात् बीजजन्मनि उभयत्र वृत्तिरपि सुलभा; तथापि धातूनामनेकार्थत्वेऽपि, न सर्वेषां सर्वार्थकत्वमित्यतः सूत्रारम्भस्य चारितार्थ्यं बोध्यम्। विस्तरस्तु **न्यासादिषु** बोध्यः।
2. 'दिहिदुंहिमेंहति**रोहती** वहिः—' (व्याघ्रभूतिकारिका 7-2-10) इति वचनात् धातोरस्यानिट्त्वं बोध्यम्। 'हो ढः' (8-2-31) इति ढत्वे, 'षढोः कः सि' (8-2-41) इति ककारे षत्वे च रूपमेवम्।
3. तृजादिषु 'पुगन्त**लघूपधस्य** च' (7-3-86) इति प्रथमं गुणे, तदनन्तरं ढत्व-धत्वष्टुत्वढलोपाः। 'पर्जन्यवल्लक्षणं प्रवर्तते' (परि. 121) इति न्यायेन 'ढ्रलोपे—' (6-3-111) इति दीर्घः—ओकारः— अत्रापि भवतीति बोध्यम्।
4. 'गत्यर्थाकर्मक—' (3-4-72) इत्यादिना कर्तरि कर्मणि च क्तप्रत्ययः।
5. 'क्तिच्क्तौ च—' (3-3-174) इति संज्ञायां क्तप्रत्ययः। **रूढः** = रूढिं गतः।
6. ण्यन्तात् कर्तरि क्तप्रत्यये साधुरयम्। अस्यैव शब्दस्य कपिलकादिगणे (वा. 8-2-18) पाठात् विकल्पेन धात्वादेर्लकारः—**लोहितः** = वर्णविशेषः। अभिधानस्वाभाव्यात् वर्णवाचकत्वमधुना धातोरिति बोध्यम्। **लोहिताया** इति। अत्र अलोहितो लोहितो भवतीति च्व्यन्तात् **लोहित**शब्दात् '**लोहितादि**डाज्भ्यः क्यष्' (3-1-13) इति क्यष्। 'सनाद्यन्ता धातवः' (3-1-32) इति धातुसंज्ञा। 'अ प्रत्ययात्' (3-3-102) इति प्रत्ययान्तादकारप्रत्ययः। **लोहितकः** इति अत्र '**लोहितान्मणौ**' (5-4-30) इति स्वार्थे कन्प्रत्ययः। '**लोहितकं** मुखम्' इत्यत्र तु 'वर्णे चानित्ये' (5-4-31) इत्यनित्यवर्णवाचकात् **लोहित**शब्दात् स्वार्थे कन्प्रत्ययः।

A. 'विसृत्वरै**रम्बुरुहां** रजोभिः यमस्वसुश्चित इवोदभारः ॥' शि. व. 3. 11.

[1]रुहः-रोहः, प्ररुहः-प्ररोहः, [2]पाणिरुहः[A]-भूरुहः-उर्वीरुहः-शिरोरुहः-सरोरुहम्, [3]न्यग्रोधः, [4]वीरुत्[B], [5]विरोही-रोहिणी, [6]रोहणः, रोपः-रोहः, [7]धान्यरोपी, रुरुक्षुः-रोरोहः;

रोढव्यम्, रोपयितव्यम्-रोहयितव्यम्, रुरुक्षितव्यम्, रोरुहितव्यम्;
रोहणीयम्, रोपणीयम्-रोहणीयम्, रुरुक्षणीयम्, रोरुहणीयम्;
रोह्यम्, रोप्यम्-रोह्यम्, रुरुक्ष्यम्, रोरुह्यम्;
ईषद्रोहः-दूरोहः-सुरोहः; — — —
रुह्यमाणः, रोप्यमाणः-रोह्यमाणः, रुरुक्ष्यमाणः, रोरुह्यमाणः;
रोहः, आरोपः-रोहः, रुरुक्षः, रोरुहः;
रोढुम्, रोपयितुम्-रोहयितुम्, रुरुक्षितुम्, रोरुहितुम्;
रूढिः, [8]रूढिः,

---

1. 'ज्वलितिकसन्तेभ्यः—' (3-1-140) इति कर्तरि वैकल्पिको णप्रत्ययः। णप्रत्ययपक्षे **रोहः** इति सम्पद्यते। तदभावपक्षे '**इगुप**धज्ञा—' (3-1-135) इति कप्रत्यये **रुहः** इति भवति। **रुहः**=मृगविशेषः।
2. 'सुपि स्थः' (3-2-4) इत्यत्र, 'सुपि' इति योगविभागात् पाण्यादिषु सुबन्तेषूपपदेषु कर्तरि कप्रत्ययः। अत्र '**इगुपध**—' (3-1-135) इति कप्रत्यय इति **प्रक्रियाकौमुदी**। तत्र निरुपपदाधिकारात् चिन्त्यमिदम्।
3. न्यक् रोहतीति **न्यग्रोधः**=वटवृक्षः। बाहुलकात् कर्तरि घञ्। न्यङ्क्वादिषु (7-3-53) पाठात् धातुहकारस्य धकारः।
4. विविधं रोहतीति **वीरुत्**=लता। 'अन्येभ्योऽपि दृश्यते' (3-2-178) इति क्विपि, न्यङ्क्वादित्वात् (7-3-53) हकारस्य धकारः। 'अन्येषामपि दृश्यते' (6-3-137) इति दीर्घः।
5. विशेषेण रोहतीति **विरोही** तृणादयः। तद्धर्मिणि णिनिः। केवलाण्णिनिप्रत्ययेऽपि **रोही** इति भवति। तदन्तात् स्त्रियां नान्तत्वेन ङीपि **रोहिणी** इति।
6. नन्द्यादित्वात् (3-1-134) कर्तरि ल्युः। **रोहणः**=रत्नपर्वतः।
7. धान्यानि रोपयतीति **धान्यरोपी**। ण्यन्तात् णिनिः।
8. संज्ञायां क्तिच्। ढत्वष्टुत्वढलोपदीर्घाः यथालक्षणमिह बोध्याः।

A. 'पीने भटस्योरसि वीक्ष्य भुग्नान् तनुत्वचः **पाणिरुहान्** सुमध्या।' भ.का.11-8.

B. '……**वीरुत्**तिभृङ्गकुलैररंसीत्॥' वा. वि. 3. 17.



[1]बीजरुहाकुर्वन्, प्राजरुहाकुर्वन्, रोपणा-रोहणा, आरुरुक्षा, रोरुहा;
रोहणम्, रोपणम्-रोहणम्, रुरुक्षणम्, रोरुहणम्;
रूढ्वा, रोपयित्वा-रोहयित्वा, रुरुक्षित्वा, रोरुहित्वा;
आरुह्य, आरोप्य-आरोह्य, आरुरुक्ष्य, आरोरुह्य;
रोहम् २, रूढ्वा २, } रोपम् २-रोहम् २, रोपयित्वा २-रोहयित्वा २, } रुरुक्षम् २, रुरुक्षित्वा २, } रोरुहम् २; रोरुहित्वा २; }
[2]रोहिः, [3]रोहित्, [4]रोहितः-लोहितः, [5]रौहिषः।

## (1433) "रूक्ष पारुष्ये" (X-चुरादिः-1910. अक. सेट्. उभ)

### अदन्तः।

**मा. धा. वृत्तौ 'रुक्षति इति शपि'** इति दर्शनात् भ्वादौ 'रुक्ष' इति धातुः पूर्वं स्यात्, अधुना भ्रष्टः इति ज्ञायते।

रूक्षकः-क्षिका, रुरूक्षयिषकः-षिका, रूक्षयिता-त्री, रुरूक्षयिषिता-त्री; इत्यादीनि रूपाणि सर्वाणि चौरादिक**चूर्णयति**वत् (550) बोध्यानि। युचि रूक्षणा[A] इति।

---

1. बीजं रोहयतीत्यर्थे अन्तर्भावितण्यर्थादस्मात् मूलविभुजादित्वात् (वा. 3-2-5) कर्तरि कप्रत्ययः। तदन्तात् स्त्रियां टापि **बीजरुहा** इति सम्पद्यते। साक्षात्प्रभृतिषु (1-4-74) गणे **बीजरुहा** इति पाठादस्य कृञो योगे गतिसंज्ञा। 'ते प्राग् धातोः' (1-4-80) इति धातोः पूर्वमस्य प्रयोगः। '**कुगति**प्रादयः' (2-2-18) इति समासः। **बीजरुहाकुर्वन्**=कैशाः छिन्नाः पुना रोहयन् इत्यर्थः। एवं **प्राजरुहा**कुर्वन् इत्यत्रापि बोध्यम्।
2. 'हृपिशि**रुहि**—' [द. उ. 1-47] इतीन्प्रत्ययः। रोहतीति **रोहिः**=जन्म।
3. 'हृसृ**रुहि**—' [द. उ. 6-3] इतीतिप्रत्ययः। **रोहित्**=वीरुत्प्रकारः, सूर्योऽग्निश्च।
4. '**रुहे** रश्च लो वा' [द. उ. 6-13] इतीतन्प्रत्ययः, रेफस्य लकारश्च वा भवति।
5. '**रुहेर्वृद्धिश्च**' [द. उ. 9. 4] इति टिषच्प्रत्यये धातोर्वृद्धौ च **रौहिषः** इति भवति। **रौहिषः**=तृणजातिः, स्त्रियां षित्वात् ङीषि **रौहिषी**=दूर्वा।

A. '……..मोमूत्रितारिरति**रूक्षणया** रणेषु।' धा. का. 3. 59.

(1434) "रूप रूपक्रियायाम्" (X-चुरादिः-1933. अक. सेट्. उभ.)

अदन्तः ।

'रूपक्रिया=राजमुद्रादिरूपस्य करणम् ।

'—रूपदर्शनम् वा' इति क्षीरस्वामी ।

रूपकः-पिका, रुरूपयिषकः-षिका, रूपयिता-त्री, रुरूपयिषिता-त्री ; इत्यादीनि समस्तान्यपि रूपाणि चौरादिकगूरयतिवत् (418) ज्ञेयानि । [1]रूप्यम्, [2]रूपकम् ।

(1435) "रूष हिंसार्थः" (I-भ्वादिः-678. सक. सेट्. पर.)

"—'रूष भूषायाम्' इति सुधाकरः ।" इति सुधाकरपाठत्वेन मा. धा. वृत्तिः । '—आलेपने इत्येके' इति धा. का. (1-86) । सि. कौमुद्यां तु स्वतन्त्रेण पठ्यते । क्षीरतरङ्गिण्याम् अयं धातुः न दृश्यते ।

रूषकः-षिका, रूषकः-षिका, रुरूषिषकः-षिका, रोरूषकः-षिका; रूषिता-त्री, रूषयिता-त्री रुरूषिषिता-त्री, रोरूषिता-त्री ; इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिकचूषतिवत् (552) ज्ञेयानि । कर्मणि क्तप्रत्यये—[A]रूषितः इति ।

(1436) "रेकृ शङ्कायाम्" (I-भ्वादिः-80. अक. सेट्. आत्म.)

"आङ्पूर्वः संशये ; 'आरेकं संशयं प्राहुः—' इति वचनात् ।" इति मा. धा. वृत्तिः ।

रेककः-किका, रेककः-किका, रिरेकिषकः-षिका, रेरेककः-किका ;

1. 'अचो यत्' (3-1-97) इति यत्प्रत्ययः । रूप्यम्=राजकीया द्रव्यादिरूपा मुद्रा । स्वार्थे कनि रूप्यकम् इत्यपि साधुः ।
2. 'क्वुन् शिल्पिसंज्ञयोः—' [द. उ. 3.5] इति संज्ञायां क्वुन् । यद्वाऽत्र 'लिङ्गमशिष्यं लोकाश्रितत्वात् लिङ्गस्य' इति शाब्दिकमर्यादाश्रयणात् 'संज्ञायाम्' (3-3-109) इति ण्वुलि स्त्र्यधिकारविहितत्वेऽपि नपुंसकलिङ्गत्वं बोध्यम् । रूपकम्=अर्थालङ्कारभेदः, नाटकादि च । नाटकादौ तु बोध्ये दर्शनार्थकत्वम्, अन्यत्र मुद्रार्थकत्वमिति विशेषः ।

A. '...... खेदं च मूषसि कृपारसरूषितात्मन् ।' धा. का. 1.86.



रेकिता-त्री, रेकयिता-त्री, रिरेकिषिता-त्री, रेरेकिता-त्री ; इत्यादीनि समस्तान्यपि रूपाणि भौवादिककेपतिवत् (261) बोध्यानि ।

(1437) "रेजृ दीप्तौ" (I-भ्वादिः. अक. सेट्. आत्म.)

धातुरयं चन्द्रसम्मतपाठत्वेन क्षीरतरङ्गिण्यादिषु उपात्तः । "अत्र रेजिरपि क्वचित् पठ्यते, तदनार्षमिव । यदाह भट्टभास्करः "—'रेजते अग्ने पृथिवी मखेभ्यः—' इत्यत्र राजतेश्छान्दसत्वम् ।' इति ।" इति मा. धातुवृत्तिः ।

रेजकः-जिका, रेजकः-जिका, रिरेजिषकः-षिका, रेरेजकः-जिका ; रेजिता-त्री, रेजयिता-त्री, रिरेजिषिता-त्री, रेरेजिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकतेजतिवत् (779) ज्ञेयानि ।

(1438) "रेटृ परिभाषणे" (I-भ्वादिः-864. सक. सेट्. उभ.)

'—याचने च इति द्रुमे' इति धा. का. व्याख्यायाम् (2-25) ।

रेटकः-टिका, रेटकः-टिका, रिरेटिषकः-षिका, रेरेटकः-टिका ; रेटिता-त्री, रेटयिता-त्री, रिरेटिषिता-त्री, रेरेटिता त्री ; इत्यादिकानि सर्वाण्यपि रूपाणि भौवादिककेलतिवत् (262) ज्ञेयानि । शतरि-रेटन्[A] इति ।

(1439) "रेपृ गतौ" (I-भ्वादिः-372. सक. सेट्. आत्म.)

'—शब्दे च' इति क्षीरस्वामी ।

रेपकः-पिका, रेपकः-पिका, रिरेपिषकः-षिका, रेरेपकः-पिका ; रेपिता-त्री, रेपयिता-त्री, रिरेपिषिता-त्री, रेरेपिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककेपतिवत् (261) ज्ञेयानि ।

(1440) "रेभृ शब्दे" (I-भ्वादिः-385. अक. सेट्. आत्म.)

रेभकः-भिका, रेभकः-भिका, रिरेभिषकः-षिका, रेरेभकः-भिका ; रेभिता-त्री, रेभयिता-त्री, रिरेभिषिता-त्री, रेरेभिता-त्री ;

A. 'रेटन्तटा या खलु चातकैश्च चाद्यं जलं प्रोथति दातुमुर्व्याम् ॥' धा. का. 2.25.

इत्यादीनि सर्वाणि रूपाणि भौवादिककेपतिवत् (261) ज्ञेयानि। [1]विरिब्धः = स्वरः, रेभितः, [2]रेभणः, [A]रेभः इमानि रूपाण्यधिकान्यत्रेति विशेषः।

## (1441) " रेवृ प्लवगतौ "

(I-भ्वादिः-507. सक. सेट्. आत्म.) [अ]

'प्लवगतिः=प्लुतिगतिः=' इति मा. धा. वृत्तौ। '—प्लुतिगतौ' इति क्षीरस्वामी।

रेवकः-विका, रेवकः-विका, रिरेविषकः-षिका, रेरेवकः-विका;

---

1. 'क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमस्सक्ताविस्पष्टस्वरानायासभृशेषु' (7-2-18) इति स्वरेऽभिधेये निष्ठायामिडभावः, उपधाया ह्रस्वत्वं च निपात्यते। अन्यत्र **विरेभितः**। 'स्वरे वाच्ये **विरिब्धं** च शब्दार्थाद् **रेभते**र्भवेत्।' इति **प्रक्रियासर्वस्वम्**। अत्रेदं बोध्यम्। **काशिकायाम्** (7-2-18) " .. ...**अन्ये** तु '**विरिभितम्** अन्यत्' इति पठन्ति। (ये ?) **रभिं** (रिभिं ?) सौत्रं धातुं पठन्ति, ते **विरिभित**मिति प्रत्युदाहरन्ति।" इति **विरिब्ध**पदव्याख्यानावसरे प्रतिपादितम्। तेन **रिभ**धातुः सौत्रः कश्चिदस्तीति प्रतीयते। सूत्रेषु तु कुत्रापि नोपात्तोऽयम्। किञ्च, '**ये रिभिं** ......' इत्यादिकेन वाक्येनेह भाव्यमिति, तच्च वाक्यं व्याख्यान्तर्गतं प्रमादेन मूल एव निक्षिप्तं स्यादिति च भाति।

2. '**चलनशब्दार्थादकर्मकात्**—' (3-2-148) इति ताच्छीलिको युच्प्रत्ययः।

A. 'प्राचीभ्य**रेभैः** पशवोऽम्भसानिधिप्ररम्भणस्तम्भिभिरागता व्रजम्।' धा. का. 1-50.

[अ] " अत्र **मैत्रेयः 'प्लव'** इति धात्वन्तरमाह, तच्चिन्त्यम्, यदि हि स्यात् **आप्लाव**शब्दस्यास्मात् घञि सिद्धौ तदर्थं 'विभाषाऽऽङि **रुप्लुवोः**' (3-3-50) इति **प्लुवः** पक्षे घञ्विधानमनर्थकं स्यात्। तथा **प्लुङो** णौ वृद्ध्यावादेशयोश्चङि णौ कृतस्य स्थानिवत्त्वात् प्लुशब्दस्य द्विरुक्तावपुप्लुवदिति नित्ये प्राप्ते पक्षे **अपिप्लवदिति** सिद्ध्यर्थं 'स्रवतिशृणोतिद्रवतिप्रवति**प्लवति**च्यवतीनां वा' (7-4-81) इति उकारस्येत्त्वविधानमनर्थकं स्यादिति। सति ह्यस्मिन्ननेनैवा**पिप्लवत्** इति भविष्यति। अत एव किलापरितुष्यन् **मैत्रेयो**ऽपि "**'प्लव इत्येके'** इत्याह" इति **माधवधातुवृत्ति**वाक्यमिहानुसन्धेयम्।



रेविता-त्री, रेवयिता-त्री, रिरेविषिता-त्री, रेरेविता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककेपतिवत् (261) ज्ञेयानि। [1]रेवः-रेवा, [2]रेवणः इमानि अधिकान्यत्रेति विशेषः।

## (1442) " रेषृ अव्यक्ते शब्दे "

(I-भ्वादिः-620. अक. सेट्. आत्म.)

धातुममुं क्षीरस्वामी चन्द्रसम्मतत्वेन पठति। अयं स्वभावाद् वृकध्वनौ वर्तते। रेषकः-षिका, रेषकः-षिका, रिरेषिषकः-षिका, रेरेषकः-षिका; रेषिता-त्री, रेषयिता-त्री, रिरेषिषिता-त्री, रेरेषिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकगेपतिवत् (429) बोध्यानि। [3]रेषणः, [4]रेषा, [A]रेषः, क्विपि-रेट्-रेड्-रेषौ-रेषः इत्यस्य विशेषः।

## (1443) " रै शब्दे " (I-भ्वादिः-909. अक. अनि. पर.)

'रै शब्दे रायतीतीष्टं राऽऽदाने राति शब्लुकि॥' (श्लो. 11) इति देवः।

रायकः-यिका, रापकः-पिका, रिरासकः-सिका, रारायकः-यिका;

राता-रात्री, रापयिता-त्री, रिरासिता-त्री, रारायिता-त्री;

इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककायतिवत् (263) बोध्यानि।

---

1. अचि प्रत्यये **रेवः** इति रूपम्। स्त्रियाम् अजादिपाठात् 'अजाद्यतष्टाप्' (4-1-4) इति टापि **रेवा** इति। **रेवा** = नर्मदा।

2. '**चलन**शब्दार्थादकर्मकाद्युच्' (3-2-148) इति, '**अनुदात्तेतश्च हलादेः**' (3-2-149) इति वा युचि रूपमेवम्।

3. 'चलन**शब्दार्थादकर्मकात्**—' (3-2-148) इति ताच्छीलिको युच्प्रत्ययः।

4. 'गुरोश्च हलः' (3-3-103) इत्यकारप्रत्ययः। **रेषा** = वृकरवः। तदुक्तं **केशवस्वामिना** —" कौक्षे कर्दति, पर्दते गुदरवे, **रेषेति** वार्के भवेद्, बुक्केति श्वरवे भषेति, हयजे हेषेति हेषेति च।" इति **मा. धा. वृत्तिः**।

A. 'सुप्रेषितान् पथि सरेषवृके सहेषं हेषास्तकासरमदान् अतिभासुराङ्गान्।' धा. का. 1-79.

शतरि [A]रायन्-न्ती, [1]कीरः ।

(1444) "रोडृ उन्मादे" (I-भ्वादिः-356. अक. सेट्. पर.)

केचिदमुं धातुं न पठन्ति ।

रोडकः-डिका, [B]प्ररोडकः-डिका, [2]रुरोडिषकः-षिका, रोरोडकः-डिका ;
रोडिता-त्री, रोडयिता-त्री, रुरोडिषिता-त्री, रोरोडिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकखोरतिवत् (363) बोध्यानि ।

(1445) "रौडृ अनादरे" (I-भ्वादिः-355. सक. सेट्. पर.)

'रौटृ—' इति केचित् ।

रौडकः-डिका, रौडकः-डिका, रुरौडिषकः-षिका, [3]रोरौडकः-डिका ;
रौडिता-त्री, रौडयिता-त्री, रुरौडिषिता-त्री, रोरौडिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकखोरतिवत् (363) बोध्यानि । [C]रौडयः ।

---

1. 'की' इति **रायति** = शब्दायतेऽसाविति **कीरः** = शुकः, शारिका वा । 'सुपि स्थः' (3-2-4) इत्यत्र, 'सुपि' इति योगविभागात् कर्तरि कप्रत्यये, '**आतो** लोप इटि च' (6-4-64) इत्याकारलोपे च रूपमेवम् ।
2. सन्नन्ते द्वित्वादिकेषु कृतेषु 'ह्रस्वः' (7-4-59) इत्यभ्यासस्य ह्रस्वः । स च 'एच इग्घ्रस्वादेशे' (1-1-48) इति परिभाषितत्वात् अत्रोकाररूप इति ज्ञेयम् ।
3. यङन्ते द्वित्वादिकेषु कृतेषु, 'ह्रस्वः' (7-4-59) इत्यभ्यासह्रस्वः । 'गुणो यङ्लुकोः' (7-4-82) इति गुणः । एवञ्चात्र पूर्वखण्डे ओकारः, उत्तरखण्डे औकार इति भेदो बोध्यः ।

A. '**राय**द्धयस्त्यानरुचौ रथेऽपि तं भक्तितिष्ठ्यापयिषुं स दृष्ट्वा ।' धा. का. 2.31.
B. '**प्ररोडका**नङ्गविलोलितैर्नॄनान् रताडद्भिर्ललनाजनैः कलैः ॥' धा. का. 1.46.
C. 'अकद्धरिकीडनभूततोडकान् प्रहूडितान् होडद**रौडय**भिक्षुकैः ।' धा. का. 1.46.

श्रीगुरुभ्यो नमः

---

# शोधनिका

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 803 | 8 | दुधूनयिषयमाणः, | दुधूनयिषमाणः |
| 804 | 10 | दोधूप्यमानः | दोधूपिष्यमाणः |
| 805 | 28 | ......जनदः | ......जनदाः |
| 806 | 6 | दुधूसयिष्यन् | दुधूसयिषन् |
| ,, | 9 | ...क्षीरस्वामी । | क्षीरस्वामी । इति पुरुषकारः । (श्लो. 29) |
| 807 | 21 | ...103 | ...104 |
| 808 | 3 | धृज् | धृज |
| ,, | 17 | भौत्रादिधरतिकत्रत् | भौवादिकधरतिवत् |
| 809 | 21 | ...103 | ...104 |
| 810 | 15 | ...40 | ...90 |
| 811 | 12 | षिका; | षिका, देधिरकः-रिका; |
| 812 | 10 | इत्यात्त्वे, | इत्यात्वे (एवमुत्तरत्रापि 12, 21, 22, पङ्क्तिषु) |
| 816 | 7 | दिध्मासना, | दिध्मासा, |
| 827 | 10 | 659 | 658 |
| 828 | 18 | 391 | 394 |
| 830 | 18 | ङीप् | ङीष् |
| 831 | 7 | पिपक्षयिषिष्यमाणः; | पिपक्षयिषमाणः; |
| 833 | 29 | (वा. | (काशिकायाम्-वा.) |
| 838 | 2 | पणयमानः, | पाणयमानः, |
| 839 | 17 | [6]पतकः | [5]पातकः |
| 841 | 7 | ...गत्यात्यस्त... | ...गतात्यस्त... |
| 848 | 18 | [4]पर्पः | [3]पर्पः । |
| ,, | 26 | [4]पर्प्यते...... | [3]पर्प्यते...... |
| 854 | 3 | पापः, | पायः, |
| 855 | 19 | सुरापाणः | सुरापाणाः |
| 871 | 31 | 22-2 | 2- 22. |
| 874 | 17 | पुष्यन् | पुष्प्यन् |
| 877 | 7 | विपविषा, | पिपविषा, |
| 878 | 11 | पुनाति | पुनती |
| 885 | 26 | इत्युत्त्वे | इत्युत्वे |
| 895 | 30 | ...दात्त्वं | ...दात्वं |
| 902 | 7 | 206 | 269 |
| 903 | 6 | 206 | 269 |
| 913 | 23 | घटित | घटक |
| 915 | 19 | ञ्झितम् । | ज्झितम् । |
| 917 | 26 | झषस्तधोः | झषस्तथोः |
| 918 | 3 | बन्धयिषयन् | बन्धयिष्यन् |

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 923 | 6 | ओष्ठ्यादि | दन्तोष्ठ्यादि |
| 924 | 15 | वेलल: | बेलक: |
| ,, | 19 | दन्त्यौष्ठ्यादिं | दन्तोष्ठ्यादिं |
| 949 | 7 | बाभाम ; | बाभाम: ; |
| 966 | 14 | 3-3-94 | 3-3-108 |
| 969 | 9 | षिका, | र्षिका, |
| ,, | 16 | तस्यां | तस्य |
| 980 | 15 | इत्संज्ञ | इत्संज्ञां |
| 981 | 16 | भ्रष्टा | भ्रष्टा |
| 984 | 4 | 5बभ्राजिवान्, बभ्राजिवान्- | 5बभ्राजिवान्, |
| 1006 | 28 | धार्यते | धारयति |
| 1008 | 19 | कशान्- | मशान्- |
| 1011 | 14 | -मज्जनौ-मज्जन:, | मज्जानौ-मज्जान:, |
| 1020 | 9 | मिमिच्छषक: | मिमिच्छिषक: |
| 1021 | 2 | मायक:-पिका, | मायक:-यिका, |
| 1026 | 15 | माण:, इत्या | माण:-मिमेलिषिष्यमाण:, इत्या- |
| 1031 | 8 | सुमय: | सुप्रमय: |
| 1041 | 19 | (4·) | (शाकुन्तले 5.20) |
| 1051 | 12 | सन्नन्ते, | शुद्धे, सन्नन्ते, |
| 1055 | 9 | चर्षति | चर्पयति |
| 1072 | 12 | इति | इति प्रकरणे 'क्विप् च' (3-2-76) इति |
| 1081 | 2 | ...षम् २, | ...षम् २–युयूषम् २ |
| ,, | 3 | ...षित्वा २, | ...षित्वा २–युयूषित्वा २ |
| 1087 | 31 | 6-4-16 | 1-2-26. |
| 1091 | 4 | रागक:-गिका, रिर... | रगक:-गिका, रिर... |
| 1092 | 22 | अय | अयं |
| 1097 | 27 | क्युने.... | क्वुने... |
| 2000 | 1 | एतदारभ्य पञ्चसु पुटेषु 1100, 1101, 1102, 1103, 1104, इत्येवं क्रमेण पुटसंख्या शोध्या । | |
| 1100 | 3 | रिङ्क्षिता | रिरङ्क्षिता |
| 1108 | 26 | शुषु | शुषि |
| 1111 | 18 | रारायमाण ; | रारायमाण:; |
| ,, | 20 | रापा ; | रापा: ; |
| ,, | 22 | गोर....शुभंर....राप, | गोर:...शुभंर:...राप:, |
| 1112 | 6 | राराध्यमानण: | राराध्यमाण: |
| ,, | 25 | राशदिभ्यां | राशतिभ्यां |